Reg. No. C. 1073

# संस्कृतसाहित्यपरिषत्

Vol. XXI, No. 9 ] [ January, 1939
१८६० शकीये पौषे २१श-वर्षस्य ९म-संख्या

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्








सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारिसम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

# कलिकाता ओरियेण्टाल सिरिज

१। **युक्तिकल्पतरुः**—महाराजश्रीभोजविरचितः। पण्डितश्रीईश्वरचन्द्रशास्त्रिसांख्य-वेदान्त-न्याय-दर्शनतीर्थेन संशोधितः। अत्र राजनीतिः, गृह-दुर्ग-नगरादिनिर्माणम्, छत्र-ध्वजचामरालङ्कारादिनिर्णयः, मणिरत्नाश्वगजादिपरीक्षा, शस्त्र-नौका-यानादिलक्षणानि च सविशेषं निरूपितानीति तत्तद्विषयमनुसन्धित्सूनां महोपयोगोऽयं ग्रन्थः—२॥०)

२। **चाणक्यराजनीतिशास्त्रम्**—विद्वद्वर-जोहान फ्यान् म्यानेन-कृताङ्गलभूमिका-समेतम्—॥।ᐟ०

३। **मुक्ताफलम्**—बोपदेवविरचितम् हेमाद्रिकृतटीकासहितम् वैष्णवानामत्युपादेयतया परिगृहीतं भागवततत्त्वरत्नमिदं डाः श्रीनरेन्द्रनाथ लाहा, पि-एइच. डि.-लिखितबृहदाङ्गल-भूमिकया समलङ्कृतम् खण्डद्वयात्मकम्—६)

४। **चाणक्यकथा**—रविनर्त्तकविरचिता। विशाखदत्तकृत-मुद्राराक्षससंवादिनीयं कथा सुललितपद्यमयी (द्वितीयाङ्कनावृत्तिः)—१)

५। **वक्रोक्तिजीवितम्**—श्रीराजानककुन्तलविरचितं स्वोपज्ञवृत्तिसमेतमतिप्रमाणभूत, मलङ्कारशास्त्रम् डाः श्रीसुशीलकुमार दे, डि. लिट्. महोदयेन संशोधितम्—३॥०)

६। **पद्मपुराणम्**—स्वर्गखण्डस्य पञ्चाध्यायात्मकः शकुन्तलोपाख्यानम् पातालखण्डस्यैका-दशाध्यायात्मक-रघुवंशवर्णनञ्चात्र वङ्गदेशोपलब्धहस्तलिखितमादर्शमाश्रित्य संशोधितमध्यापक-श्रीहरदत्तशर्म्मणा सुबृहद्यङ्गलभाषामयभूमिकायां प्रमाणीकृतञ्च कालिदासीयशकुन्तल-रघुवंशयोर्बीजभूतत्वं पद्मपुराणस्य—२)

७। **जयमङ्गला**—श्रीशङ्कराचार्य-विरचिता। ईश्वरकृष्णकृतसांख्यसप्ततिग्रन्थस्य टीकेयं श्रीहरदत्तशर्म्मणा संशोधिता—२)

८। **योगचिन्तामणिः**—श्रीशिवानन्दसरस्वतीकृतिरतिप्राचीनो ग्रन्थोऽयं योगशास्त्रा-म्बुधिरिति शक्यते वक्तुम्—३)

९। **ब्रह्मसूत्रम्**—श्रीमद्भागवतभाष्यसमेतम्। "অর্থোঽয়ং ব্রহ্মসূত্রাণাং শ্রীমদ্ভাগবতাভিধঃ" ইতি গারুড়বচনস্য যাথার্থ্যং প্রদিদর্শয়িষতা পণ্ডিত-শ্রীহরিদাস-বিদ্যাবাগীশেনাত্র শ্রীমদ্ভাগবতগ্রন্থাদ্ধৃতা গ্রন্থাংশব্রহ্মসূত্রভাষ্যতয়া নিরূপিতাঃ, ব্রহ্মসূত্রাণি চ বঙ্গভাষয়া বিশেষেণ ব্যাখ্যাতানি—২॥০

प्राप्तिस्थानम्—
कलिकाता ओरयेण्टाल बुक एजेन्सी
९ पञ्चानन घोष लेन, कलिकाता।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1939 | १८६०-शकीये पौषे<br>२१श-वर्षस्य ९म-संख्या | Vol XXI, No. 9 |


## कुत्राऽऽस्ते वन-देवता ?

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

वनदेवता ननु वनमध्यमेव अध्यास्ते, कः संशयः ? वन-देवताभिधाना वनाधिष्ठानदेवताः काश्चित् तेषु तेषु काननेषु विहरन्तीति कथं वा ज्ञायते ? महाकवीनां वचन-प्रामाण्यादिति ब्रूमः ; तथाहि—रघुवंशे तावद् द्वितीय-सर्गे,—'शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वन-देवताभिः' ।

'क्षौमं केनचिदिन्दु-पाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपयोग-सुलभो लाक्षा-रसः केनचित् ।
अन्येभ्यो वन-देवता-करतलैरा-पर्व-भागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः' ॥

इति शाकुन्तले, 'त्वाम् इह स्थितवतीम् उपस्थिता गन्धमादन-वनान्त-देवता' । इति कुमारसंभवे ;

मेघसन्देशे—'माम् आकाश-प्रणिहित-भुजं निर्दयाश्लेष-हेतो-
र्लब्धायास्ते कथमपि मया स्वप्न-सन्दर्शनेषु ।

पश्यन्तीनां न खलु बहुशो न स्थली-देवतानां
मुक्ता-स्थूलास्तरु-किसलयेष्वश्रुलेशाः पतन्ति' ॥ इति
भोजचम्प्वाम्—अयोध्या-काण्डे—
'घर्मे निदाघ-किरणस्य करैः कठोरैः
कान्तार-मध्यपदवीषु नखम्पचासु ।
त्वां वीक्ष्य संस्थुल-पदां वन-देवताभि-
र्निन्दिष्यते नियतमेव निमेष-हानिः' ॥ इति

भारत-चम्प्वाम्—प्रथम-स्तबके-वसन्त-वर्णन-गद्ये—

'वनदेवता-वदन-तिलकायमान-तिलकावली-कलिका-पलितम्भावुक-नभो-विभागाः' इति च वन-देवता-नाम्नाम् आम्रेडनम् अनुश्रूयते मुहुः ; ततश्च ग्राम-देवता, सङ्ग्राम-देवता, नाग-देवता, नगर-देवता, वन-देवता, कुल-देवता, बल-देवता, बलि-देवता, धर्म-देवता, नीति-देवता, गीति-देवता, निधि-देवता, तिथि-देवता, अतिथि-देवता । वाग्देवता.........इत्येवं क्रमेण देवतानन्त्यम् अकामेनापि अवश्यमङ्गीकरणीयम् आपतति । रुक्म-वर्णा हि रुक्मिणी कुल-देवी-प्रसादनाय भवानी-प्रासादम् आससाद इति भागवते । किञ्च, कुशावत्यां महार्ह-वर्णास्तरणोपपन्नं रत्न-पर्यङ्कम् अधिशयानः सीता-रामानन्दवर्धनः कुशः अर्धरात्रे अयोध्याऽधिष्ठात्र्या प्रोषित-भर्तृकाकल्प-मण्डितया प्रबोधितः पप्रच्छ—

'का त्वं शुभे कस्य परिग्रहो वा ? किं वा मदभ्यागम-कारणं ते ।
आचक्ष्व, मत्वा वशिनां रघूणां मनः पर-स्त्री-विमुखप्रवृत्ति ॥

देवता प्रत्युवाच—

'वस्वौक-सारामभिभूय साऽहं सौराज्य-बद्धोत्सवया विभूत्या ।
समग्र-शक्तौ त्वयि सूर्य-वंश्ये सति प्रपन्ना करुणामवस्थाम् ॥
विशीर्ण-तल्पाट्टशतो निवेशः पर्यस्तसालः प्रभुणा विना मे ।
विडम्बयत्यस्त-निमग्न-सूर्यं दिनान्तमुग्रानिल-भिन्न-मेघम् ॥

बलिक्रिया--वर्जित-सैकतानि स्नानीयसंसर्गमनाप्नुवन्ति ।
उपान्त-वानीर-गृहाणि दृष्ट्वा शून्यानि दूये सरयू-जलानि' ॥
इति रघुवंशे षोडशसर्गे ।

कैकेय्या प्रतिवद्ध-पट्टाभिषेकतया रामचन्द्रे काननं गते, शून्या अयोध्या-राजधानी भोज-महाराजेन स्व-वाक्येन इत्थम् अयोध्या-काण्डे वर्ण्यते—

'रामानुसार-रस-निर्गत-पौरवर्गा
संस्थान-मात्र-गृह-चत्वर-राजमार्गा ।
निर्मुक्त-भोग-भुजगत्वगिवं क्षणेन
लघ्वीबभूव रघु-पुङ्गव-राजधानी ॥

अत्र सूक्ते 'अहम्' इति अध्याहारेण, "बभूव" इति तिङन्तस्य च उत्तम-पुरुषैक-वचनत्व-कल्पनेन-'राघव-राजधान्यधिदेवता अहम् अयोध्या शून्य-हृदया दुःखयामि' । इति प्रकृते योजनीयम् ;

'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान्' ॥
'येऽप्यन्य-देवता-भक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम्' ॥

इति च भगवदुपदेशानुसारम्—प्रवृत्तेऽस्मिन् यादवाभ्युदय-पद्ये हृद्ये—
'अतियजेत निजां यदि देवताम् उभयतश्च्यवते जुषतेऽप्यघम् ।
क्षिति-भृतैव स-दैवतका वयं वन-वताऽनवता किमहिद्रुहा ?' ॥

यः खलु देवतां पारम्पर्याराधितां प्रसादोन्मुखीं शान्तान्तरङ्गाम् उपेक्ष्य, अन्याम् अनुकम्पा-रहिताम् उग्र-मूर्तिम् उपास्ते, स ऐहिकामुष्मिक-फल-द्वय-लाभ-परिभ्रष्टश्च क्लिष्टश्च दुष्कृत-भाक् च भवति ; श्यामल-शाद्वल-सरस-कासार-परिसरारण्य-सुन्दर-कन्दरः, गो-कुल-पोषण-चणः, 'गो-बर्द्धन' इति अन्वर्थ-नामधेय-भागधेय-भाजनम् उपहारादिभिः सभाज्यताम् अनुदिनम्

आनन्दनिधानम् अयं गिरिः ; नाम्नापि नाम्नायतां गोत्रभित् ; इति प्रोत्साहयति यादवान् भगवान् श्री-कृष्णः। भव-भूति-महाकविः उत्तर-रामचरिते द्वितीयेऽङ्के—आत्रेय्याः, वासन्ती-नाम्न्या वन-देवतायाश्च संभाषणं सरसम् उपनिबबन्ध। तत्र वासन्त्याः—

'यथेच्छं भोग्यं वो वनमिदमयं मे सु-दिवसः,
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया तोयं यदपि तपसां योग्यमशनं—
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥१॥

आत्रेय्याश्च—

प्रिय-प्राया वृत्तिर्विनय-मधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।
पुरो वा पश्चाद्वा तदिदमविपर्यासित-रसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥२॥

अपि च—उपासनं नामेदम् उपास्य-दैवतस्य उपासकस्य च "अहमस्मि भगवो देवते! त्वं वा अहमसि" इति नैरन्तर्येण अभेदानुसन्धानम् ; "अथ योऽन्यां देवताम् उपास्ते—अन्योऽसौ, अन्योऽहमस्मीति, न स वेद-यथा पशुः, एवं स देवानाम्" इति भेदोपासनाया निन्दितत्वात् ;

'कल्याणी सकलाऽपि भूत-सरणिः क्षेम-प्रदा देवताः'
'विद्या-कैरव-कौमुदीं श्रुतिशिरःसीमन्त-मुक्तामणिं
दारान् पद्मभुवस्त्रिलोक-जननीं वन्दे गिरां देवताम्'।

इत्यादि निबबन्ध विद्या-नाथ-महाकविः प्रताप-रुद्रीये।

'दैवी ह्येषा गुण-मयी मम माया दुरत्यया' 'प्रकृतिं मोहिनीं श्रिताः' इति श्रीमद्भगवद्वचनानुसारं मोहमयी-(मुम्बई) (Bombay)—विभागीया आलेख्य-कारा मोहिनी-रूपिणीमेव वन-देवतां वर्णकै रञ्जयन्ति इत्यहो वन-देवता-वैभवम्।

'क ब्रह्म-लोकः क गिरां सवित्री ?
क भूमि-भागाः, क वयं वराकाः ?
दिष्ट्योपलब्धामपि देवतां तां
विक्रीणते वृत्ति-कृते विमूढाः' ॥

'दत्ते त्वया वाङ्मय-रत्न-कोशे विक्रीय भुक्तं किल भुक्तमेव ।
शेषं त्वदङ्घ्र्योः पुनरर्पयेयं दयस्व मीनाक्षि ! पुरेव मह्यम्' ॥

इति पाण्ड्य-देशीय-मधुरा-(Madura DT.) राजधान्यनुशासन-समये 'तिरु-मलै'-नायकस्य आस्थान-पण्डित-तल्लजैः, अमात्य-भूतैश्च-श्री-नील-कण्ठ-दीक्षितैः 'शिव-लीलार्णव'-महाकाव्य-कर्तृभिः इत्थं वाग्देवता च श्री-मीनाक्ष्यम्बिका च प्रस्तुते ( ३५० ) हायनेभ्यः पूर्वम् ;

'हे गोदावरि देवि ! तावक-तटोद्देशे 'कलिङ्गः' कवि-
र्वाग्देवीं बहु-देश-दर्शन-सखीं त्यक्त्वा विरक्तिं गतः ।
एनामर्णव-मध्य-सुप्त-मुरभिन्नाभी-सरोजासनं
ब्रह्माणं गमय क्षितौ कथमियम् एकाकिनी स्थास्यति ?

इति अन्यत्र । स्यादेतत् ; वनेऽधिशेरते कं कं प्रदेशं वन-देवताः ? इतीदं प्रकृतम् अनुसरामः, पायसम् आस्वादयामः—आरण्यका अमूः किल लावण्य-निष्यन्द-सुन्दर-सुप्रतीकाः कानने उच्चतर-गिरि-शिखर-वर्ति-कल्प-पादपानां कोमल-श्यामल-पल्लव-पर्ण-सम्पूर्णेषु डोला-पल्यङ्केषु निषण्णा विषण्ण-वदनं माम् अनिशं पश्यन्त्यः अश्रूणि मुक्ताफल-स्थूलानि नितरां मुहुर्मुहुः स्रावयन्ति, 'प्रायः सर्वो भवति करुणा-वृत्तिरार्द्रान्तरात्मा' इति कविसार्वभौमः—यक्षस्य दशाम्—

'पश्यन्तीनां न खलु बहुशो न स्थली-देवतानां
मुक्ता-स्थूलास्तरु-किसलयेष्वश्रु-लेशाः पतन्ति' ॥

इत्यस्मिन् सुवचने सरसं वर्णयति ; 'विद्युल्लता'-द्वारा पद्य मिदं पूर्ण-सरस्वती विशदयति—

"स्थलीदेवतानाम्=गिरि-वनस्थल्यभिमानिनीनां देवतानाम् ; मुक्ता-

स्थूलाः करुण-रस-विलीन-हृदयतया झटिति अवश्यमेव विगलनात स्थूलाः पृथवः ; तरु-किसलयेषु=तासां तरु-शिखरेषु अवस्थानात्. किसलयानां च निरन्तर-स्थितेः, अश्रु-लेशानां तेष्वेव पतनस्य अवश्यम्भावात ; अश्रु-लेशाः= नयन-जल-बिन्दवः किसलयेष्वश्रु-लेशाः पतन्तीति—अनेन कोमला-रुणेषु पल्लवेषु स्थूलधवल-वर्तुलानाम् अश्रु-बिन्दूनाम् अवश्याय-शीकराणामिव परभाग-लाभात, चट-चट-ध्वनि-प्रादुर्भावाच्च स्फुट-दृश्यत्वम् ;

उज्जयिनी-राजधानी-पावन-तपोवन-परिसरारण्याभोगेषु राजमातङ्ग्या वा शुकश्यामलाया वा पुरश्चरण-वेलायाम् अमूर्वन-देवताः कालिदासः सन्दृष्टवान् किमु ? इति सम्भावयितुम् अस्त्यवकाश इति शम् ।

———

## धर्मपत्नी

[ निबन्धकः—श्रीहाराणचन्द्र-भट्टाचार्यः शास्त्री ]

धर्मपत्नीति पदस्य साधुत्वविषये "संस्कृत-साहित्य-परिषदः" पत्रिकाया एकविंशवर्षस्य सप्तमसंख्यायां मया किञ्चिन्निवेदितम् । तत्र प्रकृतिविकार-भाव एव तादर्थ्यचतुर्थीसमास इति महाभाष्यकारसिद्धान्तं प्रमाणयता "धर्मस्य पति"रिति षष्ठीसमासनिष्पन्ना"द्धर्मपति"शब्दानङीपि "धर्मपत्नी"तिपदं सिद्धयतीति न्यरूपि ।

न केवलं वैदिकधुरन्धरा महाभाष्यकाराः प्रकृतिविकारभावे तादर्थ्य-चतुर्थीसमासमिच्छन्ति । अवैदिका अपि काशिकाकारा अनेकत्र महाभाष्य-मतमनाद्रियमाणा अत्र भाष्याशयमनुरुन्धते । तथाच काशिकासन्दर्भः— "तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यत" इति ( २।१।३६ )।

अस्ति च काशिकाया उपरि काचन टीका "न्यासा"परनाम्नी "काशिकाविवरणपञ्जिके"ति प्रसिद्धा या पुराऽतिसुदुर्लभाऽपि साम्प्रतं वङ्गदेशीय-राजसाहीपत्तनप्रतिष्ठितवारेन्द्रानुसन्धानसमिति (Varendra Research Society, Rajshahi, Bengal.) समुद्यमेन प्राकाश्यं नीता सर्वेषां सुधियां दर्शनगोचरतां गता। सेयं टीका वैयाकरणसम्प्रदाये परमादरपदवीं प्राप्ता प्रौढमनोरमादिग्रन्थेषु क्वचित् क्वचित् प्रमाणत्वेनोपन्यस्ता वर्तते। अस्या न्यास-टीकाया मैत्रेयरक्षितप्रणीता "अनुन्यास" नाम्नी व्याख्या यद्यपि पुरा प्रचलिताऽऽसीत्, उद्धृताश्चास्या अंशविशेषाः सीरदेवकृतायां "परिभाषावृत्तौ", तथापि सेयमधुना दर्शनपथादतीता लुप्तैवेति प्रतिभाति। न्यासकाराश्च जिनेन्द्रबुद्धि-पादाः प्रायेण वङ्गदेशीया आसन्निति सम्भाव्यते। तत्कृताया न्यास-टीकायाः पूर्वस्मिन समये वङ्गदेशान्तर्गते राजसाहीमण्डले पठनपाठना प्राचुर्यमासीदिति बहुज्ञानामतिरोहितम्। वङ्गदेशे च पुरा बौद्धानां प्रावल्य-मवर्तत इति पुरातत्त्वविदः प्रख्यापयन्ति। "बोधिसत्त्वदेशीयाचार्ये"ति ग्रन्थ-पुष्पिकागतविशेषणपदेन नामाक्षरविचारणया च जिनेन्द्रबुद्धिपादानां बौद्धत्वमवसीयते। अन्यदपि प्रमाणं तेषां बौद्धत्वं समर्थयते—खृष्टजन्मन उत्तरवर्तिन्यां पञ्चमशताब्द्यां बौद्धेषु महादार्शनिकाः साकारविज्ञानवादिनो दिङ्नागाचार्याः प्रादुरभूवन्। तत्प्रणीते "प्रमाणसमुच्चय" नामके बौद्ध-न्यायग्रन्थे जिनेन्द्रबुद्धिपादा "विशालामलवती" नाम्नीं टीकामेकां व्यर-चयन्*। जिनेन्द्रबुद्धिपादानां सर्वतोमुखे पाण्डित्ये बौद्धत्वे चैतदपि प्रमाणम्। इमे न्यासकारा अपि महाभाष्यमतमनुवर्तमानाः प्रकृतिविकारभाव एव तादर्थ्य-चतुर्थीसमासमभिप्रयन्ति। तदुक्तं न्यासे—"तस्माद् वलिरक्षितग्रहणा-

---

* स्वर्गत-डाक्टर-सार् व्रजेन्द्रनाथ-शील-लिखितायामीङ्लिश्भाषामय्यां प्रमाण-समुच्चय (Edited by H. R. R. Iyenger, Mysore.) भूमिकायां द्रष्टव्य-मेतत्। सेयं "विशालामलवती" टीका संस्कृतवाङ्मयी नाधुनोपलभ्यते; एतदीयतिब्बतभाषानुवाद एव प्रचरति।

लिङ्गात् तादर्थ्ये प्रकृतिविकारभावे समासो भवतीति विज्ञायत" इति (२।२।३६)।

काशिकाया अपरेण व्याख्यात्रा कैयटादेरप्यर्वाचीनेन हरदत्तेन स्वोपज्ञे पदमञ्जरीग्रन्थे "प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्" इत्यभिहितम्; मूलग्रन्थस्य प्राचीनव्याख्यायाश्च विरुद्धं तदिति सुव्यक्तं सुधियाम्। इदमत्रावधेयम्—येन प्रकृतिविकारभावाभावेऽपि समासोऽयमभ्युपेतस्तेन अश्वघासादिष्वप्रकृतिविकारभूतेषु तादर्थ्यचतुर्थीसमासं स्वीकृत्यापि रन्धनाय स्थालीत्यादावनभिधानाच्चतुर्थीसमासाभाव आस्थितः। एवं च प्रकृतिविकारभावाभावे क्वचित् चतुर्थीसमासः क्वचिन्नेति तन्मतं फलितम्। तथाच तन्मते क्व समासः क्व नेत्यनुगतरूपेण निर्णेतुमशक्यतया गौरवापादकोऽननुगमदोषो बलादापतितः। महाभाष्यानुसारिसिद्धान्ते तु प्रकृतिविकारभावे सर्वत्र चतुर्थीसमासः, प्रकृतिविकारभावाभावे तु नेत्यनुगमयितुं शक्यत्वान्महल्लाघवम्। एवं च लाघवानुगृहीतत्वान्महाभाष्यमतमुपादेयमितरच्च हेयमिति बालानामप्यवबोधक्षममेतत्।

कैश्चिद् धर्मपत्नीशब्दे षष्ठीसमासे स्वीकृते सम्बन्धांशेऽनुवाददोषशङ्कोद्भाविता तत्रेयं मार्जना,—"पत्युर्नो यज्ञसंयोगे" (४।१।३३) इति सूत्रनिष्पन्नेन पत्नीशब्देन धर्मशब्दस्य षष्ठीसमासेऽभ्युपगते स्यादेष दोषः; न तु तथाऽङ्गीक्रियते। किन्तु धर्मशब्दस्य पतिशब्देन षष्ठीसमासादनन्तरं "विभाषा सपूर्वस्य" (४।१।३४) इति सूत्रान्तरेण विकल्पेन तत्र नकारो ङीप् च विधीयेते। अत्र पक्षे पत्नीशब्देन सम्बन्धस्यानभिधानान्नानुवाददोषशङ्का समुन्मिषति। सूत्रे च पूर्वसूत्रात् "पत्युरि"त्येतन्मात्रमनुवर्तते नतु "यज्ञसंयोग" इति। अन्यथैतत्सूत्रस्य "आशापत्नी"त्युदाहरणं भाष्योक्तमसमञ्जसमापद्येत।

अस्त्यत्र द्वितीयेयमाशङ्का—स्त्रिया धर्मसम्बन्धः कथमिति। तत्रेदं समाधानमभिधीयते,—

महाभाष्यादौ धर्मशब्दोऽभ्युदयजनकेऽदृष्टविशेषे प्रयुक्तो दृश्यते*। तादृशादृष्टजनकश्च यज्ञादिस्तत्र च स्त्रियाः स्वातन्त्र्येण कर्तृत्वाभावेऽपि पत्या सहकर्तृत्वं विद्यत एव **। तथाच यज्ञादिकर्मकर्तृत्वद्वारेण तज्जनितेनाभ्युदयजनकादृष्टविशेषेण पुंवत् स्त्रिया अपि सम्बन्धोऽक्षत एव।

धर्मशब्दस्य शास्त्रविहितक्रियादिबोधकत्वमपि व्याकरणभाष्यवार्तिककारयोः सम्मतम् ***। तादृशे च धर्मे भगवता पतञ्जलिनैव स्त्रियाः सम्बन्धः प्रतिपादितः ;—"पतिशब्दोऽयमैश्वर्य-वाची। सर्वेण च गृहस्थेन पञ्च महायज्ञा निर्वर्त्या यच्चादः सायं प्रातर्होमचरुपुरोडाशान्निर्वपति, तस्यासावीष्टे" इति (४।१।३३)। एवं च पत्नीधर्मपत्नीशब्दयोः फलतस्तुल्यार्थता पर्यवस्यतीत्यन्यदेतत्।

---

* "ज्ञाने धर्म इति चेत्तथाऽधर्मः।"—(कात्यायनवार्तिके) ज्ञाने धर्म इति चेत्तथाऽधर्मः प्राप्नोति।"—महाभाष्यपस्पशाह्निके।

"लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते।" (कात्यायनवार्तिके)।

** पूर्वमीमांसादर्शनषष्ठाध्यायप्रथमपादे विस्तरेण निरूपितमिदमिति तत एवावधारणीयम्।

*** द्रष्टव्यम्—"सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानाद्यथा लौकिकवैदिकेषु (वा०)। सिद्धमेतत्। कथम्? धर्मोपदेशनमिदं शास्त्रम्" इत्यादि (६।१।८४)।

अपि च, चोदनालक्षणोऽर्थो धर्म इति (पू० मी० १।१।२) सूत्रयतो भगवतो जैमिनेरपि सम्मतमिदम्।

दृश्यते च—"धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्॥"

इति श्रीमद्भागवतप्रथमस्कन्धपद्ये विहितक्रियायां धर्मशब्दप्रयोगः।

---

# श्रीहर्षबाणभट्टीयम्

[ निबन्धकः—आर्-रङ्गाचार्यः ]

( प्रस्तावना )

१ "पुरा किल भगवान्परमेष्ठी पद्मविष्टरे समुपविष्टः, ब्रह्मोद्याः कथाः कुर्वन्, पुरंदरप्रमुखैर्गीर्वाणगणैः परिवृतः कदाचिदासांचक्रे। तं च सप्तर्षिपुरःसराः देवाश्च, ऋषयश्च सिषेविरे। केचित्सामानि जगुः। तेषु दुर्वासा अन्येन मुनिना सह कलहायमानः, साम गायन् क्रोधान्धो विस्वरमकरोत्। सर्वेषु शापभयात् तूष्णीं भूतेषु, देवी सरस्वती तच्छ्रुत्वा जहास। तथा हसन्तीं तां दृष्ट्वा कुपितो मुनिः शापजलं जग्राह। "मर्षय भगवन् !!" इति सभ्यैर्निवार्यमाणोऽपि रोषविवशः स हा !! दुर्विनीते ! अधस्ताद् गच्छ मर्त्यलोकमित्युक्त्वा तच्छापजलं विससर्ज।"

२ "सरस्वती च ब्रह्मलोकतो मर्त्यलोकमवततार। शोणाख्यमहानदस्य तीरे निवासमरचयत्। कतिपयदिवसापगमे कदाचिदसौ तेन पथा समायान्तमष्टादशवर्षदेशीयं युवानं कंचिदद्राक्षीत्, अयं खलु च्यवनस्य दधीचो नाम तनयः। अस्य तु जननी, शर्यातस्य सुता, राजपुत्री सुकन्या नाम। तं युवानं दृष्ट्वा सरस्वती चकमे तेन साकमेकं दिवसमिव वत्सरमेकमनयत्।"

३ "अथ दैवयोगात् सरस्वती गर्भं बभार। असूत चानेहसा सर्वलक्षणाभिरामं तनयम्। तस्य च सकलाः कला मत्प्रसादात्स्वयमाविर्भविष्यन्ति," इति वरमदात्। ततः सावित्र्या सह पुनरपि ब्रह्मलोकमारुरोह।

४ "दधीचः अक्षमालां नाम मुनिकन्याम् आत्मसूनोः संवर्धनाय नियुज्य तपसे वनमगात्। अक्षमालायाश्च एकस्तनयो जातः। एकस्तयोः

सारस्वताख्य एवाभवत्। द्वितीयोऽपि वत्सनामाऽभवत। आसीच्च तयोः सोदर्ययोरिव स्पृहणीया प्रीतिः। अथ सारस्वतो मातुर्महिम्ना—आत्मन्याविर्भूतमशेषविद्यासंभारं सदयं सुहृदि वत्से संचारयामास। तस्मिन्नेव प्रदेशे कृतदारपरिग्रहस्यास्य प्रीत्या प्रीतिकूटनामस्थानं निवासं चकार।"

५ "वत्साद् विपुलो भागीरथीप्रवाह इव वात्स्यायनवंशः प्रावर्तत। यस्माच्च वात्स्यायना नाम मुनयः क्रमशोऽजायन्त। तस्मिन्कुले "कुबेरनामा" द्विजो जन्म लेभे। तस्य च "अच्युतः" "ईशानः" "हरः" "पाशुपत"श्चेति चत्वारो नारायणबाहुदण्डा इव तनयाः समजनिषत। तेषु पाशुपतस्यैक एव अर्थपतिरिति नाम्ना सूनुरभवत। स च "भृगुम्" "हंसम्" "शुचिम्" "कविम्" महीदत्तम् "धर्मम्" "जातवेदसम्" "चित्रभानुम्" "त्र्यक्षम्" "अहिदत्तम्" विश्वरूपश्चेति" एकादश रुद्रानिव पवित्रान् पुत्रानजनयत्। तेषां मध्ये चित्रभानू राजदेव्यभिधायां ब्राह्मण्यां बाणमात्मजं लेभे।"

६ "बाणश्च बाल एव विधिवशाज्जनन्या व्ययुज्यत। पुत्रस्नेहात् पितैवास्य मातृतामकरोत्। गच्छता च कालेन संस्थिते पितरि आरूढयौवनः शैशवोचितानि अनेकानि चापलान्याचरन्नित्वरो बभूव। अथ शनैः शनैः राजकुलानि गुरुकुलानि च सेवमानः पुनरपि तामेव वैपश्चितीमात्मवंशोचितां वृत्तिमभजत।"

७ "श्रीमान कवि-प्रवरो "बाणभट्टः" अयमेव। एष खल्वव्याजवल्लभो गिरां देव्याः। कुलभवनं कलानाम्, प्रस्यन्दो रसानाम्, मूर्धन्यश्च महाकवीनाम्।" अनेन संग्रथितं गद्यकाव्यरत्नं "श्रीहर्षचरितं" नाम।

अस्य च नायकः "श्रीहर्षदेवः" अस्यैव च "बाणभट्टः" सभ्यश्च, सुहृच्च, विश्वासभाजनं चाऽभवत्। मध्यमे वयसि वर्तमाने, युवकलोकसुलभानि चापलान्यपदिश्य तदानींतना मत्सरिणः अस्मिन कविवरे श्रीहर्षस्य महतीमप्रीतिं जनयामासुः। शनैः शनैः पुनः संचरति दिगन्तरेषु

कविप्रवरस्यास्य शारदेन्दुकान्तिसुन्दरे कीर्तिप्रसरे "श्रीहर्षः" अस्मिन् समुपजातप्रमोदः कृतविस्रम्भश्च बभूव।

८ यदि नाम बाणभट्टोपज्ञं "श्रीहर्षचरितं" चीनपान्थस्य (Hinen-danga. 630-644) ह्वयनसङ्गस्य भारतभ्रमणवृत्तं चेत्येतद्ग्रन्थरत्नद्वयं लोके नाभविष्यताम्, नियतं श्रीहर्षकथा तदानीमेवास्तमिताऽभविष्यत्।

श्रीहर्षः

९ आसीत् देहल्या (Delhi) उत्तरतः स्थाण्वीश्वराख्यो महान्जन-पदविशेषः। तत्र प्रजाकर्मणि दक्षो राजा "पुष्पभूति"रिति नाम्ना बभूव। स च लोकतो दाक्षिणात्यस्य भैरवाचार्यस्य महिमानमाकर्ण्य तमुपससार, उपचचार च। तस्यानुग्रहात् "पुष्पभूतेः" हरिवंश इव महान्राजवंशो निर्जगाम। तस्मिल्लब्धजन्मा प्रतापशीलः प्रभाकरवर्द्धनो नाम राजा-धिराजः। तस्य च यशोवती नाम महिषी बभूव।

१० निसर्गत एव स महीपतिरादित्यभक्तः। आदित्यस्यानुग्रहाद् "यशोवत्या"मसौ राजवर्धनहर्षनामानौ द्वौ पुत्रौ, राज्यश्रीनामैकं कन्या-रत्नं चालभत। क्रमेण तौ पुत्रौ यौवनमवतेरतुः। प्रांशुसालाभिरामौ सर्वलोकभरणक्षमौ बभूवतुः। राज्यश्रीरपि परिमितैरेव दिवसैः तरुणी भूता। तां च "गृहवर्मा" नाम कान्यकुब्जेश्वरो विवाहविधिना—सह धर्मचरीमङ्गीचकार।

११ ज्वरेण पितरि दिवं गते, शत्रुणा च भ्रातरि हते श्रीहर्षदेवः पैतृकं सिंहासनमारुरोह। चत्वारिंशतं हायनानि च पृथिवीमेकराज्यमिव शशास। प्रथितयशसां प्राचां भारतीयानां राज्ञां क्षुण्णेन पथा संचरमाणः शौर्यौदार्यादिभिरात्मगुणैः आत्मनः कीर्तिं सत्यापयति स्म।

विलासो वैदेहीहृदयकमलोन्मीलनकला-
विदग्धो वाचां यः समभवदशोकावनितले।
प्रमाद्यल्लङ्केशस्मयविदलनोद्दाममहिमा
स दद्यादस्माकं सुरभिरिह वाचां मधुरताम्॥

# प्रथमोऽङ्कः

( ततः प्रविशति यवनिकान्तस्थो यूना रसायनेनान्यैश्च भिषग्वरैरन्वास्यमानः खट्वोपरि शय्यामधिशयानो महाराजः प्रभाकरवर्धनः। यवनिकाया बहिस्तिष्ठन् कुमारः श्रीहर्षदेवश्च )

हर्षः—( स्वगतम् ) अहो ! किमिदम् ! अद्य प्रबुद्धस्य मम मुहुर्मुहुरदक्षिणमक्षि स्पन्दते। गात्रेषु चाकस्मादेव वेपथुर्जायते ( भिषजं निर्दिश्य ) सुषेण, किं महाराजः संप्रति मया समभिगम्यः ?

सुषेणः—देव, प्रसीद, स्तोकमिवागमयस्व तावत्। महाराज सुषुप्सति। अधुनाऽनेन सुखं स्वप्तव्यम्। न स्तोकमप्युपरोधमर्हति।

हर्षः—सुषेण ! अस्ति तातस्य विशेषः ? कथमेतत्परिणमेत।

सुषेणः—देव ! धैर्यमवलम्बस्व। कतिपयैरेवाहोभिः पुनः स्वां प्रकृतिमापन्नं स्वस्थं च श्रोष्यसि पितरम्।

हर्षः—किमस्ति भवतामत्र स्थेयान्संप्रत्ययः ?

सुषेणः अन्ये च—नियतं द्रढीयान्।

हर्षः—किं सर्वेषामपि भवतां युगपत् ? तर्हि कुतस्त्वमां भवतामभिप्रायो भिद्यते। मन्ये, यूयं मदीयाशयानुगुणं ब्रूथ। न तु भवतां नैजमान्तरं भावम्। नापि युष्माकमाशय एकविधः। विशेषतश्च यूनो रसायनस्य। यतोऽसावस्मिन्नपि समये पराचीनस्तिष्ठति। ( भवतु तमेव पृच्छामि ) सखे ! रसायन ! किमिति दूरतस्तिष्ठसि। कथय तथ्यम्, यदि नामासाधु—पश्यसि। किं तव तातो न तातः ? किमम्बा न जननी। वयं न भ्रातरः ? एहि। त्वमस्माकं मित्रभागधेयं किल। त्वयि मम पितृदेवस्य महान्विश्वासः। एवं सति कुतः पराचीनोऽसि ?

रसायनः—किं न्वहम् ?

हर्षः—त्वमेव वेत्थ यत्त्वं मन्यसे। सहवर्तिनां भिषजां मतं नानुरुध्यसे इव भासि।

रसायनः—देव ! प्रसीद ! जातु स्यादेतत् । अहं न वेद ।

हर्षः—तर्हि कथं त्वं मन्यसे ?

रसायनः—देव क्षमस्व । तूष्णीं स्थातुं वरं मन्ये ।

हर्षः—नन्वहो ! नहि ! नहि ! त्वयाऽवश्यमभिधातव्यम् ।

रसायनः—( चिन्तां क्षणमिव नाटयित्वा ) ननु प्रथमतो मया वस्तुतत्त्वं चेतितव्यम् । ( इति वदन् यवनिकामभिगच्छति, पुनरपि यथापुरं पराचीन एव तिष्ठति ) । देव यद्यहं वस्तुतत्त्वं प्रतिपत्स्ये तदा त्वामावेदयितास्मि । ( इत्युक्त्वा यवनिकान्तःस्थं राजानमुपसर्पति । हर्षोऽपि विमनस्कस्तमनुगच्छति । वातायनसमीपे तिष्ठन्नहि विनोदान्पश्यति ) ।

हर्षः—हा ! किमयं भवनकमलिनीपालः कोकमाश्वासयन् पठति, यथा—

"विहग ! कुरु दृढं मनः स्वयं त्यज शुचमास्व विवेकवर्त्मनि ।
सह कमलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः ॥"

"सुखीयन्ती प्रातः सुखयति सुहासा कमलिनी
तिरस्यन्ती तारा भवति मलिना दुःखनिलया ।
मधूयन्ती धावत्यपि मधुलिहां संहतिरलं
विचित्रा वैधात्री ननु जयति रीतिर्नवनवा ॥" ( सं०चं )

अहो ! कष्टम् । मदीयशङ्कानुगुणं यत्किंचिदिदं दुर्निमित्तं सूचयति । भद्र ! सुषेण ! संप्रति कथयितव्यं कथय ।

सुषेण—किमिदं वैक्लव्यम् ! अतदर्हो हि भवान् ।

( नेपथ्ये दुःखदीर्घो महानार्तस्वरः )

"दाहो महान् ! हिमलवैर्मम ललाटं विलिम्प ! कपोलयोः कुवलयं कलय ! आशरीरमारचय चन्दनचर्चाम् ! बलवती मे शिरोवेदना ! मूर्धानं सम्यग्वधान ! उरसि शशिकरं कुरु ! संवाहय सुखस्पर्शं बाहू ! पीडय पादौ ! का वेला संप्रति ? हा ! निद्रा नैवोपैति । किं कुर्याम् ।"

हर्षः—( दीर्घमुष्णं निश्वस्य ) ननु भिषग्वराः, अलम् । अलम् । नेतः परं युष्माकं वचसि स्थास्यामि । ( इति वदन् अपटीक्षेपेणान्तः

प्रविश्य शय्यायां शयानं पितरं पश्यति, रसायनं च पार्श्वे स्थितं निर्दिश्य ) सखे ! रसायन ! किमधुना तूष्णीक एव तिष्ठसि ? प्रसीद ! आविष्कुरु तव हृदयं प्रकटम् ।

( रसायनः तूष्णीक एव निवृत्य, निष्क्रान्तः । हर्षस्तु सातङ्काभ्यां लोचनाभ्यां तमनुगच्छति । पुनरपि, नेपथ्ये दुःखदीर्घो महानार्तस्वरः । ज्वरातुरो महाराजः शयानः प्रविशति )

महाराजः—को न्वत्र तिष्ठति ?

हर्षः—( सादरं, शनैः ) अहमेव तात !

महाराजः—को नु ?

हर्षः—अहमेव भवतस्तनूजो हर्षः ।

महाराजः—( उच्चैः ) नन्वहो ! अपि त्वम् ? ( इति वदन्नतिदयितं तनयं दृष्ट्वा दुरवस्थोऽपि निर्भरस्नेहावर्जितो भुजौ प्रसार्य "एह्येहि" इत्याह्वयन् शरीरार्धेन शयनादुदगात् ) ।

हर्षः—तात ! तात......... ।

महाराजः—अहो वत्स ! नन्वसि ?

हर्षः—तात ! तात......... ।

महाराजः—(ससंभ्रमम् ) विनयावनम्रमेनमुन्नमय्य, बलादुरसि निवेश्य, कपोलेन कपोलं संघट्य दृढमालिङ्गति ) ।

वत्स ! ननु कृशोऽसि !! कथमेतत् ?

हर्षः—तात ! तात......... ।

महाराजः—वत्स ! जानामि त्वां पितृप्रियम् । अतिमृदुलहृदयम् । अतिदुर्धरो बान्धवस्नेहः ! अतो नार्हस्यात्मानं शुचे दातुम् । तात ! उत्तिष्ठ । कुरु पुनरेव सर्वाः क्रियाः । निर्वर्तयाहारविधिम् । चल चल ।

हर्षः—तात ! तात......... ।

महाराजः—याहि रे ! वत्स ! याहि ! नयत ! किमिति चिरयसि । क्षेपीयो गम्यताम् । निर्वर्त्यतामाहारविधिः । निशितं शस्त्रमिव तक्ष्णोति

मां त्वदीयस्तनिमा। ज्वरदग्धोऽपि दह्ये आयुष्मदाधिना। सुखं च, राज्यं च, वंशश्च, प्राणाश्च, त्वयि मे स्थितानि। यथा मम तथा सर्वासां प्रजानाम्। त्वज्जन्मनैव कृतार्थोऽस्मि। निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाययते मामौषधम्।

हर्षः—( अधोमुखः ) तात! तात........।

महाराजः—वत्स! कुरु मे वचनम्। कृताहारे च त्वयि अहमपि पथ्यमुपयोक्ष्ये।

हर्षः—तात! किं विस्मृतमिदम्। अस्ति खलु ममाग्रजो भ्राता कश्चन। आर्यः श्रीप्रभाकरः।

महाराजः—( अनाकर्णितकेन ) वत्स! ननु त्वमेव मम पुरस्ताच्चक्षुष्यस्तिष्ठसि। नाहं सुचिरं जीवितास्मि। दिष्ट्या त्वामद्य स्वस्तिमन्तं पश्यामि। याहि रे वत्स! याहि। क्षेपीयः कणेहत्य भुङ्क्ष्व। स्वप्स्यामि। यवनिकामाकर्षय। विविक्तमिदं स्थानमारचय। वत्स! किं बहुना! त्वामहं दृष्टवान्। त्वं च माम्। वक्तव्यमुक्तवान्। यथा रोचते तथा कुरुष्व। ( एवमुदीर्य स्वपिति )।

रसा—( यवनिकामाकृष्य बहिः तूष्णीं तिष्ठति। अन्येऽपि भिषजः अवनतशिरसो मूकिमानवमवलम्बन्ते )।

हर्षः—भद्रमुखाः! किमिति भवन्तो निवचनेकृत्य तिष्ठन्ति। किमिति भवतां मुखेषु वैवर्ण्यमन्यादृशमधुना संलक्ष्यते। कुत्र सा वदनगता प्रसादश्रीः। प्रसीदन्तु भवन्त, अभिधीयतां सत्यम्। महाराजस्य शरीरस्थितिमन्तरेण कथं भवन्तो मन्यन्ते।

भिषजः—देव! दयस्व। मा विमनायस्व। नहि महाराजमधिकृत्य वयमेवं विषण्णाः स्मः।

हर्षः—ननु तर्हि कम्?

भिषजः—देव! रसायनं युवानमधिकृत्य खलु विशेषः श्रूयते।

हर्षः—प्रेष्ठाः! किं रसायनमधिकृत्य? ( सशोकम् ) किमस्य संवृत्तम्।

भिषजः—( भूयो भूयश्चानुबध्यमाना दुःखदुःखेन कथमप्याचचक्षिरे ) देव ! हन्त ! तपस्वी रसायनो यथाप्रतिज्ञं पावकं प्रविष्टः ।

हर्षः—( महतीं चिन्तां नाटयित्वा । तत्समाकर्ण्य प्लुष्ट इवान्तस्तापेन सद्य एव विवर्णतामगात् ) हा ! किमिदमकाण्डे साहसम् !! हन्त !! हत-विधे ! किमारब्धं त्वया !! अथ वा संप्रति सांप्रतमेवाचरितमात्मानं दहता । समुचितमेवेदं स्नेहस्य, स्थेयसो यशसश्च । पातितः स केवलं दहने, दग्धास्तु वयम् । धन्यः खल्वसावग्रणीः पुण्यभाजाम् । इदमेव राज-कुलमपुण्यभाक् यत्तादृशा कुलपुत्रेण व्ययुज्यत ।

( नेपथ्ये महान् कलकलः )

( हर्षः अन्ये च सातङ्कं समाकर्णयन्ति ) । ("हा ! क कुमारः !! क कुमारः !! इति परुषं पृच्छन्ती वेलेति नाम्ना प्रतीहारी प्रविशति । ) देव ! परित्रायस्व !! जीवत्येव भर्तरि किमप्यध्यवसितं राज्ञ्या जनन्या ।

हर्षः—( सातङ्कम् ) किमस्याः संवृत्तम् ?

वेला—न वयं विद्मः किमसावाचरिष्यतीति । पश्य । पश्य । दिष्ट्या इत एव देव्यभिवर्तते ।

( ततः प्रविशति यशोवती देवी कुसुम्भबभ्रुणी वाससी परिदधाना, मरणचिह्नं दधती )

हर्षः—अम्ब ! किमिदं वासः !! कोऽयमाकल्पः । हा !! किं त्वमीहसे !! किं वाऽऽचरिष्यसि !!

यशोवती—ननु पुत्रक ! भर्तुः पूर्वमविधवैव मर्तुं वाञ्छामि । न च शक्नोमि दग्धगात्रस्य भर्तुरार्यपुत्रविरहिता रतिरिव निरर्थकान्प्रलापान् कर्तुम् ।

( क्रमशः )

---

२

# आयुर्वेदे शालाक्यतन्त्रम्

[ निबन्धकः—भिषगाचार्य-श्रीज्योतिषचन्द्र-सरस्वतीः ]

( पूर्वतोऽनुवृत्तम् )

नेत्ररोगाः—

शालाक्यतन्त्रोक्तेष्वधिष्ठानेषु अत्रैवाधिकतमानां व्याधीनां सत्तोपलभ्यते । सुश्रुतस्त्वत्र व्याधीनां षट्सप्ततिं वर्णयतिस्म, वृद्धवाग्भटस्तु चतुर्नवतिम् । विदेहाधिपो निमिरेवास्य तन्त्रस्य प्रवर्तकः । ततस्तु करालभट्ट सौनकादयः कतिपये महर्षयः पृथक् तन्त्राणि तेनिरे । अद्यत्वे तु तेषां कानिचिच्छिष्टान्येव सूत्राणि प्राचीनटीकासूपलभ्यन्ते, न च तानि तन्त्राणि । सुश्रुतसंहितायान्तु तन्त्रस्यास्य व्यासतो विवृतिर्दृश्यते । तमुपजीव्य वृद्धवाग्भटोऽपि स्वतन्त्रे निरवशेषत आलोचयामास । अष्टाङ्गहृदयन्तु वृद्धवाग्भटस्यैवानुहरणमात्रम् । चरके तु 'पराधिकारे न तु विस्तरोक्तिः' इति विवृत्या समासत एव शालाक्यतन्त्रालोचनं दृश्यते । अत एवाद्यत्वे शालाक्यतन्त्रगवेषणायां सुश्रुतसंहितैवास्माकं प्राधान्येनोपजीव्यत्वेन ग्रहणीया भवेत् ।

नेत्रयोः क्षुद्रप्रत्यङ्गत्वेऽपि तद्गतव्याधीनां निदानमुपक्रमश्च सुखेन बोधयितुकामस्ते अंशांशतो विभज्य तांस्तानंशान् नानासंज्ञया परिचिह्नितानकरोदित्येवायुर्वेदे नेत्रयोः शारीरम् । पाश्चात्त्यानां शारीरे तद्गता बहवो अंशाः संज्ञया निर्दिष्टा दृश्यन्ते तेषां निदानग्रन्थानाञ्चिकित्सितग्रन्थानाञ्चावबोधार्थम् । आयुर्वेदे तेषां स्वल्पत्वेऽपि निदानाद्युल्लिखितानामंशानां संज्ञा वर्तत एवेति नास्त्यायुर्वेदे शारीरतन्त्रमित्यपप्रचारोऽमूलक एवेति मन्यामहे । अत्र हि पञ्च मण्डलानि, षट् च सन्धयः, षट् च पटलानि इत्यायुर्वेदवादिनो भाषन्ते । तत्र पक्ष्ममण्डलं, वर्त्ममण्डलं, शुक्लमण्डलं, कृष्णमण्डलं, दृष्टिमण्डलञ्चेति पञ्च मण्डलानि क्रमान्मध्यगानि वर्तन्ते ।

तत्र पक्ष्मशब्देन वर्त्मगतलोम्नां, वर्त्मशब्देन च नेत्राच्छादकपल्लवद्वयस्य परिग्रहः क्रियते। नेत्रबुद्बुदस्य (Eyeboll) शुभ्रांशं शुक्लमण्डलं, श्यावकृष्णाद्यंशश्च कृष्णमण्डलं, मेचकाभमंशश्च दृष्टिमण्डलमाख्यायन्ते। एवं सन्धयोऽपि वर्त्मपक्ष्मणोः सन्धिः, वर्त्मशुक्लयोः सन्धिः, शुक्ल-कृष्णयोः, दृष्टि-कृष्णयोश्च सन्धिः नेत्रबुद्बुद एव वर्तन्ते। नेत्रपल्लवयोश्च नासापार्श्वस्थः कणीनकसन्धिः, कर्णपार्श्वस्थश्चापाङ्गसन्धिरिति षट् सन्धयो व्याख्याताः। पटलानि तु द्वे वर्त्मसंज्ञके। शिष्टानि चत्वारि नेत्रबुद्बुद एवाधो धोऽवर्तन्ते। तेषु वाह्यं प्रथमं वा पटलं तेजोजलाश्रितम्। पाश्चात्यास्तु यमंशं 'कर्णिया' इति 'लेन्स' इति च संज्ञयाऽभिदधति, सोऽयं प्रदेशः प्रथमपटलत्वेनाभिधीयते। द्वितीयन्तु मांसाश्रितमिति कृत्वा तेन पाश्चात्यानाम् 'आइरिस' 'सिलेयारीवडि' 'कोरएड' इति संज्ञाभिरभिहितः प्रदेशो लक्ष्यते, तत्रैव नेत्रगतपेशीतन्तूनां सम्भवात्। तृतीयन्तु मेदोगतमतस्तेन पाश्चात्यानां मेदोमयं, 'भिट्रास् हिउमार' इत्याख्यं पदार्थविशेषं, तत्संलग्नश्च 'रेटिना' इत्याख्यं कलाविशेषं परिग्राहयितुं युज्यते। सुश्रुतस्तु चतुर्थपटलमस्थिगतमाह, दोषे च चतुर्थपटलगते लिङ्गनाशः सम्पद्यते इति च ततो ज्ञायते; एवं चतुर्थपटलेन दृष्टिवहानां नेत्रबुद्बुदकेन्द्रसन्निविष्टानां धमनीनां (optic nerves) परिग्रह एव सङ्गच्छते, तेषामेकदेशस्यास्थिन निबद्धत्वात्।

समासत एतैरेवाङ्गविनिश्चयैर्नेत्ररोगाणां निदानानि तदुपक्रमसूत्राणिचावबोद्धुं न भवति काचिद् विप्रतिपत्तिः, शस्त्रप्रयोगादौ च स्थाननिर्देशोऽपि सम्भाव्यते। इत एव प्राच्यास्तन्त्रकाराः एतद्व्यतिरिक्तस्य शारीरज्ञानस्य प्रयोजनं न दृष्टवन्तः। शारीरज्ञानं हि निदानोपक्रमयोरवबोधाय शस्त्रोपचारादौ स्थाननिर्देशाय चापेक्ष्यते। न खलु संज्ञया निर्दिष्टेष्वेव निदानादावुक्तेष्वङ्गेषु, तेषां परिचयाभावात् तद्गतानां व्याधीनां परिचयोऽपि न सम्भाव्यते, न वा तदुपक्रमश्च सम्यक् प्रयुज्यते। अतएव ये खल्वंशा निदानादावनुक्तास्तेषां संज्ञाकरणे प्रयोजनाभावादधिकदोषतैवापद्यते। यत

सत्यं, नेत्रे तत् पोषणाय बह्व्यः शिराः, क्रिया सौकर्याय बह्व्यः पेश्यः, बन्धनाय च बहवः स्नायवः, ज्ञानसञ्चालनाय च बह्व्यो धमन्यस्तत्र निबद्धा वर्तन्ते, तासान्तु निदानादावनुल्लेखात् संज्ञाकरणे प्रयोजनाभाव एव प्राच्यैः सर्वथाऽनुभूतः ।

शिरानुसारिणो हि दोषाः प्रकुपिता नेत्रे स्थानानि संश्रित्य नानाव्याधीन् सृजन्ति । तत्र केऽपि सर्वं नयनबुद्बुदमाक्रम्य सर्वगतान् सप्तदश व्याधीन्, केऽपि वांशविशेषमाक्रम्य वर्त्ममण्डले एकविंशतिं, सन्धिषु नव, शुक्लमण्डले एकादश, कृष्णे च चतुरः, दृष्टौ च द्वादश इत्येवं चतुःसप्ततिं व्याधीनुत्पादयन्ति ; आगन्त्वपि द्वौ व्याधी जायेते, इत्येते षट्सप्ततिरेव व्याधयो भवन्तीति धान्वन्तरीया वदन्ति । करालस्तु षण्णवतिं सात्यकिश्चाशीतिं प्राह । इतः परस्ताद् वृद्धवाग्भटस्तु वर्त्मनि चतुर्विंशतिं, सन्धिषु नव, शुक्ले त्रयोदश, कृष्णे पञ्च, दृष्टौ सप्तविंशतिं, सर्वनेत्रे च सप्तविंशतिं व्याधीनपश्यत् । तेष्वेकविंशतिरसाध्यत्वेन प्रत्याख्येयाः ; अष्टौ याप्याः, शिष्टाः पञ्चषष्टिर्व्याधयः साध्याः । परमत्रास्मद्दौर्भाग्यं यदेतेषु चतुश्चत्वारिंशतो व्याधीनामुपक्रमेषु किञ्चिच्छस्त्रोपचारोऽपेक्ष्यते । शिष्टा एकत्रिंशतिरेव व्याधयो भेषजसाध्याः । यद्यपि नेत्रे शस्त्रोपचारो लघुरेव (Minor operation) मन्तव्यः, स्वल्पेऽपि यत्ने कृते कर्माभ्यासो नातिदुर्गमः ( येषान्तु शस्त्रदर्शनाद्रक्तगन्धाद्वा मूर्च्छायाति तान् विहायान्येषाम् ) तथा प्ययत्वे तस्य चेष्टा न प्रचरतीति परं नो दुःखाकरोति ।

सत्यमेतद् यन्नेत्रचिकित्सिते पारं गन्तुकामैः शिराव्यधेन रक्तमोक्षणमवश्यमायत्तीकर्तव्यम् । यतस्तेषु पञ्चदश व्याधयः शिराव्यधेनैव प्रशान्तिमापद्यन्ते । पुनस्तेष्वेकादश व्याधयश्छेद्याः, नव च लेख्याः । कुत्र कुत्रापि सीवनकर्माप्यपेक्ष्यते । शस्त्रोपचार एव हि श्लैष्मिकलिङ्गनाशस्य (Catāract) अद्वितीय उपक्रमः । स च लघुरेव मन्तव्यः । शस्त्रविभ्रमे ह्यत्रान्धस्यान्ध्यातिरिक्तं किञ्चिन्न भवति । शस्त्रोपचारसौष्ठवे च न हि बिन्दुमात्रमपि शोणितं च्यवते न वा यन्त्रणाया लेशोऽप्यनुभूयते व्याधितैः ।

पाश्चात्यास्तु प्रागत्रायुर्वेदमनुसृत्यैव शलाकाकर्म (Needling) कुर्वन्ति स्म। अद्यत्वे तु शस्त्रेणैव कृष्णमण्डलस्योर्द्ध्वतः चतुर्थभागं हित्वा तिर्यग् विपाट्य प्रथमपटलगतमस्वच्छं दृष्टिमण्डलं (Lens) निष्काश्य व्याधितं निर्व्याधितं कुर्वन्ति। पञ्चनदप्रदेशस्थाः, वङ्गीयाश्च षोलघरनिवासिनो नेत्रवैद्याः साम्प्रतमप्यायुर्वेदोक्तप्रथयैव शलाकाप्रयोगेण नष्टदृष्टेरान्ध्यमपनयन्ति। अतो ब्रूमः लिङ्गनाशे आयुर्वेदप्रथया शस्त्रोपचारस्तेनैव च दृष्टिदानमधुनापि सम्भाव्यते। प्राणाचार्य-सुश्रुतभाष्यकृद् हाराणचन्द्रस्तु पाश्चात्त्यप्रथयैव लिङ्गनाशमुपाचरतिस्म। अष्टादश वर्षाणि तत्सहकर्मित्वेन यच्च मया दृष्टं शिक्षितं वा तेनैव वक्तुं शक्यते, आयुर्वेदे लिङ्गनाशस्योपक्रमः पूर्ण एव वर्तत इति। कुत्रचिच्चेत् पाश्चात्त्यानां शस्त्रोपचारवैशिष्ट्येन सुफलं प्रसूयते, तर्हि सत्यविरोधे आयुर्वेदज्ञैः सदैव ग्रहीतुं शक्यते। परन्त्वत्र पूर्वकर्म पश्चात्कर्म चायुर्वेदमतानुसारेणैव भवितव्यम्।

एवमनेकेषु नेत्ररोगेषु शस्त्रपूर्वकं कर्म सुफलमेव ददातीति बहुशः प्रत्यक्षीकृतमस्माभिः। तिमिरे काचे च व्याधौ साम्प्रतं पाश्चात्त्यनेत्रवैद्याः कुत्र कुत्र शस्त्रपातनेन फलं गवेषयन्ति। परीक्षामूलकमेतत् कर्म कदाचिन्नेत्रोपघातायैव सम्पद्येत। आयुर्वेदमतेन तिमिरन्तु रक्तमोक्षणपूर्वकभेषजसाध्यमेव। काचस्तु याप्य एव। अत एव ब्रूमहे, नेत्रोपक्रमः अद्यत्वेऽपि सुश्रुतादौ यथा वर्तते तेनैवायत्तीकृतेन, पाश्चात्त्यतन्त्रतोऽधिकतया नेत्ररोगप्रतिषेधाय प्रभविष्यतीति। पाश्चात्त्यतन्त्रेष्वेतावत्संख्यका व्याधयोऽपि नोल्लिखिताः। एवं गते आयुर्वेदोपक्रमेण नेत्ररोगोपशमो न भवतीत्यपसिद्धान्तस्यास्माकमज्ञतैव कारणं न त्वायुर्वेदस्य। शिक्षणीये खलु तदुपक्रमे पाश्चात्त्यपण्डितेभ्यः शस्त्रकर्माभ्यास एवाधिगन्तव्यो न तु भेषजप्रयोगः, न वा पूर्वकर्म-पश्चात्कर्माभ्यासः। साम्प्रतमायुर्वेदविद्यालयेषु पाश्चात्त्यशालाक्यमेवाध्याप्यते न तु प्राच्यतन्त्रम्, आतुरालयेऽपि पाश्चात्त्यडक्टरैरेव एलोप्याथिसम्मतेनैवोपक्रमेणोपक्रम्यन्ते व्याधिताः। एवं परिस्थितौ जनताया दृढैव धारणा जायते आयुर्वेदे शालाक्यचिकित्सितं नास्तीति।

अत एव ब्रूमः, वयमेवास्य पूर्णाङ्गस्यायुर्वेदस्योपहन्तारो भवाम इति। पुनरप्येते आतुरालयाः नव्य-डाक्ताराणां कर्माभ्यासायैव सञ्जाताः, ये खलु प्राच्यपन्थिन आयुर्वेदज्ञा तत्राध्यक्षाध्यापकत्वेन वर्तमानास्ते त्वत्र कर्माभ्यासाय न यतन्ते, पुनर्येऽपि पाश्चात्त्यतन्त्रनिष्णाताः सञ्जातवैद्या न तेऽप्यनया पथा गच्छन्तीति परं नो दुःखाकरम्।

( क्रमशः )

---

# अध्यापकवर्याणां तिरोधानम्

हा हन्त! यैः खलु दुष्कालेऽपि कलौ अन्धतमसेन दुरालोकमिदं भारतं वर्षं ज्ञानज्योतिषा प्रतिभासयन्त आसंस्त इमे एकैकशस्तिरोदधते इति कापीयं दुरवस्थापरम्परा पर्यवतिष्ठते भारतवर्षवासिनाम्। लघीयसी तेषां संख्या सम्प्रति वर्तते, येषां प्राचीनभावानुबन्धित्वम् अध्यापनैकव्रतत्वं सदाचार-परिशीलनञ्च भारतवर्षस्य भारतवर्षीयाणाञ्च तत्त्वमक्षुण्णमपालयन्, अन्यतश्च तेष्वेव दृश्यते कामचारो दुरात्मनः शमनहतकस्य इति नूनमेतद्देशीयानामेव परिपाकः पापानाम्। बहिर्विषयाणामस्वतन्त्रा अपि भारतीया आध्यात्मिके विषये येषामुपदेशादिना स्वातन्त्र्यमन्वभवन् तेषामेवं क्रमशस्तिरोधानमधीनतामौभयत्रिकीमानयिष्यतीति नास्ति केषामपि सन्देहावसरः।

व्यतीते सौरपौषस्याष्टमदिवसे प्रसिद्धकोटालीपाडीय-न्यायाचार्याभिजना ब्राह्मण्यधर्मनिष्ठाः श्रुतशीलवन्त आजीवनमध्यापनैकव्रताः कलिकातास्थ-आर्यविद्यालयाख्य-चतुष्पाठ्याः प्रतिष्ठापका हरनाथशास्त्रिमहोदयाः प्रायेण पञ्चसप्ततितमे वयसि दिव्यलोकं प्रस्थितवन्तः।

पूर्ववङ्ग-प्रदेशीय-वरिशालजिलाधीन-'चाँदसी'ग्रामे प्रसिद्ध-ब्राह्मण-पण्डितान्वये महाभागोऽयं जन्म परिगृहीतवान्। द्वितीयोऽयं सोदर्येष्वासीत्। भ्रातरस्तु सर्व एव कृतविद्याः शीलवन्तश्च। तृतीयचतुर्थौ पुनर्विशेषेण शास्त्रानुशीलनपरौ अध्यापनमुख्यकर्माणावेव सम्प्रत्यपि वर्तेते। तयोरप्यन्यतरस्तत्रभवान्, सीतानाथसिद्धान्तवागीशभट्टाचार्यमहाशयः सांख्य-वेदान्तादौ दर्शने, न्याये, व्याकरणे च नितरां व्युत्पन्नः स्वीयाध्यापनपाटवेन संस्कृत-साहित्य-परिषदः शिष्याननुगृह्णाति। तत्रभवतः सिद्धान्तवागीशमहोदयस्य व्याकरणविषयिणः केचन ग्रन्थाः कातन्त्रव्याकरणाध्यायिनश्छात्रान् विशेषेणोपकुर्वन्ति।

स्वर्गतः शास्त्रिमहाशयः शैशवे महता क्लेशेन शास्त्राण्यनुशीलयन् कृतविद्यः कलिकातायां 'आर्यविद्यालयं' नाम चतुष्पाठीं प्रतिष्ठापयंश्छात्रानाहारवासस्थानादिप्रदानेनाध्यापयन् स्वयञ्च शास्त्रानुसारिणमाचारं परिपालयन् अधीति-बोधाचरणप्रचारणैर्विद्यायाः प्रसारं साधितवान्। पूतचरितोऽयं महात्मा संसर्गतः स्वतो वा सम्भाव्यमानमात्मनः पातित्यं कथं परिहृतं स्यादिति चिन्तया स्वयंपक्वैकभक्तेन पतित-तत्संसर्ग्यादिपरिहारेण यथाकालोपासनया च जीवनमत्यवाहयत्। दुर्विलासाद्दैवस्य करालेन कालेन कवलितापत्यकलत्रोऽयमवश्यम्भाविनं वंशलोपं परिजिहीर्षया पुनर्दारानगृह्णात्। तत्र च कन्यामेकामलभत। दृष्टमस्माभिरभूतपूर्वमननुकार्यञ्च शिष्यवात्सल्यमत्रभवतः। शिष्याणां यावदभावं पूरयन्नपि नायं महात्मा तृप्तिमलभतेव। केचन पण्डिताश्छात्राणामाहारमात्रप्रदानेनात्मानं बहुमन्यमानाः सदसि श्लाघन्ते, परे पुनर्वासस्थानमात्रप्रदानेन। आहार-वासस्थानयोर्द्वयोर्दातारस्तु गुरोः कृत्यमेकान्ततः सम्पन्नमेव मन्वते। एवं गते गुरुषु

गुरुतमोऽयं महात्मा का कथाहार-वासस्थानयोः, यथाप्रयोजनं वसन-शीत-वसनादीनां, रोगे चौषधपथ्यादीनाम्, शिष्याणां गृहकृत्यादिष्वपि यथा-सम्भवमर्थादीनां प्रदानेनापि स्वकृत्यमशून्यं नापश्यत् ।

आसीच्चास्य चरित्रे वैशिष्ट्यमन्यविलक्षणमेकम्, यदयं शिष्याणां चरित्रशिक्षायां वचनस्थाने स्वचरित्रं कृतवान् । नासीदस्य प्रयोजनं वचनेन शिष्यान् शिक्षयितुम् । एतदाचरितं पर्यालोच्यैव धीमन्तश्छात्राः स्वं कृत्यं निरूपयितुं प्राभवन् । शतशश्छात्रास्तत्रभवता विद्यादानेन यथोचितमुन्नतिं नीताः कुटुम्बभरणं कृत्वा कृतकृत्या वर्तन्ते । केचन पुनस्तस्यैवादर्शं समनुसृत्य शिष्यशिक्षायामायतन्ते च ।

गच्छन्तु शास्त्रिमहाशयाः परिणामजर्जरं कलेवरं परिहाय स्वकर्मो-पार्जितं पुण्यलोकम्, अनुभवन्तु च तत्र स्वानुष्ठितकर्मोचितं सुखभोगम्, वयं पुनर्वराकास्तादृशं गुरुविरहशोकमङ्गीकृत्य कथञ्चन जीवनं धारयामः । इति ।

---

# प्रशान्तरत्नाकरम्

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वानुवृत्तम् )

आत्रेयः—न जानामि ।

राष्ट्रियः—अरे राजपुरुषाः ! राजादेशात्तावदेतौ ताड्येतां यावदेताभ्यां रत्नाकरस्य साम्प्रतिकी स्थितिर्न प्रकाश्यते ।

पुरुषाः—तथा ( ताडयन्ति ) ।

आत्रेयः—अरे निष्ठुरा राजपुरुषाः ! मा नाम वृद्धं पितामहं ताडयत, अहह ! देहादस्य स्यन्दते रक्तम् ! अहह ! तात, कासि ? शीघ्रमागच्छ, मां पितामहञ्च राजपुरुषहस्तात् परित्रायस्व । तात, कासि, हा तात, नातः परं शक्यते सोढुम् । तात, पश्य माम् । अहो ! एष सर्वं तमोमयं पश्यामि, पितामह, पिताम—( इत्यर्द्धोक्ते मूर्च्छति ) ।

राष्ट्रियः—ताडयत, ताडयत, एवं किल राजादेशः ।

च्यवनः—निष्ठुराः पुरुषाः ! अद्यापि ताडयथ ? हा ! हा !! न किं पश्यथ, यदेष कशाभिहतो मूर्च्छितः पतति ? अहह ! किन्तु खलु पाषाणघटितं हृदयं युष्माकम् ? हा वत्स, आत्रेय, कासि, देहि मे प्रतिवचनम् । हा वत्स, रत्नाकर, कासि, न जानासि प्राणप्रियस्य ते वत्सस्य आत्रेयस्य चरमां—( अर्द्धोक्ते ) अहह ! घूर्णते शिरः, तिमिराक्रान्तः संसारः ! लुप्ता मे दृष्टिः, न किञ्चित् पश्यामि, हा रत्नाक—( मूर्च्छति ) ।

पुरुषः—अरे रे दुष्टौ, उत्तिष्ठतम्, मूर्च्छाच्छलेन जीवनं काम्यते ? ( ताडयन्ति ) ।

राष्ट्रियः—ताडयत, निर्दयं ताडयत ।

( ततः प्रविशति वीरबलप्रमुखैः पञ्चभिः पुरुषैः सह रत्नाकरः )

रत्ना—वयस्य, वीरबल, सत्यमेवाह शौनकः । तत् पश्यसि ?

वीर—अथ किम् ।

रत्ना—तत् किमद्यापि प्रतिपालयसि ?

वीर—आज्ञापय ।

रत्ना—एतं राष्ट्रियं बहुरत्नमण्डितमर्कटकं स्वयमेवाहमभिगृह्णामि, त्वमपि विशालाक्षप्रमुखैः सहितो युगपदेव पिशाचाधमानपरानभिगृहाण । अहह !

छिद्यते हृदयग्रन्थिः पितरं पुत्रकञ्च मे ।
विसंज्ञं रक्तरक्ताङ्गं हन्यमानं प्रपश्यतः ॥

तदलं निमेषमपि अतिक्रम्य, शीघ्रमभिगृहाण । अहमप्येष कुपितः केशरी गजस्येव मर्कटकस्य राष्ट्रियस्य शिरसि पतामि ।

वीर—यथाज्ञापयति वयस्यः ( सर्वे यथोक्तमभिनयन्ति ) ।

रत्ना—मूढ, मर्कटक, ( राष्ट्रियस्य शिरः पादेन मर्दयन् ) रत्नाकरं न जानीषे ? मूढ, अनुभवेदानीं स्वीयदुष्कृतफलम् । मित्र, वीरबल, सम्यक् परीक्ष्य ज्ञायतां सर्वे पशवो निःशेषजीविता न वेति ।

वीर—( परीक्ष्य ) वयस्य, कथमद्यापि ध्रियेरन् ? जात एव सर्वेषां समाधिः !

रत्ना—वयस्य वीरबल, नातःपरमत्र क्षणमपि स्थातव्यम् । अनर्थ-परिहाराय तातमात्रेयञ्च गृहीत्वा स्वगेहानमातरं दयिताञ्च समादाय नवं रत्नपुरमेव सर्वान् प्रापयामः । तदलं विलम्बेन ।

वीर—यथाज्ञापयति वयस्यः ।

( रत्नाकरः च्यवनं वीरबलश्च आत्रेयं क्रोडे कृत्वा पुरुषैः सह निष्क्रान्तौ )

चतुर्थाङ्कः समाप्तः ।

———

# पञ्चमाङ्कः

( ततः प्रविशति गायन्ती सुमतिः )

( गीतम् )

धावसि किमु तिमिरे ?

पश्य दयित चरणाश्रितजनमनुशयसागरे ।
क्व तव मृदुलमानसं प्रभवति वत तामसम्
स्मर निजजनमन्तरधन नाशय शुचमन्तरे ॥
तव हिंसनदूषिता धरणी वत दुःखिता
रोदिति निजवान्धवशुचि पतिता निशि वासरे ।
हिंस्रशतकभीषणं कण्टकमयकाननम्
पुरतो नहि पश्यसि किमु चल चल निजमन्दिरे ॥
तव वियोगविह्वला रोदिमि हतसम्बला ।
पश्य पश्य पश्य दयित चर चर निजचत्वरे ॥

( ततः प्रविशति कुमतिः )

कुमतिः—का त्वं रोदिषि वत्सले प्रियतमं सम्बोधयन्ती मुहुः ?
नेत्राद् वारिदवत पतत्यपि कथं बाष्पो विषादेन ते ?

सुमतिः—का त्वं दीनजनस्य कष्टमसमं दृष्ट्वापि हृष्टा परं
सोत्प्रासं वचनं दधासि सदये ? जीव्यात्तवेयं दया ॥

कुमतिः—आं ! सा त्वं सुमतिः ? सदैव कुमतिं मां निन्दया मृद्गती
या लोकोत्तरसौख्यमाश्रितवती ? भद्रे कथं ताम्यसि ?

सुमतिः—आसीन्मे प्रियबान्धवः स सहसा नीतस्त्वया दुष्टया,
तस्मादेव ममाद्य शोकविकलं चित्तं मुहुस्तापितम् ॥

कुमतिः—भद्रे, नीरलवं क्षिपन्नपनयाद्दण्डेन सन्ताड्यते,
किं वा तद् विदितं न ते ? स्मर पुरा यद् यत् कृतं शात्रवम् ।
सुमतिः—क्रूरे किं वद शात्रवं तव कृतं ? येनाद्य कोपं श्रिता
मां सन्तापयसि प्रियस्य हरणादेवं बलात्कारिणी ?
कुमतिः—मूढे ! शैशवतस्तव प्रियतमे प्रेम्णा प्रवेष्टुं मया
यत्नस्तावदकारि भूरि भवती तत्राभवद् वैरिणी ।
तावत्कालमसीमयत्नशरणा प्राप्तास्मि दैवेन तं,
तस्मादद्य ममैव दुःखमसमं त्वं भुङ्क्ष्व तावत्समाः ।
पश्यासौ मनुजान् निहन्त्यपदयः पापाद् भयं नाञ्चति
लुप्ता कोमलता कदापि भवतीं नाद्य स्मरत्यन्तरे ।
तत्कृत्यैरभितो विभाति रुदितं पीडाकरं प्राणिनाम,
शान्तिं मुञ्चति साम्प्रतं नरगणो रत्नाकरेत्याख्यया ।
धनं स लब्धुं निखिलानि पातकान्यभीत एव श्रयतेऽद्य साहसात् ।
जानात्ययं स्वौ पितरौ सुतं प्रियां स्वकीयपक्ष्यानपि केवलं हितान ।।
सुमतिः—मुग्धे वृथा दर्पमिमं प्रपद्यसे, चिरं न ते स्थास्यति भाग्यमीदृशम् ।
चक्रक्रमावर्तितनेमिसन्निभा दशा विपर्यासमुपैति सत्वरम ॥
कुमतिः—मूढे तथा चिन्तय चित्तशान्तये परं तवाशा सफला न भाविनी ।
दशाविपर्यासगतस्य देहिनस्तथैव चिन्ता ननु जीवसम्बलम् ॥
सुमतिः—धिक् ते प्रमादं धिगहो वचोविषं धिक् ते प्रगल्भव्यवहारदुर्णयम् ।
क्षणेन लब्ध्वा लघुसम्पदं त्वया यदेवमद्धा खलता प्रपद्यते ॥
वृथैष दर्पः कुमते त्वयादृतः क्षणेन नाशं स गमिष्यति ध्रुवम् ।
कुमतिः—तव प्रभावो लघुरेष मादृशां महाबलानां किमहो विधास्यति ?
सुमतिः—जगत्यकल्याणमयी भवादृशी न हि द्वितीया विदिता ममापरा ।
तदागतं नातिचिराय संक्षयं विमूढचित्ता प्रतिपालय स्वयम् ।
कुमतिः—निद्रां प्रबुद्धापि विमूढमानसा प्रत्याययन्ती किमहो न लज्जसे ?
असम्भवं किं परिवर्तनं स्थितेर्विजानती चेतसि दृप्ततां गता ?

पदे पदे हन्ति यदेष मानुषान् यदेषु पापेषु महत्सु मज्जति ।
यदेष मिथ्या परलोकमीक्षते कुतो नु तस्य त्वरया विपर्ययः ?
त्वय्याप्तरागस्तव यत् प्रियः पुरा फलं महादुःखमयं न किं ततः ?
अथाधुना मामकरागसम्पदा प्रपश्य कां वा न गतः स सम्पदम् ।
प्रदाय दुःखं विपुलं स्वबन्धवे न लज्जसे बान्धवताप्रकाशिनी ?
अलं वृथा हार्दकथाप्रचारणैर्भजस्व शान्तिं स दधातु मङ्गलम् ।

सुमतिः—अहो विचित्रं तव बुद्धिलाघवं यतस्तथा पश्यसि निर्विचारतः ।
रोगे नरा जाग्रति सान्निपातिके वदन्त्यसम्बद्धवचःपरम्पराम् ।
रुजा परीता रसनासुखोदयान्यपथ्यभोज्यानि यदोपभुञ्जते ।
तदा रसास्वादसुखेऽपि रोगिणां कटुर्विपाकः किमु शक्यमोषणः ?
स साहसेनाद्य विचारवर्जितो निहत्य वित्तस्य कृते परःशतान् ।
आपाततो यद्यपि मोदमश्नुते तथापि नान्ते भविता महोदयः ।

कुमतिः—तवैव तादृग् वचनं सुशोभनं न रम्यमेतत् प्रतिभाति मादृशाम् ।
परेद्यवि प्राप्यमयूरकाम्यया त्यजन्ति ये प्राप्तकपोतबालकम् ।
वृथाधियस्ते परितो विनिन्दिता ध्रुवं परित्यज्य न सेव्यमध्रुवम् ।

सुमतिः—मूढे न जानासि वृथैव वल्गसि प्रमत्तवन्मानविधौ विमूढधीः ।
खलं फलं शास्त्रनिषिद्धकर्मणाम् इति प्रमाणं वचनं विचार्यताम् ।
सुकृत्यजातेन फलं शुभावहं श्रुतिस्मृतिभ्यां यदि सत्यमीरितम् ।
ततो ध्रुवत्वाध्रुवते भवन्मते कथं वद प्रस्तुतयोर्विपाकयोः ?
प्रत्यक्षतः पश्यसि यादृशं फलं निषिद्धकृत्येन धनागमादिकम् ।
जन्मान्तरे तीक्ष्णतरं सुदुस्तरं कष्टं ततः शास्त्रवचोभिरीरितम् ।
इहैव वा जन्मनि पापमुत्कटं कृतं फलं यच्छति सत्वरं नृणाम् ।
ततः फलेनाव्यभिचारिणः सतः कथं न तस्य ध्रुवता फले स्थिता ।

कुमतिः—प्रवञ्चकैः कल्पितमर्थसिद्धये जन्मान्तरं प्राक्तनकर्ममूलकम् ।
अलं तदालम्ब्य जनप्रवञ्चनैर्विरम्यतां हन्त दुरात्मवर्तनात् ।

न काकतालीयनयं विजानताम् इहैव वा पापफलस्य सङ्गतिः ।
यथा यथायं पुरुषः प्रवर्तते तथा तथैवास्य फलं प्रजायते ।

सुमतिः—अशेषतस्त्यक्तवती त्रपाभरं चिराय वाचं कुरुषे सुदुर्मते ।
यदद्य जन्मान्तरवादमप्यसावपह्नुवाना न विलज्जसे क्षणम् ।
अलं त्वया लौकिकमात्रसारया प्रवुद्धयाऽप्याश्रितसुप्तिकल्पया ।
जगत्सु वैषम्यमवेक्ष्य सर्वतो वयं हि जन्मान्तरमाश्रयामहे ।
न जातमात्रस्य शिशोः कथञ्चन स्तनन्धयत्वं तव सोपपत्तिकम् ।
न पूर्वजन्मानुभवं विना यतः प्रवृत्तिहेतुस्मरणस्य सम्भवः ।
सुसिद्धमेतद् वहुयुक्तिभिः सतां जन्मान्तरं ह्नोतुमलं न तावता ।
पुण्यस्य पापस्य तथा दुरुत्तरं फलं समास्वाद्यमिहापि देहिभिः ।
वृथाभिमानं परिवर्ज्य दुर्मते भविष्यदालोकय सुस्थिरा सती ।
न पापमग्नस्य चिरं समुन्नतिर्नतिः कदाचित परतोऽविलम्विता ।

कुमतिः—हीनानने दृप्तकथा न शोभते विना क्रियां वल्गसि किन्तु दुःस्थिते ।
विरम्यतां कोपविवर्द्धनं परं न साध्यतां मे स्वपथो विलोक्यताम् ।
एषा प्रतिष्ठे स्वजनोपकारिणी प्रियश्च रत्नाकरमाशु लोकये ।

( निष्क्रान्ता )

सुमतिः—सुदुःसहं हा कुमतेर्वचोविषं ममाद्य तापाय भवत्यहर्निशम् ।
रत्नाकरं यावदुपैमि नो पुनः पुरेव तावन्न हि तापसंक्षयः ।
तदेहि रत्नाकर पुण्यचत्वरे समस्तकल्याणमये चिराभये ।
त्वया विना शून्यमिदं तमोमयं विधेहि शान्तिं स्वजनस्य मे शुचाम् ।
भवत्विदानीं परिलोकये प्रियं रत्नाकरं दुर्मतिलुप्तचेतनम् ।
यथाशु मोहं परिहाय सम्पदे प्रवर्तते पुण्यपथे पुरा यथा ।

( निष्क्रान्ता )

( ततः प्रविशति पुत्रेण आत्रेयेण सह रत्नाकरः )

आत्रेयः—तात, बिभेमि ।

रत्ना—वत्स, कुतो बिभेषि ?

आत्रेयः—निष्ठुरेभ्यो रक्षिपुरुषेभ्यः खलस्वभावाच्च राष्ट्रियात् ।

रत्ना—वत्स, मा मैवम्, अलमद्यापि तेभ्यो भयेन। ते खलु पापाः किमद्यापि ध्रियन्ते ? वत्स,

यावत् कशाप्रहारेण तवाङ्गाच्छोणितस्रुतिः ।
तावदेव स्वकृत्येन नीतास्ते यमसादनम् ॥

आत्रेयः—आं स्मरामि ! अथ तात, यदि तदीयविनाशेन परिकुपितो राजा वैरप्रतीकाराय इहैवापरान् पुरुषान् प्रेषयेत् ?

रत्ना—तदा ? वत्स, तदा तेऽपि पूर्वेषामनुगन्तारः ।

आत्रेयः—तात, मा मा तावदेवम् ! तथा प्राणिविनाश एव न मे सुतरां रोचते। तदलमेवं प्रतिपदं प्राणिवधानुबन्धेन ।

रत्ना—वत्स, बालोऽसि, न जानीषे संसारमर्यादां प्रयोजनानुबन्धिनं प्राणिवधं शास्त्रकृतोऽप्यनुमन्यन्ते, किञ्च व्यसनवन्तः परहितपराङ्मुखा यदि जगत्यां निराबाधा ध्रियेरन्, कीदृशस्तावता जनानामुपकारः ?

आत्रेयः—आं ज्ञातम्। अथ तात, रत्नपुरं रत्नपुरमिति बहुश एव श्रुतं भवन्मुखात् । तत् कुत्र नु खलु तत् रत्नपुरम् ?

रत्ना—आं वत्स, एतदेव अद्यापि न जानासि, इदमेव पुरं रत्नपुरमित्याख्यायते ।

आत्रेयः—आं ! इदमेव ? अथ कथमस्य रत्नपुरमिति संज्ञा ? कियद् वा आयतनमस्य ।

रत्ना—वत्स, श्रूयताम्, अस्त्यत्र पुरे कृतनूतनसन्नाहे किमपि लोकविलक्षणम् अस्माभिरेव सुप्रतिष्ठितं रत्नागारम्, यत्र किल—

रत्नानां किरणैस्तमांसि परितो नाशं श्रयन्ते परं
सर्वामेव तिथिं समेति मुदिता पूर्णा तिथिः पूर्णिमा ।
तेजोदीप्ततरं तदेत्य नयनं व्याहन्यते तैजसं
राज्ञां कामफलं प्रभूतमभितः सञ्चित्य पुञ्जीकृतम् ॥

तत एवास्य नवीन-नगरस्य प्रवर्तिताऽस्माभिः सान्वया रत्नपुरमिति संज्ञा ।

आत्रेयः—गृहीतं संज्ञाबीजम्। इदानीमायतनमस्य तातो वक्तुमर्हति।

रत्ना—वत्स, यैषा दृश्यते गभीरगहनमेखला पर्वतमाला तस्या महाप्रणाहेषु परःशतेषु गुहागर्भेषु कृतवसतयः कामेश्वरराज्यप्रोषिताः प्रभूतशक्तिसम्भृता अस्मत्सपक्षा गृहपतयः—

येषां वीर्यहृताः करिप्रभृतयस्त्यक्त्वा खलत्वं परं
क्रीडायामनुकूलतां विदधते सम्प्रापिता वश्यताम्।
मामेवानुगता दिवानिशममी तिष्ठन्ति विश्वासिनः
क्रोशं रत्नपुरं सुविस्तृतमिदं तैरेव सम्पूरितम्॥

मध्यभागे चास्य बहुदूरे गुहागर्भे समवस्थितं विशालं रत्नागारम्।

आत्रेयः—तात, अहं तद् रत्नागारं द्रष्टुमिच्छामि।

रत्ना—नूनं द्रक्ष्यसि।

आत्रेयः—तात, कदा द्रक्ष्यामि ?

रत्ना—यदा परिपूर्णयौवनो वीर्यवान् भूत्वा स्वपक्षपरिरक्षणाय अलं भविष्यसि, तदा द्रक्ष्यसि ?

आत्रेयः—अहो कदा नु खलु यौवनं लप्स्ये ?

रत्ना—वत्स, नियमेन मदादिष्टवर्त्मना व्यायामकारी अचिरमेव यौवनं लप्स्यसे वीर्यञ्च।

( क्रमशः )

---

# ভাষারত্নম্

[ শ্রীকণাদতর্কবাগীশ-প্রণীতো নব্যন্যায়মতসিদ্ধ-পদার্থ-প্রতিপাদকো গ্রন্থঃ ]

কলিকাতা-রাজকীয়সংস্কৃতমহাবিদ্যালয়-ন্যায়শাস্ত্রান্যতরাধ্যাপক-

**শ্রীকালীপদ-তর্কাচার্য্য**-সম্পাদিতম্।

এষ গ্রন্থঃ সরলয়া সরণ্যা তর্কশাস্ত্রপ্রসিদ্ধান্ পদার্থান্ প্রতিপাদয়ন্ সুবহুপ্রাচীনকালাৎ প্রভৃত্যেব পণ্ডিতসমাজে সুবিশ্রুতো লক্ষ্যতে। অত্র পদার্থসিদ্ধৌ সমপেক্ষিতা যুক্তয়ঃ সুগময়া দিশা পরিগৃহীতা মহান্তমুপকারং জনয়ন্তি তর্কশাস্ত্রং প্রবিবিক্ষতাম্। বিদ্যার্থিনাং সুখেনাবগমায় সম্পাদকমহোদয়েনাত্র সরলা কাচিৎ **টীকাপি** সংযোজিতা। অত্র বিস্তৃতা **বিষয়-সূচী** ভূমিকায়াং ন্যায়মতসিদ্ধানেক-**পারিভাষিক-পদার্থবিবৃতিশ্চ** সন্নিবেশিতা, যেন সংস্করণস্যাস্য নিতরামুৎকর্ষঃ সমজনি।

এষ গ্রন্থ ইতঃ পূর্বং কদাপি ন প্রকাশিতঃ। অতোঽপ্রকাশিতপূর্বস্যাস্য গ্রন্থস্য পরমোপাদেয়স্য লাভেন বিদ্যার্থিনোঽধ্যাপকাশ্চ সুতরামুপকৃতা ভবিষ্যন্তীতি নিঃসংশয়ো বাদঃ।

তৎ সত্বরা ভবন্তু শ্রীমন্তস্তর্কপদার্থবিজ্ঞানরসিকা যেন কালাতিক্রমো নাভিলষিতসিদ্ধিং প্রতিবধ্নীয়াৎ।

মূল্যম্—সাধারণানাম্—৩।০, পরিষৎসদস্যানাম্—৩৲

অস্য প্রাপ্তিস্থানম্—**সংস্কৃত-সাহিত্য-পরিষৎ-কার্য্যালয়ঃ**

১৭ আর. জি. কর রোড, শ্যামবাজার, কলিকাতা।

**Printed at the Calcutta Oriental Press, Ltd.,**
**9, Panchanan Ghose Lane, Calcutta.**

# Sanskrit Sahitya Parishad Series.

1. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. As. 10, As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by Pt. Kalipada Tarkacharya. (Almost out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4, Re. 1. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Re. 1-4, Re. 1 (for members).

7. **Durgotsava-vivekah** of Sulapani—Edited by Pt. Satishchandra Siddhantabhushan. As. 8, As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt, Janakinath Sahityashastri As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A , B.L., Ph D. As. 12, As. 10 (for members).

10. **Gr hayaga-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satishchandra Siddhantabhushan. As. 7, As. 5 (for members).

11. **Prabhakara-vijayam** of Nandisvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4, Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As. 6, As. 5 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmana-sena of Bengal—Edited by Pt. Chintaharan Chakravarti, M.A. As. 12, As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of Pt. Kalipada Tarkacharya. Re. 1 As. 4, Re 1 (for members).

15. **Prasastapada-bhashyam**—Edited by Pt. Kalipada Tarkacharya. Rs. 2, Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1, As. 12 (for members).

17. **Rik-pratisakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D. with the assistance of Pt. Chintaharan Chakravarti, M.A. Rs. 2 As 8, Rs. 2. (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Pt. Akshayakumar Shastri. Re. 1 As. 4, Re. 1 (for members).

19. **Chhandogyamantrabhashyam**—Ed. by Pt. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12, Rs. 3 (for members).

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by Pt. Kalipada Tarkacharya. Rs. 3. As. 8, Rs. 3 (for members.

21 **Manodutam** of Vishnudasa—Ed. by Pt. Chintaharan Chakravarti, M.A. As. 10, As.8 (for members).

Reg. No. C. 1073

Vol. XXI, No. 10 ] [February, 1939

१८६० शकीये माघे २१श-वर्षस्य १०म-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४५ वङ्गाब्दीय-सौरफाल्गुनस्य २२श ( द्वाविंश )-दिवसे सोमवासरे सायं सप्तवादनतो भविष्यतीति सर्वेषां संस्कृत-साहित्य-परिषत्-सदस्यानां तत्र समुपस्थितिः प्रार्थनीया ।

---

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী **মাসিক সভা—২২শে ফাল্গুন, ১৩৪৫, সোমবার, সন্ধ্যা ৭টার** সময়ে হইবে। পরিষদের **সদস্যদের** উপস্থিতি একান্ত প্রার্থনীয়।

---

## পণ্ডিতগণের জীবনী-সংগ্রহ

বঙ্গদেশে এখনও প্রায় ১০০০ সুপ্রতিষ্ঠিত অধ্যাপক আছেন, তাঁহাদের এবং তাঁহাদের অধ্যাপক পণ্ডিতগণের জীবনী সংগ্রহ করিতে পারিলে একটা উল্লেখযোগ্য কার্য্য সম্পন্ন করা যাইতে পারে। তদুদ্দেশ্যে প্রত্যেক অধ্যাপকের নিকট বিনীত অনুরোধ এই যে, তাঁহারা অনুগ্রহপূর্ব্বক নিজের এবং স্বপরিচিত পরলোকগত বা বর্ত্তমান অধ্যাপকগণের মধ্যে অন্ততঃ দুই জনের সম্বন্ধে নিম্নলিখিত সংবাদগুলি **সংস্কৃত-সাহিত্য-পরিষৎ-সম্পাদকের** নামে লিখিতভাবে জানাইলে দেশের ও দশের মহৎ উপকার সাধিত হইবে :—

নাম, পিতার নাম, উপাধি, কর্ম্মস্থল, জন্মস্থান (গ্রাম, পোঃ, জেলা), জন্মদিবস (বাংলা তারিখ, অন্ততঃ আনুমানিক সাল), বর্ত্তমান বয়স (পরলোকগত-স্থলে মৃত্যুদিবস—বাংলা তারিখ), তাঁহার অধ্যাপকের নাম, স্বরচিত কোন গ্রন্থাদি থাকিলে তাহার নাম (মুদ্রিত বা অমুদ্রিত জানা দরকার), নিজে টোলে মোট যত ছাত্র পড়াইয়াছেন তাহার আনুমানিক সংখ্যা, টোলের নাম ও ঠিকানা। সংবাদদাতার নাম ও ঠিকানা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| February, 1939 | १८६०-शकीये माघे २१श-वर्षस्य १०म-संख्या | Vol. XXI, No. 10 |


## देवीविसर्जनव्यवस्थाविमर्शे विमर्शः

[ निबन्धकः—श्रीप्रतापचन्द्र-काव्य-व्याकरण-स्मृतितीर्थः ]

निर्मथ्य धर्मशास्त्राब्धिं तत्त्वामृतनिषेचनैः ।
योऽन्वग्रहीदिमाल्लोँ कांस्तं स्मार्तं प्रणमाम्यहम् ॥

इह खलु नानाशास्त्रालोचनविमलमतिः स्मार्तभट्टाचार्यो धर्मतत्त्व-जिज्ञासूनां परेषामुपकाराय विविधानेव तत्त्वग्रन्थान् निर्माय यद्यपि स्वकीय-सर्वज्ञतागर्वं खर्वीकुर्वन् आह "तत् क्षन्तव्यं बुधैरेव स्मृतितत्त्वबुभुत्सये"ति, तथाप्यशेषप्रतिभासम्पन्ना दिगन्तविश्रान्तपाण्डित्यगौरवा भूयांसो विद्वांसो निर्विवादमेव तदीयां व्यवस्थां गुरूपदेशमिवाङ्गीकृत्य स्वस्वानुष्ठेय-धर्म्यकर्मणि निरता आसन् । इदानीन्तनाः पण्डिता अपि तामेव व्यवस्थां सादरमनु-मोदन्ते । इदमेव महदाश्चर्यं यत् केऽपि तदीयव्यवस्थादोषमनुसन्धातुं न दत्तेक्षणा आसन् न वा वर्तन्ते, किन्त्विदानीं पण्डितप्रवरः श्रीयुक्त-चण्डीचरण-तर्क-तीर्थमहोदयश्चातुर्यमयाभिनव-विचारप्रणालीप्रदर्शनमुखेन "देवीविसर्जन-विमर्श"नामधेयं प्रबन्धं प्रकाश्य विस्मितानेवास्मान् अकरोत् । प्रबन्ध-

विषयं च सम्यगालोच्य तद्विषयेऽपि सन्देहाकुलैरेवास्माभिः किञ्चिद् आलोच्यते। स्मार्तभट्टाचार्यः शारदीयमहापूजोपक्रमे राजमार्तण्डीयम्—

मूलेन प्रतिपूजयेद् भगवतीं चण्डीं प्रचण्डाकृति-
श्चामुण्डामुपवाससंयतधिया भक्त्या समाराध्य च।
नाना-पाशुकमज्जमांसरुधिरैः कृत्वा नवम्यां बलिं
नक्षत्रं श्रवणं तिथिश्च दशमीं संप्राप्य सम्प्रेषयेत॥ इति

दुर्गाभक्तितरङ्गिणीयम्—

मूलं प्राप्य प्रथमचरणेऽभ्यर्चनं चण्डिकायाः
कृत्वाऽष्टम्यामशनरहितस्त्यक्तनिद्रश्च पूजाम्।
प्रातःकाले पशुबलिविधिः स्नानदानं नवम्यां
निर्माल्यश्च श्रवण-दशमी-द्व्यात्मकर्क्षेपु जह्यात॥ इति

नन्दिकेश्वरपुराणीयम्—

भगवत्याः प्रवेशादि-विसर्गान्ताश्च याः क्रियाः।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद् बुधः॥ इति

लिङ्गपुराणीयम्—

अष्टाहे विसृजेच्छक्रं तदर्द्धे न तु पार्वतीम्।
न्यूनाधिकं न कर्तव्यं राज्ञो राष्ट्रधनक्षयात॥ इति

भविष्यपुराणीयम्—

व्रती प्रपूजयेद्देवीं सप्तम्यादि-दिनत्रये।
द्वाभ्यां चतुरहोभिर्वा ह्रास-वृद्धि-वशात्तिथेः॥ इति

चक्रनारायणीयं क्रियायोगसंवादीयं च—

शरत्काले महापूजा क्रियते या च वार्षिकी।
सा कार्योदयगामिन्यां न तत्र तिथियुग्मता॥
प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत।
प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत॥

इत्यादि-नानाशास्त्रोक्तवचनानि समाहृत्य, विसर्जने राजमार्तण्ड-दुर्गाभक्ति-

तरङ्गिण्युक्तवचनद्वयगत-लग्न-नक्षत्रयोरनियतत्वेन गुणफलत्वम्, नन्दिकेश्वर-पुराणोक्तोदयगामितिथेश्च प्रवेश-पूजन-विसर्जनेषु प्रशंसापरत्वम्, लिङ्ग-पुराणीयस्य च विसर्जने चतुर्थदिनन्यूनाधिककरणनिषेधकत्वम्, भविष्य-पुराणीयस्य तिथेर्ह्रासवृद्धिवशात् पूजायां न्यूनाधिक-दिनकरण-विधायकत्वम्, चक्रनारायणी-क्रियायोगसंवादोक्त-वचनाभ्याञ्च शरत्कालीनत्व-प्रतिवर्ष-कर्तव्यत्वोदयगामि-तिथिप्राशस्त्यपरत्व-नवमीपूजाधिकरण-दिनपरदिन-पूर्वाह्न-दशमीविसर्जनत्वादीन्युक्त्वा पूर्वोक्तमुनिवचनानाञ्च यथासम्भवं परस्परा-बाधेन विषयतां प्रदर्शयितुमुपक्रम्य लिङ्गपुराणीयेन भविष्यपुराण-वचनस्य विरोधमाशङ्क्य—"पूर्ववचने ( भविष्यपुराणीयवचने ) प्रपूजये-दित्युक्तत्वात् पूजानुरोधेन न्यूनाधिकदिनस्थितिप्रतिपादनम्। परवचनस्य तु ( लिङ्गपुराणीयस्य ) विसृजेदित्यनुरोधाद्विसर्जन एव त्र्यहपूजने कृतेऽपि नवमीयुक्तदशम्यां श्रवणानुरोधात् न्यूनत्व-प्रसक्तौ, यत्र वा नवमी षष्टि-दण्डात्मिका तत्परदिने नवमी तत्परदिने दशमी तत्रोदयानुरोधेनाधिकत्व-प्रसक्तौ च निषेधकत्वम्, न तु सप्तम्याः षष्टिदण्डात्मकत्वेन तत्परदिने वृद्धावपि निषेधकत्वम्। एवञ्च पूर्णाष्टम्यामष्टमीपूजा, तत्परदिने अष्टमी-नवम्योः सन्धिपूजा, तत्परदिने नवमीपूजा, प्रागुक्तनन्दिकेश्वरपुराणाद्युक्तो-दयगामितिथ्यनुरोधात् तत्परदिने विसर्जनम् पूजानुरोधेनाधिकदिनलाभा-दि"ति समाधानं कृतवान्।

अत्र विमर्शकारः, यत्र षष्टिदण्डात्मिकाऽष्टमी परदिने निःसरति तत्-परदिने मुहूर्तान्यून-नवम्यां नवमीपूजानन्तरं पूर्वाह्णे दशमीमुहूर्तप्राप्तिः परदिनेऽपि मुहूर्तान्यूनदशमी तत्र नवमीयुक्तपूर्वाह्णदशम्यामेव विसर्जनं युक्तम्, अधिकदिननिषेधशास्त्रस्य बलवत्त्वात्, पूजानुरोधाभावात्, 'प्रातः प्रातश्च संपूज्ये'ति क्त्वा-प्रत्ययेनाव्यवहितानन्तर्यलाभात्।

"भगवत्याः प्रवेशादि-विसर्गान्ताश्च याः क्रियाः।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद् बुधः॥

इति नन्दिकेश्वरपुराणाद्युक्तोदयगामितिथ्यनुरोधात् पञ्चमदिने

दशम्यां विसर्जनमित्यप्यनादेयम् त्र्यहपूजने कृतेऽपि नवमीयुक्त-दशम्यां श्रवणलाभे न्यूनत्वप्रसक्तौ निषेधकत्वमित्यत्रोदयगामितिथेर्गौणत्वप्रतिपादनेन स्ववचोव्याघातप्रसङ्गाच्चेति।

अत्र यद्यपि स्मार्तभट्टाचार्यस्य मतमेतदित्येतावतैव पर्याप्तं भवितुमर्हति तथापि येषां न तेन सन्तोषस्तेषामेव तृप्तये ब्रूमः—प्रथमतस्तर्कतीर्थमहोदयेन बलाबलपरिच्छेदे लिङ्गपुराणीय-निषेधशास्त्रस्य सर्वतो बलवत्त्वमित्युक्तम्, तन्न समीचीनम् भविष्यपुराणीय "द्वाभ्यां चतुरहोभिर्वा" इत्यादिवचनेन तस्यापि बाधात्। यदप्युक्तम् अत्र पूजानुरोधाभावादिति, तदपि न मनोरमम्, वक्ष्यमाण-पूजानुरोधपदार्थस्यात्रापि सत्त्वात्। यदप्युक्तम् अव्यवहिता-नन्तर्यलाभादिति तन्न विचारसहम्, अत्र क्त्वाच् प्रत्ययस्यानन्तर्यमात्रार्थकतायाः सकारणमेव प्रतिपाद्यमानत्वात्। स्ववचोभङ्गप्रसङ्गोऽप्यत्र नास्त्येव। तथाहि सामान्यमुखप्रवृत्त-राजमार्तण्ड-दुर्गाभक्तितरङ्गिण्युक्तवचनयोर्विसर्जने श्रवणा-युक्तदशम्या उक्तत्वात् प्रथमतस्तत्रैव विसर्जनप्रसक्तौ न्यूनाधिकदिननिषेध-शास्त्रस्य, उदयगामितिथित्वस्य च द्वयोरेव तुल्यतया निषेधकत्वसम्भवेनैके-नैव निषेधोपपत्तौ द्वयोरुल्लेखस्तु निष्फल एवेति ध्येयम्।

प्रकृतमनुसरामः—

प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत्।
प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत्॥

अत्र च "प्रातः प्रातरि"ति वीप्साश्रुत्या अष्टमी-नवमीपूजयोर्दिनभेदे लब्धे विसर्जनांशेऽपि यत् पुनः प्रातः पदम् तदपि दिनभेदार्थमेवे"ति ग्रन्थकृता प्रति-पादितमेव। प्रातःपदमत्र पूर्वाह्णपरम्, "पूर्वाह्णे नवपत्रिका शुभकरी"त्यादिवच-नैकवाक्यत्वादिति च उक्तम्। अत्र च सम्पूज्येति समुपसर्गेण "शारदीया महापूजा चतुःकर्ममयी शुभे"ति वचनात् स्नपन-पूजन-बलिदान-होमात्मकपूजै-वोच्यते, क्त्वाच् प्रत्ययेन चानन्तर्यमात्रलाभः ततश्च यद्दिवसीयपूर्वाह्णे तादृशी पूजा वर्तते तदनन्तरदिवसीयपूर्वाह्ण एव विसर्जनं भवितुमर्हति। पूजानुरोधा-दितिवचनोक्त-पूजानुरोधपदार्थश्चापि महापूजाविशिष्टपूर्वाह्णाधिकरणदिनोत्तर-

दिनपूर्वाह्णकर्तव्यतारूप एव, तथा च सति स्मार्तभट्टाचार्येण पूजानुरोधादिति यदुक्तं तदप्यव्याहतमेव स्यादिति। न चात्र क्त्वाच् प्रत्ययस्याव्यवहितोत्तरत्वमेवाङ्गीकार्यमित्यपि वाच्यम् पूर्वाह्णे संपूज्य विसर्जयेदित्यनेनैवोपपत्तौ विसर्जनांशे पुनः प्रातःपदं पूजानन्तरदिवसीयपूर्वाह्णपरमेव स्यात। किञ्च अव्यवहितोत्तरत्वकल्पने तस्य अधिकरणचतुष्टय-ध्वंसत्रय-घटितत्वेन महद् गौरवञ्च स्यात्।

अथात्र प्रातःपदाभावे पूर्वाह्णे सम्पूज्य अपराह्णेऽपि विसर्जनं प्रसज्येत तद्वारणायैव प्रातःपदं सार्थकम् इत्यपि नाशङ्कनीयम् पूर्वाह्णे संपूज्य विसर्जयेदित्युक्तौ विसर्जनेऽपि पूर्वाह्ण एवाधिकरणतयाऽन्वेष्यति यथा लोके अद्य भुक्त्वा गमिष्यामीत्युक्तौ गमनांशेऽपि अद्यपदमधिकरणत्वेनान्वेति। सुतरामत्र यदुक्तं पूजाधिकरणदिनध्वंसाधिकरणत्वानुधावनस्यावश्यकत्वेन गौरवादिति तदनुचितम्, प्रमाणसत्त्वे गौरवमप्यकिञ्चित्करमिति शास्त्रकृद्भिः सिद्धान्तितत्वात् प्रातःपदस्य च प्रामाण्यप्रतिपादकस्यात्र विद्यमानत्वात। अव्यवहितानन्तर्यार्थकत्वेऽपि पूर्वाह्णे संपूज्य पूर्वाह्णे विसर्जयेदित्युक्तौ अपि न पूजाविशिष्ट-पूर्वाह्णाधिकरणदिवसीय-पूर्वाह्णे विसर्जनं प्रतीयते एकस्मिन दिने पूर्वाह्णद्वयालाभादित्यपि ध्येयम्।

यच्चान्यदुक्तम् "तथाच सति उक्त-षष्टिदण्डात्मक-नवमीस्थले अधिकदिन-निषेधप्रयुक्तं चतुर्थदिने विसर्जनमिति उदयगामितिथिप्रतिपादकशास्त्रस्याधिकदिननिषेधकशास्त्रेण बाधः अष्टम्याः षष्टिदण्डात्मकत्वेन चतुर्थदिने नवमीपूजा तद्दिने मुहूर्तान्यूनपूर्वाह्णदशमीतिथिः तत्रोदयगामितिथ्यनुरोधेन पञ्चमदिने विसर्जनमिति उदयगामितिथिकर्तव्यताशास्त्रेण पुनरधिकदिनप्रतिपादकशास्त्रस्यापि बाधः इत्येकशास्त्रनिरूपितं बाध्यत्वं बाधकत्वञ्चेति द्वयमेकत्रानिष्टमनुमतमि"ति। अत्रोच्यते—यदत्र बाध्यत्वं बाधकत्वं च प्रदर्शितम्, तत्तु नैव घटते, प्रातः प्रातरिति वचनेन पूजाव्यवहितपरदिने विसर्जनस्य व्यवस्थापितत्वात, पूर्वत्र निषेधशास्त्रस्य परत्र उदयगामितिथिप्रतिपादकशास्त्रस्य च परस्पराबाधेनैव विषयता प्रदर्शितेति तत्त्वम्।

# देवीविसर्जनव्यवस्थाविमर्शो विचारः

[ निबन्धकः—श्रीशशिभूषण-स्मृतितीर्थ-ज्योतिर्विनोदः ]

यत्र चतुर्थदिने नवमीपूजा तद्दिने पूर्वाह्णमुहूर्तव्यापिनी दशमी तत्पर-दिनेऽपि कर्मयोग्या दशमी, तत्र चतुर्थदिने नवमीपूजानन्तरं देवीविसर्जनमिति प्रबन्धलेखकस्याभिप्रायः। स्मार्तमते तु तत्र पूजानुरोधात् पञ्चमदिन एव विसर्जनम्। स्मार्तमते अनुरोधपदार्थश्च कर्तव्यत्व-प्रकारक-निश्चय-रूपः। पूजानुरोधादित्यत्र षष्ठीसमासेन पूजा-सम्बन्धी कर्तव्यताप्रकारक-निश्चय इत्यवगम्यते। पञ्चम्यर्थश्च प्रयुज्यत्वम्, तथाच पूजासम्बन्ध्यभिन्न-कर्तव्यताप्रकारक-निश्चय-प्रयुक्तमिति तस्यार्थः। निश्चये पूजासम्बन्धश्च स्वाव्यवहितोत्तरदिनवृत्तिविषयतानिरूपकत्वम्। नवमीपूजाव्यवहितोत्तर-दिनवृत्ति-देवीविसर्जन-विषयकनिश्चये स्वाव्यवहितोत्तरदिनवृत्तिविषयतानिरू-पकत्व-सम्बन्धेन पूजाविशिष्ट-कर्तव्यता-प्रकारक-निश्चयस्य विषयतासम्बन्धेन विसर्जने वृत्तित्वमस्ति। अतस्तादृश-देवीविसर्जनं पूजानुरुद्धं जातम्। पूजानुरुद्ध-विसर्जन-भिन्न-देवीविसर्जने "न्यूनाधिकं न कर्तव्यमि"त्यस्य विषय-तया, पूजानुरुद्ध-देवीविसर्जनं पञ्चमदिने नाविरुद्धमिति स्मार्ताभिप्रायः। अनुरोधपदार्थश्च प्रायः सर्वत्र प्रागुक्तरूपः। यथा उभयदिने शुक्लपक्षे मध्याह्ने श्राद्ध-योग्य-मृततिथिलाभे परदिने तत् कर्तव्यम्, "शुक्लपक्षे तिथि-र्ग्राह्या यस्यामभ्युदितो रविरि"त्युदयकालव्याप्त्यनुरोधात्। (उदयकालव्याप्ति-विशिष्टतिथिवृत्तिकर्तव्यता-प्रकारक-निश्चयादित्यर्थः)। उभयदिने दशमी-लाभे पूर्वाह्णानुरोधात् परदिने। अत्र पूर्वाह्णानुरोधात् (पूर्वाह्णकालकर्तव्यत्वेन निश्चयादित्यर्थः)। एवं सर्वत्रैवानुरोधशब्दस्य प्रागुक्तः शक्यार्थो लभ्यते। यत्र तादृशार्थस्य बाधस्तत्रानायत्या लक्षणैव। यथा "मां शिक्षयतु" इति गुरुमनुरुणद्धि छात्रः। इत्यत्र स्वाभीष्टप्रयोजक-प्रवृत्ति-जनक-व्यापारेऽनुरुधे-र्लक्षणा।

यत्र पूजादिने तत्परदिने च पूर्वाह्णे कर्मयोग्या दशमी, तत्र

"भगवत्याः प्रवेशादि-विसर्गान्ताश्च याः क्रियाः ।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद् बुधः ॥"

इत्यनेन पूजाव्यवहितोत्तरदिने पूर्वाह्णकालकर्तव्यत्वेन निश्चयात् पूजा-दिवसीय-पूर्वाह्णमुहूर्तव्यापिन्या दशम्याः पर्युदस्तत्वात् तद्दिनकृतं देवी-विसर्जनमसिद्धमेव भवेत् ।

इदानीं प्रबन्धलेखक-महोदयस्य नैयायिक-प्रवरस्य मतसमालोचनं यथामति यथाशक्ति क्रियते । "पूजानुरोधपदार्थश्च मुहूर्तान्यूनपूर्वाह्ण-दशमी-युक्तचतुर्थदिनत्वाभावव्याप्य-नवमीपूजाव्यवहितोत्तरत्वरूपः । नवमी-पूजाव्यवहितोत्तरत्वञ्च —नवमीपूजाध्वंसाधिकरण–दिन-ध्वंसाधिकरण-दिन–ध्वंसानधिकरणत्वे सति नवमीपूजाध्वंसाधिकरणकालत्वरूपं ग्राह्यम् ।" एतेन मुहूर्तान्यूनपूर्वाह्णदशमीयुक्त-चतुर्थदिनत्वाभावव्याप्य-नवमीपूजाध्वंसाधि-करणदिनध्वंसाधिकरण-दिनध्वंसानधिकरणत्व-समानाधिकरण-नवमीपूजाध्वं-साधिकरणकालत्वरूप एव पूजानुरोधपदार्थः प्रबन्धकृत्तर्कतीर्थमहोदयसम्मत इति प्रतिपद्यते ।

"प्रातः प्रातश्च सम्पूज्येति क्त्वा-प्रत्ययेन दर्शितरूपस्यैवाव्यवहितोत्तर-त्वस्य विसर्जननिमित्ततायाः प्रतिपादनात् तादृशाव्यवहितोत्तरत्वस्यैवात्र पूजानुरोधघटकत्वमावश्यकम् ।" इतीदमपि तर्कतीर्थमहोदयेनाभिहितम् ॥

अत्रेदं पृच्छ्यते आनन्तर्यमात्रवाचकस्य क्त्वा-प्रत्ययस्य, कथं दर्शित-रूपस्यैवाव्यवहितोत्तरत्वस्य बोधकत्वं सम्भवति ? शक्यार्थबाधविरहेण तात्पर्यानुपपत्त्यन्वयानुपपत्तिरूपकारणाभावेन च लक्षणाया असम्भवात् ।

कथं वा नवमीपूजाव्यवहितोत्तरत्वस्य, नवमीपूजाधिकरण-दिनध्वंसाधिकरण-दिनध्वंसानधिकरणत्व-समानाधिकरण-नवमीपूजाध्वंसाधि-करणकालत्वरूपार्थकत्वं सम्भवति ? कालविशेषवाचक-पदासमभिव्याहृत-पूजा-व्यवहितोत्तर-शब्देन, पूजाधिकरण-समय-ध्वंसाधिकरण-समय-ध्वंसानधि-करण-पूजाधिकरण-समय-ध्वंसाधिकरणसमयस्यैव प्रतिपादनात् । तादृश-

समयस्तु पूजासमाप्त्यनन्तरक्षणरूप एव, न तु भवदभिमत-तादृशकालत्व-रूपः। न हि "पापकर्माव्यवहितोत्तरं दुरदृष्टं जायते," "भोजनाव्यवहितोत्तरं तृप्तिर्जायते" इत्युक्ते पापकर्माधिकरणदिनध्वंसाधिकरणदिनध्वंसानधिकरण-पापकर्मध्वंसाधिकरणकाले दुरदृष्टं जायते इत्यर्थो लभ्यते। एवं भोजना-व्यवहितोत्तरं तृप्तिर्जायते इत्यादावपि। न च लक्षणया तादृशार्थकत्वं वाच्यम्, लक्षणाहेतोरभावात्।

"पूजाव्यवहितोत्तरत्वञ्च तादृशकालत्वरूपं ग्राह्यमि"त्युक्तम्। अत्र भवा-नेवं पृच्छ्यते, तादृशार्थस्य ग्राह्यत्वे किं सम्राड्महोदयस्यादेशोऽस्ति? उत महर्षीणामभिप्रायोऽस्ति? आहोस्विद् भवतः कल्पनैव नियामिका? तत्र सम्राडादेशो न केनचिज् ज्ञायते, सत्यपि भूपतेरादेशे शास्त्रीयार्थविचारे तस्याप्रयोजकत्वात्। महर्षीणामपि तादृशार्थग्रहणे नाभिप्रायः, केषाञ्चि-दपि प्रबन्धकर्तॄणां मनीषिणां तस्यानभिधानात्। पारिशेष्याद् भवदीय-कल्पनयैव तादृशार्थस्य ग्राह्यता प्रतीयते। न च तद् युक्तम्, शास्त्रीयपदार्थ-विचारे शास्त्रप्रतिपाद्यार्थग्रहणस्यैव नियामकत्वात्। तस्माद् भवदभिमत-पूजानुरोधपदार्थस्य, सम्बन्धनिर्णयदक्षस्य नैयायिकविचक्षणस्य स्मार्त-परीक्षकस्य भवतः कल्पनामात्रलब्धस्य प्रमाणपरतन्त्रैरतन्त्रीकर्तव्यत्वेन प्रमाणसिद्धत्वाभावादनादेयत्वमेव।

यच्चाभिहितं "उदयगामितिथिप्राशस्त्यम्" तदपि न शास्त्रसम्मतम्। उभयदिने दशमी यदि मुहूर्तात्मक-पूर्वाह्णव्यापिनी तदा परदिवसीय-दशम्या-मेव विसर्जनस्य कर्तव्यत्वेन पूर्वदिवसीय-दशमीविसर्जनस्य पर्युद-स्तत्वात्। भ्रमात् पूर्वदिने कृतमपि विसर्जनमसिद्धमेव भविष्यति। उदयगामितिथेः प्राशस्त्ये च, पूर्वदिवसीय-विसर्जनस्यापि साफल्य-प्रसक्तिः स्यात्। तच्च न सम्भवति तिथेरेकतरखडे, तत्तत्कृत्यस्य नियामकतया अपरखण्डस्य विधिविषयताभावेन पर्युदस्तत्वात्।

यच्चोक्तम् "त्र्यहपूजने कृतेऽपि नवमीयुक्त-दशम्यां श्रवणलाभे न्यूनत्व-प्रसक्तौ निषेधकत्व" मित्यनेन चतुर्थदिने उदयगामितिथि-सत्त्वेऽपि पूर्वदिने

विसर्जनप्रसक्तिकथनादुदयगामितिथिकर्तव्यताया गौणत्वप्रतिपादनेन स्ववचोव्याघात-प्रसङ्गादिति" तदपि न मनोरमम्, न खलु प्रसक्तिप्रतिपादनमेव गौणत्वप्रयोजकम्। श्रवणा-नक्षत्र-योगस्य यथा प्रमाणान्तरेण गुणफलत्वं प्रतिपादितं तथा "न्यूनाधिकं न कर्तव्यमि"ति लिङ्गपुराणीयेन निषेधमुखेन तस्य गुणफलत्वमेव प्रतिपादितम्। श्रवणानक्षत्रस्य गुणफलत्वमजानतां पुरुषाणां भ्रमात् कर्तव्यतापत्तेस्तन्निरसनाय निषेधः सार्थकः। अतो नोदयगामि-तिथेर्गौणत्वं प्रतिपादितं स्मार्त्तेन। तस्माद् बृहत्-कलेवर-पूजानुरोधपदार्थं कल्पयित्वा स्मार्तसन्दर्भे यो दोषाभास उद्भावितः स चास्मभ्यं न रोचते। इति महामनीषिभिः स्मार्तशिरोमणिभिर्विचारदक्षैर्निरपेक्षमवेक्षणीयमिति सानुनयं निवेदयामि। प्रयोजनञ्चेदनन्तरमपि वक्तव्यम्।

---

## 'देवीविसर्जनव्यवस्थाविमर्श'-सिद्धान्तः

[ निबन्धकः—श्रीकैलास-चन्द्र-स्मृतितीर्थः ]

विगताग्रहायणमासीय-संस्कृत-साहित्य-परिषत्पत्रिकायां श्रीमत्-पण्डित-प्रवरचण्डीचरणतर्कतीर्थमहोदयैर्लिखितं शारदीयदुर्गापूजायां 'देवीविसर्जन-विमर्शम'वलोक्य, रघुनन्दनग्रन्थमात्रमवलम्ब्य नानाविधविधिकल्पनादिभिरात्मनो विचारनैपुण्यं प्रकटीकृतं तर्कतीर्थमहोदयैरिति नितरां प्रीतिमनुपगता वयमेतादृशस्थले उभयदिने पूर्वाह्णे कर्मयोग्य-दशमी-प्राप्तौ, किं "मष्टाहे विसृजेच्छक्रमि"त्यादिवचनात् पूर्वदिने, उत "भगवत्याः प्रवेशादी"त्यादिवचनात् परदिने देवीविसर्जनं कर्तव्यमिति सन्देहे, पत्रीप्रवेशचतुर्थदिवसीय-पूर्वाह्णदशमीकर्तव्यत्वोदयगामिदशमीकर्तव्यत्वैतदुभयस्यैव व्यभिचारितया; उदयगामि-दशमीकर्तव्यतायां प्रमाणबाहुल्यमेव निरपवादं विनिगमकमवगच्छामः।

विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् ।
तुल्यप्रमाणसत्त्वे तु न्याय एव प्रमाणवित् ।। इति नियमात् ।

तथा ह्यत्र पूर्वदिनकर्तव्यतापक्षे—

अष्टाहे विसृजेच्छक्रं तदर्द्धे न तु पार्वतीम् ।
न्यूनाधिकं न कर्तव्यं राज्ञो राष्ट्र-धन-क्षयात् ।।१।।

इति लिङ्गपुराणवचनम् ।

विशेषेण शरत्काले राज्ञो राष्ट्रधनक्षयात् ।
न्यूनाधिकं न कर्तव्यमात्मनो भूतिमिच्छता ।।२।।

इति भविष्यपुराणवचनञ्च द्वे एव प्रमाणे ।

परदिनकर्तव्यतापक्षे तु—

भगवत्याः प्रवेशादि-विसर्गान्ताश्च याः क्रियाः ।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद् बुधः ।।१।।

इति नन्दिकेश्वरपुराणवचनम् ।

नवम्यान्तु समारभ्य यावच्च दशमीं गुह ।
तिथावुदयगामिन्यां पूज्या महिषमर्दिनी ।।२।।

( नवम्यां कृष्णायाम्, दशमीं शुक्लाम् )

इति यादवमिश्रकृततिथिसारधृतमहानन्दिकेश्वरपुराणवचनम् ।

शरत्काले महापूजा क्रियते या च वार्षिकी ।
सा कार्योदयगामिन्यां न तत्र तिथि युग्मता ।।३।।

इति दुर्गाभक्ति-कौमुदीधृतवचनम् ।

सप्तमी वाऽष्टमी वापि नवमी षष्टिदण्डिका ।
निःसरेदपरे घस्रे तदोत्सर्गस्तु पञ्चमे ।।४।।

इति पद्मपुराणवचनम् ।

यदि कश्चित् प्रमादेन नवम्यन्ते विसर्जयेत् ।
तस्य हानिर्भवत्यब्दे तस्मिंस्तत् परिवर्जयेत् ।।५।।

इति सारसमुच्चय-धृत-वचनञ्च पञ्च प्रमाणानि ।

एवञ्च शारदीयदुर्गापूजायां सति सम्भवे उदयगामिन्यामेव दशम्यां विसर्जनं कर्तव्यम्। न तु उदयगामिनीं दशमीं परित्यज्य पत्रीप्रवेशाच्चतुर्थ-दिनेऽनुदयगामिन्यामपीति सिद्धान्तं समीचीनं मन्यामहे। ध्येयमन्यत् सुधीभिरिति शिवम्।

---

# "धर्ममीमांसासंग्रहे" प्रतिवादपरिहारः

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः एम्.ए ]

तत्रभवतः संस्कृत-साहित्य-परिषत्पत्रिकापाठकान् मनीषिण उद्दिश्य ममैतन्निवेदनम्। वर्णाश्रमधर्ममालम्ब्य मनुयाज्ञवल्क्यादिभिरुपदिष्टं पन्थान-मनुसृत्य मया 'धर्ममीमांसासंग्रहो'नाम कश्चिन्निबन्धो निबद्धः। तस्य किया-नंशः परिषत्पत्रिकायां प्रकाशितः। तत्र च केनचित् प्रतिवादकेन कांश्चिद्दोषा-भासान् प्रदर्श्य प्रतिवादः कृतः। परन्तु प्रतिवादकस्य द्वेषमूलां महद्भिरजुष्टां भाषाप्रकृतिमालक्ष्य वृथाऽनेन वादप्रतिवादादिकं न कार्यमिति मनसि अव-धार्याहं एतावत्कालं मूकीभूतः स्थितः। अधुना तु कैश्चित् सुहृदयैः पुनः पुनरनुरुद्धोऽहं भवतामवधानाय किञ्चिद् विज्ञापयामि।

वङ्गीया वैद्या वैश्या वा क्षत्रिया वा ब्राह्मणा वा देवा वा भवन्तु, नैतन्मम विचारपदवीमारोहति। मया तु ऋषिभिः प्रदर्शितं वैद्योत्पत्तेः प्राधान्येन त्रैविध्यं निर्दिष्टम्। वङ्गीयवैद्यस्तेषां क्वचिदन्तर्भवतु वा अपरो वा कश्चिद्भवत्विति त एव वैद्या निर्दिशन्तु। तेषां निर्देशो यदि वङ्गीयवर्णाश्रमिभिरनुमोदितः परिगृहीतश्च स्यात् कामं सुखकारणमेवैत-दस्माकं भवेत्। परन्तु प्रतिवादकेन 'इह खलु भारते सर्वत्रैव विशुद्धा एव

ब्राह्मणाश्चिकित्सावृत्तिमाश्रित्य वैद्यशब्देनाभिधीयन्ते। वङ्गेष्वपि तादृशा एव' इति यत् प्रतिपादितं तन्न मनोरमम्; यतः 'स्त्रीहिंसौषधजीवनम्' इत्यादिभिर्बहुभिर्वाक्यैर्ब्राह्मणानां चिकित्सावृत्तेरुपपातकत्वमृषिभिर्बहुधा गीतम्। तथा सति चिकित्सावृत्त्याश्रयणेऽपि कथं ब्राह्मणानां विशुद्धत्वं सम्भवति।

यत्तूक्तं प्रतिवादकेन 'सर्वत्रैव ब्राह्मणाश्चिकित्सकवृत्तय' इति तदपि चिन्त्यम्। यत ऋषिभिः—

"नृपायां विप्रतश्चौर्यात् संजातो यो भिषक् स्मृतः।
अभिषिक्तनृपस्याज्ञां प्रतिपाल्य तु वैद्यकः।
आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत्॥"

इत्युक्तम्। एवञ्च 'अम्बष्ठानां चिकित्सितमि'त्यादिवचनैर्यद् ब्राह्मणेतरेषां केषाञ्चिदनुलोमसङ्कराणां चिकित्सावृत्तिर्विहिता नैष्फल्यमेव तद्विधानस्य जायते। ब्राह्मणानां चिकित्सावृत्तेर्निन्द्यत्वन्तु प्रागेव प्रतिपादितम्।

अथैतेऽपि ब्राह्मणादुत्पन्नत्वाद् जात्या ब्राह्मणा एवेति प्रतिवादकस्य सिद्धान्तश्चेत् तदा ऋषिभिरुक्तायाः सङ्करजातेरुच्छेद एव प्रसजति, सर्वत्रैव समानन्यायप्रयोगसम्भवात्। परन्तु शास्त्रे सङ्करजातेर्वर्णत्वं निषिध्यत इत्यस्माभिरुपलभ्यते। एतां युक्तिमाश्रित्यैव

"शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।
संस्कृतस्तु भवेद्दासो ह्यसंस्कृतस्तु नापितः॥"

तथा "वैश्यायां विप्रतश्चौर्यात् कुम्भकारः प्रजायते" इत्यादिवचनदर्शनेन दास-नापित-कुम्भकारादयो वङ्गेषु स्वेषां ब्राह्मणत्वं व्यवस्थापयन्ति प्रचारयन्ति च।

यत् पुनरुक्तं प्रतिवादकेन "ये च वङ्गेषु वैद्या इत्यभिधीयन्ते तेऽपि न हि जात्या ब्राह्मणेतराः" इति। नैतन्मम विचारविषयत्वं गच्छति। यत ऋषिभिस्तन्न निर्दिष्टम्, तत् कथमेतन्ममालोचनाविषयः स्यात्। सामाजिकैर्वर्णाश्रमिभिः प्रचलनपरम्पराप्रदर्शनेन तन्निर्धार्यताम्। वयन्तु वङ्गीय-

वैद्येषु बहुरूपित्वमालक्ष्यामस्तद्यथा केचिदुपनीताः केचिदनुपनीताः केचित् कायस्थादिभिः कृतयौनसम्बन्धा इत्यादि। ब्राह्मणमहामहीरुहस्य शाखात्वेऽपि सर्वे ब्राह्मणा एव भवन्तीति यत् प्रतिवादकेन प्रतिपादितम्, शास्त्रविरुद्धत्वान्नैष ग्रहणयोग्यः सिद्धान्तः। सारस्वतब्राह्मणा ब्राह्मणा वा वैश्या वा तत् त एव जानन्ति, नास्ति मादृशानां तद्वंशानुसन्धानेन प्रयोजनम्। तत्र त्वेतदेव मे वक्तव्यं यदि ते ब्राह्मणा अपि वंशपरम्परया चिकित्सामवलम्बन्ते तदा ते पातकिनः पतिता एवेति।

प्रख्यातनाम्नो वहोः कालाद् आदृत-मतवादस्य वङ्गीयस्मृतिनिबन्धकस्य रघुनन्दनस्य मतावलम्ब्यहमिति कृत्वा प्रतिवादकेन तिरस्कृतोऽहम्। किन्तु रघुनन्दननिर्दिष्टपथानुसरणेन कश्चिद्दोषो मया न परिलक्ष्यते। यतो मम पितृपितामहादयो वङ्गीयवर्णाश्रमिणश्च वहोः कालाद् रघुनन्दननिर्दिष्टपथमेव दैवपैत्रादि-धर्म्यकर्मस्वनुसृतवन्तः। ततश्च रघुनन्दननिर्दिष्टपथावलम्बनेनाहमात्मानं पवित्रमेव मन्ये। न जाने प्रतिवादकस्य रघुनन्दनं प्रति द्वेषकारणम्।

यस्तु प्रतिवादकेनोक्तं

"विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम्।
जातः सुवर्ण इत्युक्तः सोऽनुलोमद्विजः स्मृतः॥"

इत्यादि महर्षेरुशनसो वचनानि "वङ्गवासी" मुद्रणालयमुद्रितसंहितायां न दृष्टानी"ति तत्रान्यापि अंशान्तरेण निर्दिष्टा उशनःसंहिता वर्तते यत्र जातिविवेकः कृतः। पुण्यपत्तनस्थानन्दाश्रमान्मुद्रितं स्मृतिसमुच्चयं पश्यतु प्रतिवादकस्तत्रोपलप्स्यते। वचनेऽस्मिन् 'जार' इत्यत्र 'जात' इत्येवाकरे पाठः ; लेखकप्रमादान्मुद्राकरप्रमादाद्वाऽन्यथा जातः।

यदुक्तं प्रतिवादकेन "शनैः शनैः क्रियालोपादथ ता वैद्यजातयः" इत्यादि विष्णुवचनं न दृष्टम् इति, तत् "हितवादी" कार्यालय-प्रकाशित-शब्दकल्पद्रुमग्रन्थे वैद्यशब्दो लक्ष्यतां तत्राधिगंस्यते।

यत्तूक्तं प्रतिवादकेन "अश्विनीकुमारजा वैद्या ब्राह्मणा एव ब्राह्मण-

मातृकत्वात्" इति तदपि न सुचिन्तितम्। यतोऽयं व्यक्तिविशेषो वैद्यो न अश्विनीकुमाराद्ब्राह्मणकन्यायां जातः अपि तु ऊढायामेव ब्राह्मण्याम्। तेन चास्य कुण्डत्वम्। तथाच मनुः "पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलक" इति। तेनास्य शूद्रत्वं निरूपितम्। ब्रह्मवैवर्तपुराणे शब्दकल्पद्रुमस्थे वैद्यशब्दे चैतदनुसन्धीयतां प्रतिवादकेन, सर्वं स्पष्टीभविष्यति।

यदुक्तं प्रतिवादकेन "माता भस्त्रा पितुः पुत्र" इत्यादि विष्णुवचनम् "अनुलोमासु मातृवर्णाः" इत्यादि विष्णुसूत्रस्य यथाश्रुतार्थकरणेन सम्मतं स्यादि"ति, तदपि यत्किञ्चित्करम्। "माता भस्त्रा पितुः पुत्रः" इत्यादि वचनं श्राद्धाधिकारं धनाधिकारञ्चोद्दिश्य विष्णुनोक्तमिति विस्मृतं प्रतिवादकेन। कं वा स्वार्थं मनसिकृत्य "अनुलोमासु मातृसवर्णा" इति सूत्रस्यार्थान्तरकरणे प्रतिवादकस्यैतावान् प्रयासस्तन्नानुभवामः।

'असवर्णाविवाहो न ब्राह्मः' इति मया यत् प्रतिपादितं तदवलम्ब्याहमाक्रान्तः प्रतिवादकेन। तत्र च मया प्रमाणं प्रदर्शितं यथा—"तथा च शङ्ख-लिखितौ "सवर्णः सवर्णाय विदितो विदिताय नग्निकां दद्यात् स ब्राह्म" इति। एतेनाहं दैवार्षप्राजापत्यरूपविवाहानाम् अप्राशस्त्यं नोक्तवान्। तेन च मदीयसिद्धान्तेन मनुविरोधः कथं स्यादिति नानुभवामः। ततश्च किमाक्रमणकारणमिति किं स्पष्टीकृत्य प्रकाशयिष्यति प्रतिवादकः।

प्रतिवादकप्रतिपादित-निबन्धसमालोचनेन सुमहान् ग्रन्थो भविष्यतीत्यतस्तस्मादधुना विरम्यते मया। एतत्तु परिलक्ष्यते यद् वैद्यब्राह्मणयोरेकत्वस्थापनाय कृतः सम्यक् प्रयत्नः प्रतिवादकेन। तत्रैतन्मम वक्तव्यम्—नाहं वैद्यकुलपञ्जिकायां निष्णातः। कथं तेषां जातिनिरूपणसमर्थः स्याम्। परन्तु शास्त्रतो व्यवहारतश्च वैद्य-ब्राह्मणयोरेकत्वकारणं नानुभवामि। वङ्गेषु ब्राह्मणानां वैद्यत्वे वैद्यानां वा ब्राह्मणत्वे वा यदि कश्चिद् विरोधः स्यात् तदा वङ्गीयपण्डितकुलमेव तद्विरोधसमाधानं करिष्यति, कथं मादृशानां तत्र यत्नः स्यात्। किन्त्वेतद् विद्वद्भिः स्मर्तव्यं यद्वैद्य-ब्राह्मणयोरेकत्वे—

"कच्चिद्देवान् पितॄन् भृत्यान् गुरून् पितृसमानपि ।
वृद्धांश्च तात ! वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥"

( रामायणे अयोध्याकाण्डे १०० अध्याये १३ श्लोकः )

इत्यादि वाक्येषु वैद्य-ब्राह्मणयोः पृथक्करणात् पुनरुक्तिः स्यात्। वैद्यपदस्य-ब्राह्मणविशेषणत्वेऽपि चकारबाहुल्यात् तात्पर्यहानिः स्यात्।

अहन्त्वेतत् पण्डितकुलं विज्ञापयामि, मदीयनिबन्धे प्रतिवादकारोपिता दोषास्तेनैव विचारणीयाः। नास्ति मे जातिविशेषे द्वेषकारणम्। शास्त्रेषु यन्मयोपलब्धम् तदेव निबन्धे निबद्धम्। मन्दबुद्धेरपि मम निबन्ध-प्रणयनप्रयासकारणन्तु वाचस्पति-शूलपाणि-रघुनन्दनादिभिर्यन्मन्वादिस्मृति-मालम्ब्य निबन्धशास्त्रं प्रणीतं तत्र तैः श्राद्ध-शुद्ध्यादिकमेव निर्णीतम्। धर्मसंहितासु वर्णाश्रमादिविषयो बाहुल्येन वर्तमानोऽपि प्राचीननिबन्धकृद्भिः परिहृतः। तेन हेतुना मया मन्वादिभिर्ऋषिभिश्चोक्तं वर्णाश्रमविषय-मवलम्ब्य कश्चिन्निबन्धः कृतः। एतद्ग्रन्थीयवर्णधर्मस्य कियानंशः "संस्कृत-साहित्य-परिषत"पत्रिकायां प्रकाशितः। आश्रमधर्मस्त्वधुनापि न प्रकाशित एव। तत्कारणन्तु नाहमुपलभे। तत्र पण्डितसमाजे ममैतत् सानुनयं निवेदनम्—यदि मदीयग्रन्थे सिद्धान्तगतः कश्चिद्दोषस्त्रुटिर्वा परिलक्ष्यते तदा दोषप्रदर्शनेन सदुपदेशदानेन च स दोषः परिहरणीयोऽनुग्राह्यश्चाहमिति, येन ग्रन्थोऽयं सुपाठ्यः स्यात्।

अपराऽस्त्येषा मे महती शङ्का यत् प्रतिवादक-शर्मा शर्मापि कथं शर्मणाम् ( ब्राह्मणानाम् ) आक्रमणे कृतप्रयत्नः स्यात्। ( तच्च तेन पत्रिकायाः २४५ पृष्ठे सम्यगनुष्ठितम् )। अथैतदाक्रमणं द्वेषमूलकमिति तदा नास्ति मे वितण्डाप्रयोजनम्, "न हि रुतमनुरौति ग्रामसिंहस्य सिंहः" इति।

———

# श्रीहर्षबाणभट्टीयम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—आर्-रङ्गाचार्यः ]

हर्षः—( दूरादेव बाष्पायमाणदृष्टिः ) अम्ब ! त्वमपि मन्दपुण्यं मां त्यजसि । प्रसीद । निवर्तस्व । प्राथ्वमभ्यर्थये । ( इत्यभिदधान एव मातुश्चरणयोर्दण्डवन्निपतति देवी च सस्नेहमुत्थाप्यैनं कमलकोमलेन कराञ्चलेन सबाष्पामस्य दृष्टिमुन्मार्ष्टि ) ।

यशोवती—ननु वत्स ! नासि न प्रियो निर्गुणो वा परित्यागार्हो वा । मरणाच्च मे जीवितमेवास्मिन्समये साहसम् । अपि च जीवन्तीमपि मां नरपतिमरणावधीरणमहापातकिनीं न स्प्रक्ष्यन्ति पुत्र राज्यसुखानि । दुःखदग्धानां च भूतिरमङ्गला अप्रशस्ता च भवति ! वत्स ! विश्वस्तानां यशसा स्थातुमिच्छामि लोके न वपुषा कृतघातिना । तदहमेव तात त्वां प्रसादयामि । न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयाऽस्मि ।

हर्षः—( क्षणमिव सचिन्तः स्थित्वा ) किं मयात्र प्रतिपत्तव्यम् । न मे पाणिपादं प्रसरति । वाक् च स्खलति । अम्बा तु कृतनिश्चया, दुश्शका विनिवर्तयितुं ( इत्यवचनोऽधोमुखस्तिष्ठति । यशोवती सपदि निष्क्रान्ता ) ।

( ततः प्रविशत्यपटीक्षेपेण मन्त्री । तादृशं विषण्णहृदयं दृष्ट्वा )

मन्त्री—( शनैः शनैः ) ननु राजपुत्र, नार्हस्येवं भवितुम् ।

हर्षः—( अवचनः )

मन्त्री—देव ! क्षन्तव्यम् । न हि भवद्विधा अमहासत्त्वाः । सत्त्ववतां भवानग्रणीः । क्व भवान् । क्व वैक्लव्यम् । कुलप्रदीपोऽसि । ननु पुरुषसिंहः खलु भवान् । मा शोचीः ।

हर्षः—( शोकावेगविवशस्तिष्ठति ) ।

मन्त्री—देव ! दयस्व । किंचिद्विज्ञाप्यमस्ति । देवस्यानुज्ञां प्रतीक्षे ।

हर्षः—( न किमपि ब्रूते, क्षणमिव पश्चात् ) यदि वक्तव्यं परिमितै-रक्षरैरभिधीयताम् । को विशेषः ?

मन्त्री—देव ! वयं मन्त्रिणः खलु । यो नामास्माकं धर्मः सोऽवश्य-मस्माभी रक्षणीयः । यद्राज्यस्य प्रजायाश्च हितं तदस्माभिरनुचिन्तनीयम् । यद्भूत्, भवति यच्च भविष्यति तदनुगुणं राज्यकार्याण्यवेक्षणीयानि । एष खलु कुलामात्यानां धर्मः ।

हर्षः—( सोत्प्रासम् ) किं तद् यद्भविष्यतीति । भविष्यन्तीं कथा-मधिकृत्य का नामाधुना चिन्ता ।

मन्त्री—देव ! प्रसीद । देवस्य ज्यायान्भ्राता राज्यवर्धनोऽस्ति खलु ?

हर्षः—आमस्ति ।

मन्त्री—यदि नाम पितुरिदानींतनी शरीरस्थितिस्तस्य कर्णजाहं विगाहेत असावविलम्बितमत्र प्रत्यागच्छेत् किल ।

हर्षः—नियतमार्याय मया संदेशोऽपि प्रहितः । नूनं स प्रत्यागच्छेत् । तेनावश्यमत्रागन्तव्यम् । मयाऽपि पुरस्करणीयः ।

मन्त्री—( ससंभ्रमम् ) देव ! दयस्व । जानाति भवान् महाराजस्य तातस्य हृदयम् । अयम् आत्मनः परं भवन्तमेव सिंहासनाधिरूढं द्रष्टुं कृतमनाः । वयं तु मन्त्रिणः । भवतोऽभिमतं ज्ञात्वा तातस्य महाराजस्य मनोरथोऽस्माभिः पूरणीयः ।

हर्षः—( ससंभ्रमम् ) नहि । नहि । न कदाऽपि । इदं भवतां वचनं क्षते क्षारावसेचनमिव दुःखदग्धं मम हृदयमतितमां पीडयति । मुञ्चत माम् । एकान्ततः स्थातुमिच्छामि । निर्मक्षिकं क्रियताम् ।

( मन्त्रिणस्सर्वे ससंभ्रमं निष्क्रान्ताः )

इति प्रथमोऽङ्कः ।

---

# द्वितीयोऽङ्कः

( ततः प्रविशति विमनायमानो राज्यवर्धनः )

राज्यवर्धनः—( सोत्कण्ठम् ) कः कोऽस्ति भोः ।

प्रविश्य प्रतीहारी—वर्धतां भर्तृदारकः ।

राज्य—अये कनीयान् श्रीहर्षः कुत्र वर्तते, मद्वचनेनाभिधीयताम्—"तेनात्र क्षेपीयः समागन्तव्यमि"ति

( प्रतीहारी निष्क्रम्य, पुनः श्रीहर्षदेवेन सह प्रविशति )

राज्य—वत्स ! कनीयसी राज्यश्रीः, अनुरूपेण भर्त्रा सङ्गता सुखमास्ते । यद्यपि यवीयसी वयसा, गरीयसी धिया, धृत्या अन्यैश्च राजदारसमुचितैर्गुणैः । सा स्वस्तिमती यशस्विनी च, स्वनामानुगुणं राज्यश्रीः राज्यश्रीरिव शोभते ।

हर्षः—नन्वार्य ! सर्वथा तथैव ।

राज्य—त्वमपि कनीयान् भ्राता । जनुषैव सम्राट् । शैशव एव त्वया गृहीता तातस्य चित्तवृत्तिः । नावलम्बनीया बालभावसुलभा प्रेमविलासा वामता । न खलु न जानासि लोकवृत्तम् । स्त्रियो हि विषयः शुचाम् । मम हि भूभृति पर्यस्ते प्रनष्टः प्रज्ञानालोकः । बलीयसा सन्तापेन जातुषमिव विलीनमखिलं धैर्यम् । आश्रयपदे वस्तुं वाञ्छति मनः । जरामिव "पूरुः" आज्ञां गुरोः, गृहाण मे राज्यचिन्ताम् । परित्यक्तं मया शस्त्रम् । ( इत्येवमभिधाय निजं निस्त्रिंशं धरण्यामुत्ससर्ज ) ।

हर्षः—( तदाकर्ण्य निशितशिखेन शूलेनेवाहतः समचिन्तयत ) आर्य, नेदं समुचितम् ।

राज्य—कुतः । किं मन्यसे ।

हर्षः—आर्य, नैवं वक्तुं युक्तरूपं भवतः ।

राज्य—कुतो न। पूर्वमेव मया सम्यक् चेतितमिदम्।

हर्षः—किं नु खलु मामन्तरेणार्यः केनचिदसहिष्णुना किञ्चिद्ग्राहितः स्यात्। उतानया दशा परीक्षितुकामो माम्। अहो मां यत्किंचित्कारिणमपुष्पभूतिवंशजातमेव मन्यते? तदसदृशमार्यस्य। मम आर्य एव सर्वथा आचार्यः। को हि नाम तद्विधे निपतति जनयितरि भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि तपोवनं गच्छति वसुधाभिधानं मृद्गोलं कामयेत?

( नेपथ्ये महान् कलकलः। सबाष्पनयनो विमुक्ताक्रन्दः सहसा संवादकः प्रविशति )

राज्य—( साश्चर्यम् ) अहो! राज्यश्रिया वार्ताहरः संवादकः!! एह्येहि, को विशेषः!

संवादकः—( दीर्घमुष्णं च निश्वस्य ) हा!! हतविधे!! ( शिरसि पाणिं कृत्वा क्रन्दति )।

राज्य—समाश्वसिहि, भद्र, समाश्वसिहि। किमधिकतरमितोऽपि कष्टं समुपनयति विधिः।

संवादकः—देवपादाः! हा!! कथं विज्ञापयामि। न मे जिह्वा प्रह्वा भवति।

राज्य—किं यत्किञ्चिदशुभम्? अपि कुशलिनी राज्यश्रीः?

संवादकः—हा!! कष्टम्। विषमिव कथमहमिदमाविष्कुर्याम्।

राज्य—भद्र! धैर्यमवलम्बस्व। भण। भण।

संवादकः—( चक्षुषी कराभ्यां पिधाय तारस्वरेण क्रन्दन् ) हा!! देव!! यस्मिन्नहनि अवनिपतिरुपरत इति वार्ता, तस्मिन्नेव देवो गृहवर्मा—दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः।

राज्य—किमासीदायुष्मत्या भगिन्या राज्यश्रियः।

संवादकः—क्षन्तव्यं देवपादैः। भर्तृदारिकाऽपि राज्यश्रीः कालायसनिगडितचरणा चौराङ्गनेव संयता कान्यकुब्जकारायां निक्षिप्ता।

राज्य—अहो !! मालवशुनकस्य दौरात्म्यम् !! ततः किमासीत् ।

संवादकः—अपि च काचन किंवदन्ती श्रूयते । यथा किल अनायकं साधनं मत्वा जिघृक्षुः स दुर्मतिः एतामपि भूमिमाजिगमिषति । इति विज्ञापिते प्रभुः प्रभवति ।

राज्य—( तादृशं व्यतिकरं समाकर्ण्य भयङ्करेण कोपावेशेन झटिति खड्गं करेणादाय ) आयुष्मन् हर्ष ! इदं राजकुलम् । एताः प्रजाः । गतोऽहमद्यैव मालवकुलप्रलयाय । इदमेव तावद्वल्कलग्रहणम् । तिमिरैस्तिरस्कारो रवेरिव यो मालवशुनकेन परिभवः पुष्पभूतिवंशस्य ।

हर्षः—एवमपराध्यन् किमद्यापि स शुनको जीवति !

राज्य—वत्स ! हर्ष ! तिष्ठन्तु सर्व एव राजानः करिणश्च त्वयैव सार्धम् । अविलम्बितं सेनापतिः समादिश्यताम्, युद्धाय संनह्यतामिति ।

हर्षः—आर्य ! कमिव दोषं पश्यति भवान ममानुगमने ?

राज्य—अङ्ग ! बालः खल्वसि । अकृतहस्तो युद्धकर्मणि ।

हर्षः—तर्हि एकाकी न त्याज्योऽस्मि । अशक्त इति क परीक्षितोऽस्मि । रक्षणीयश्चेद् भवद्भुजपञ्जरं मे रक्षास्थानम् । कातरो भ्रातृस्नेह इति चेत् सदृशो दोषः ।

राज्य—वत्स ! शुनकनाशाय द्वयोर्मृगेन्द्रयोर्गमनमसांप्रतम् ।

हर्षः—तर्हि आर्यो मामनुगृह्णातु गमनाज्ञया । प्रसीदत्वार्यः । नयतु मामपि । ( इति पादयोः पतति ) ।

राज्य—ननु भ्रातः ! किमिदमेवं व्यवसितम् । हरिणार्थोऽयमतिह्रेपणः शरभसंभारः । यद्यावामुभावभ्यमित्रं गच्छेव, तस्य शुनकस्य गर्वो दुर्वारः स्यात् । तन्मास्तु । क्षम्यतामयमेकः स्वकार्यपरतादोषः । तिष्ठतु भवान् । ( इत्यभिधाय सहसा निर्जगामाभ्यमित्रम् ) ।

( निष्क्रान्ताः सर्वे ) ।

इति द्वितीयोऽङ्कः ।

---

# तृतीयोऽङ्कः

(ततः प्रविशति विमनायमानः सव्येन पाणिना कपोलं धरन्नासीनो हर्षदेवः)

हर्षः—हा ! तथा गते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च जामातरि, संयतायां च स्वसरि, किमनेन मया जीवता लोके कर्तव्यमस्ति ? हन्त !! दिष्टस्य वामा गतिः ।

"दुरात्मा दुष्कार्यैर्गमयति सुखं कालमखिलं-
र्न धर्माणामेकं कलयति चिरं सैव जयति ।
चरन् धर्मान् नैजाञ्जन इह परिभ्रश्यति सुखा-
दहो वामा रीतिः प्रभवति विधेर्दुष्परिहरा ॥" ( सं चं )

( इति चिन्तयन्नासनस्थ एव क्षणं निद्रायते । झटिति प्रबुध्यते च ) हा ! कोऽयं दुर्दर्शः स्वप्नः !! हा !!! अभ्रंलिहं लोहस्तम्भं भज्यमानमपश्यम् । किं नु खलु मामेवममी संततमनुबध्नन्ति दुःस्वप्नाः ? स्फुरति च दक्षिणमक्षि ? सर्वथा स्वस्ति भवत्वार्याय ( इति चिन्तयन्नस्ति )

( नेपथ्ये महान् कलकलः । सहसा कुन्तलो नाम बृहदश्ववारः प्रविशति )

हर्षः—कः कोऽत्र भोः !

कुन्त—दिष्ट्या स्वस्तिमन्तं पश्यामि महाराजम् ।

हर्षः—ननु ! को भवान् ।

कुन्त—अहमेव श्रीमतो राज्यवर्धनस्य प्रसादभूमिः कुन्तलः ।

हर्षः—को विशेषः ? किमागमनप्रयोजनम् ?

कुन्त—( दीर्घमुष्णं च निश्वस्य ) हन्त ! देव ! आर्य-श्रीदेवो राज्यवर्धनो मालवानीकं हेलया निर्जिगाय ।

हर्षः—तर्हि प्रहर्षितव्ये किमिति विषीदसि ?

( क्रमशः )

———

# पुण्यपत्तने संस्कृत-साहित्य-परिषत् *

अयि ! मान्याः ! !

विज्ञायत एव आ च बालं आ च वृद्धं सर्वैरपि इदानींतने काले स्वभाषा-स्वदेश-स्वराष्ट्र-स्वधर्म-स्वकुलपरंपराप्राप्तानामाचारादीनां संकीर्णतया संरक्षणे क्रियामाणे महदस्ति श्रेय इति ।

प्राक्तने काले कियन्तो वा सुसूक्ष्मबुद्धयो महाशूराश्च केवलं स्वधर्मरक्षणकृते कारागारवासप्रभृति अनिर्वाच्यं क्लेशसमुदायमापतन्तमपि सुखेनैव न सेहिरे ? कियन्तो वा स्वधर्मलोपभिया परधर्मस्वीकारापत्तेश्च "स्वधर्मे निधनं श्रेयः" इत्युक्तिमक्षरशः सार्थकयन्तः अमोघानपि स्वकीयान् प्राणान् न तत्यजुः ? महोदयाः ! विषयेऽस्मिन्नैतिह्यमेव प्रमाणं कुरुत । इयमेव कथा राष्ट्रकृते भाषाकृते च समर्पितप्राणानाम् उदारचेतसां पुरुषवर्याणामूह्या ।

हन्त ! तदेतत्सर्वं स्मृतिपथमानीयानीयानिर्वचनीये शोकार्णवे मज्जति मनोऽस्माकम् । विद्वांसः ! सर्वस्यापि मूलं भाषा ननु ? सापि स्वीया, इत्येतन्निराबाधम् । भारतीयानां हि मातृभाषा संस्कृतमेव । अवलोकयत ! कां दशाम् अनुभवन्ती मातृभाषा इदानीं वर्तत इति। नायं मातृभाषाद्रोहोऽन्ततः श्रेयसे, इति तु नूनं विभावयत ।

सत्यप्येवं मातृभाषायाः प्रत्यक्षत एव आत्यन्तिकं लोपं निर्धारयन्तोऽपि

---

* अभिनन्दामो वयमस्मत्संस्कृतसाहित्यपरिषत्सखीभूतामेतां पुण्यपत्तनीय-संस्कृत-साहित्य-परिषदम् । चिरमेकाकिनीयमिदानीं सहचरी-सद्वितीया स्वृद्धा च हृद्या च ससम्मदा च स्वकल्येषूत्साहमसीममेव समेष्यतीति द्रढीयान् नो विश्वासः । पत्रिका चास्मदीया सम्भवन्तं "विद्यासागरं" प्रतिपालयन्ती रतिरिव कामं समुत्सुका वर्तते । योजयताद् भूतपतिरनङ्गमङ्गेन, अनुभवतु श्रीपादः स्वसम्भवालोकनसुखम्, लभतां रतिर्वयोऽधिका कनीयांसं केलिसहायमिति प्रार्थयामहे ।

कतिचन अस्मदीया एव महानुभावा एतावत्कालपर्यन्तं तटे अतिष्ठन्! इदानीं च तिष्ठन्ति!! उपरिष्टाच्च स्थास्यन्तीत्येतद् महद्विस्मयावहं नवा? अथवा 'कालाय तस्मै नमः'। जगद्भक्षकः कालः किं किं न विदध्यात्?

वाचकाः, तामेतां दुरवस्थां परिजिहीर्षन्तो महाभारताद्यनेकविधग्रंथ-संपादकाः पण्डित-किंजवडेकर-रामचंद्र-शास्त्रिणः कतिपयेभ्यो दिवसेभ्यः प्राक् पुण्यपत्तने "संस्कृत-साहित्य-परिष"न्नामिकामेकां संस्थां केवलं मातृभाषा-प्रचिचारयिषया निर्ममिरे। तत्र च प्राध्यापकः श्री, नी चाफेकर एम्. ए.; एल्. एल्. बी.; त्र. श्री पूज्यपाद 'पूर्वमीमांसाविद्वान' पाटणकर-सुब्रह्मण्य-शास्त्रिणः, 'मीमांसातीर्थ' किंजवडेकर-श्रीपादशास्त्रिणः, प्राध्यापकः के. ना. वाटवे. एम्. ए, श्रीमती कुमारी चंद्रादेवी कर्वाटकी एम्. ए. बी. टी. टि. डी.; पण्डिता सौ. क्षमादेवी राव ( मोहमयी ) डाः कमलादेवी देशपांडे साहित्य-सम्राट्. दे. भ. न. चि. केळकर बी. ए. एल्-एल्. बी; डा. पी. एल्. वैद्य प्रा. एन्. जी. सुरु एम्. ए.; प्रिं. र. दा. करमरकर एम्. ए. इत्यादीनां भूयसां विदुषां साहाय्यमप्यभूत्।

तदेतादृशसत्कार्यप्रवृत्तानामस्माकं सविधे नानादेशवर्तिनां भूयसां विदुषां प्रोत्साहनपराणि, अभिनन्दनपराणि, सहानुभूतिपराणि च पत्राणि भूयांस्याजग्मुरित्येतावतैव वयं द्विगुणितप्रोत्साहा अभूम। तेषाम् अभिधानानि विस्तरभिया नात्र विलिख्यन्ते। अस्तु।

तदित ऊर्ध्वमनया परिषदा मातृभाषायाः सामान्यजनेषु रुच्युत्पादनाय; अभिवृद्धये च, भाषायाः स्वारसिकसौंदर्यप्रदर्शनाय, किं बहुना सर्वात्मना स्वोद्दिष्टपरिपूरणायैव सांप्रतिक-नानाविधविषय-परिप्लुता मासिक-पत्रिका प्रवर्तयितव्या इति संकल्पितमस्ति, सोऽयं सत्संकल्पो भाषाभिमानिभिः सर्वैरपि सदयं पारं नेयम् इति विज्ञप्तिः।

"प्रवर्तयिष्यमाणायाः पत्रिकायाः सामान्यतः स्वरूपम्"

पत्रिकायास्तावदभिधानम् "विद्यासागरः" इत्येवं वर्तेत।

अस्यां च, राजकीयाः, सामाजिकाः साहित्यविषयकाः, धार्मिकाः,

खंडकथाः, परराष्ट्रवार्ताः, इत्यादयो भूयांसो विषयाः तत्तद्विषयपरिनिष्ठितानां पण्डितानां सकाशात् समुचितद्रव्यवितरणपूर्वकमासाद्यैव मुद्राप्येरन। आहत्य पत्रिकायाः स्वरूपं 'मडार्ण रिभियु' वत् तिष्ठेत्। आकारोऽपि 'डबल क्राउन' इत्याख्यो वर्तेत।

तदेतादृशपत्रिकाया अपि सांप्रतिकीमार्थिकीं परिस्थितिमवधार्य वार्षिकमूल्यं सार्धरूप्यकपरिमितमेव नियमितम्। तस्मात्सर्वैरपि द्रागेव ग्राहकैर्भाव्यम्।

शताधिकग्राहकसंग्रहे सति समनन्तरमेवाविर्भवे"द्विद्यासागरः"।

वाचकाः। मन्यामहे प्रदर्शितरीत्या सांप्रतमेकापि पत्रिका न प्रसिद्धिं गच्छतीति। पत्रिकाया उपयुक्तताविषये वयमिदानीमेव न किमपि ब्रूमहे। मुद्रणसामिचीन्यादिविषयेऽपि तथैव। तत्प्रत्यक्षत एवावलोकयितृभिर्निर्धारितं सद्भूयसे परिणामाय भवतीति।

अतश्चास्माकीनं सत्संकल्पं मनस्यवधार्य, विनष्टप्रायायाः संस्कृतभाषायाः पुनरुज्जीवनाय निर्दिष्टपत्रिकायाश्चावश्यकतामनुसंधाय पत्रेणानेन साकं प्रहितं 'पत्रिकाग्राहकावेदनपत्रम्' परिपूर्य सहैव द्रव्येण तत्पत्रं निर्दिष्टे विलासे प्रेषयन्तु तत्रभवन्तो भवन्त इति सविनयं संप्रार्थ्य विरमामि।

श्रीपाद-शास्त्री किंजवडेकरः ( मंत्री 'सं. सा. परिषत )

———

# प्रशान्तरत्नाकरम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

आत्रेयः—तात, तत्र नूनं विलम्बः कारितो भवेत् कशाप्रहारप्रभवेण शोणितस्रवेण ।

रत्ना—आं ! वत्स, आत्रेय, अपि नाम व्यथयति त्वामद्यापि देहक्षत-व्यथा ?

आत्रेयः—तात, न व्यथयति, आश्चर्यः खलु प्रभावो भेषजस्य ! यदैव तेन भिषजा विजयगुप्तेन निसृष्टः शरीरे क्षतस्थानेषु भेषजलेपः, ततः प्रभृति स्वल्पेनैव कालेन जाता मे वेदनाशान्तिः !

रत्ना—( परीक्ष्य ) सत्यं महान् प्रभावो भेषजस्य, साम्प्रतं क्षतानां चिह्नमपि नोपलभ्यते । किन्तु अहह ! भेषजेनानेन नास्ति मे हृदयक्षतस्य शान्तिः ।

आत्रेयः—तात, कथमिव ? कुत्र नु ते हृदयक्षतम् ? दर्शय, यावत् पश्यामि ।

रत्ना—वत्स, न खलु तद् दृश्यते ।

आत्रेयः—तात, यथेदं न दृश्यते, तथा किमस्य भेषजं नास्ति ?

रत्ना—कथं नास्ति ?

आत्रेयः—यद्यस्ति किमिति नासेव्यते ?

रत्ना—वत्स, तत्र कालः प्रबन्धविशेषश्चापेक्ष्येते ।

आत्रेयः—तात, अपि नाम समधिकं बाधते भवन्तं क्षतस्य व्यथा ? नियतं ममैव व्यथाशान्तिमपेक्षसे, स्वस्य व्यथां वाचापि न प्रकाशयसि !

रत्ना—वत्स, किमिव पृच्छसि ?

तुषानलेनेव हृदि क्षतेन
प्रसूयते तीक्ष्णतमो विदाहः ।
रुद्रं विना नास्य भवेत् प्रशान्ति-
स्तमेव तस्माच्छरणं गतोऽस्मि ।

आत्रेयः—तात, कथय रुद्रं, यथा सत्वरमस्यास्ते व्यथाया उपशमं कुर्यात् ।

रत्ना—आम् एवं कथ्यते ।

प्रविश्य पुरुषः—जयति जयति स्वामी ।

रत्ना—अये द्वारे नियुक्तः श्येनकः ! श्येनक, किं विवक्षितम् ?

पुरुषः—स्वामिन्, एष कश्चित् पुरुषः श्मश्रुधारी द्वारे समुपस्थितः 'रुद्रो-भिषगस्मि स्वामिनं द्रष्टुमिच्छामी'ति ब्रवीति । श्रुत्वा स्वामी प्रमाणम् ।

रत्ना—आं ! एष माधवो नाम भिषग् भूपतिगतिविज्ञानाय कामेश्वरपुरे मया प्रेषितः । ( प्रकाशं ) प्रवेशय ।

आत्रेयः—तात, एष स रुद्रो भिषक् प्राप्तः ? तदचिरादेव भविता भवतो वेदनोपशमः ? ( हर्षं नाटयति )

रत्ना—आम् एवं भविष्यति ! (स्वगतं) अहो रुद्र इति नाममात्रेण वत्सो मे भ्रान्तः । भवतु नास्य भ्रमं शोधयिष्यामि । ( प्रकाशं ) वत्स, कः सन्देहः ? रुद्र एव मे व्यथां शमयिष्यति ।

प्रविश्य अपरः पुरुषः—स्वामिन्, एष कुमारस्य व्यायामकालः ; तदनु-मन्यतां कुमारो व्यायामानुष्ठानाय ।

रत्ना—साधु, काले प्राप्तोऽसि । तद् वत्स, गम्यतामिदानीं व्यायाम-निर्वर्त्तनाय । व्यायामस्य कालातिक्रमो नैव क्षेमाय सम्पद्यते । तदविलम्बितं गन्तुमर्हसि ।

आत्रेयः—यथाज्ञापयति तातः । (गच्छन् पुनः प्रतिनिवृत्तः) तात, रुद्रो नाम भिषक् तथा वक्तव्यः यथा अचिरेणैव ते व्यथाशान्तिमुपदिशेत् । मा नाम स्वशरीरे माध्यस्थ्यम् अवलम्बनीयम् ।

रत्ना—वत्स, गच्छ पुनर्दर्शनाय, अकालहीनं व्यायामं कृत्वा प्रवाते सरयूतीरे स्वच्छन्दसञ्चारं कुरुष्व ।

आत्रेयः—यथाज्ञापयति तातः । ( पुरुषेण सह निष्क्रान्तः )

( ततः प्रविशति पुरुषेण सह माधवो ब्राह्मणः )

पुरुषः—भद्र, एष स्वामी, तदुपसर्प ।

रत्ना—भद्र, श्येनक, त्वमिदानीं स्वनियोगमनुतिष्ठ, यावदहमनेन भिषजा उपदिश्यमानं भेषजं जानामि ।

पुरुषः—यथाज्ञापयति स्वामी । ( निष्क्रान्तः )

माधवः—जयति जयति स्वामी ।

रत्ना—भद्र, माधव, वृत्तं कथय, यावदादितः श्रोतुमिच्छामि ।

माधवः—श्रोतुमर्हति स्वामी । प्रथमत एवाहं स्वामिना समादिष्टः शैलाग्राद् बहूनि आश्चर्यफलानि वृक्षमूलानि सञ्चित्य रहसि कृत्रिमवेश स्वरूपप्रच्छादनाय परिगृह्य नगरं प्रविष्टवानस्मि ।

रत्ना—ततस्ततः ?

माधवः—ततश्च मया विशेषतः समुद्घोष्यमाणं मूलानां प्रभावमाकर्ण्य पदे पदे महानेव जनसंमर्दो मामन्वगच्छत् ।

रत्ना—ततस्ततः ?

माधवः—ततः क्रमेण राजपुरसमीपं प्राप्तो यावत्तथैव जनसम्मर्दपरिवेष्टितो मुहुर्मुहुर्मूलप्रभावमुद्घोषितवानस्मि, तावदेत्र लोकमुखेन गृहीतवृत्तो राजा मामाकारितवान् । अथ पुरुषैरुपनीतेन मया दृष्टो राजा । पृष्टश्चाहं तेन, भो मूलवैद्य, कीदृशास्तव मूलप्रभावा इति । मयोक्तं देव, महान्तः खलु मे मूलप्रभावाः । तथाहि—

मूलं किञ्चन सञ्चितं विषधरस्योग्रं विषं शोधयेद्
बन्ध्यायाः प्रसवाय किञ्चन तथा शक्तं समासोचितम् ।
किञ्चिच्च क्षतशोषणं प्रकुरुते लिप्तं क्षणादुद्धतः
किञ्चित् सिंहविशालविक्रमहरं किञ्चिद् वशीभावकृत् ॥

रत्ना—ततस्ततः ?

माधवः—ततश्च विशेषतो मया घोष्यमाणं मूलप्रभावं श्रुत्वा समादिष्टाः समीपचारिणः पुरुषाः, भोः आनीयतां स घोरविषो विषधरः, यः किल राजद्रोहिषु कठोरदण्डप्रदानाय निपुणकेन विषवैद्येन प्रतिपालितः पञ्जर-मधिशेते। तेनैवास्य मूलानां परीक्षा भविष्यति। यद्यस्य मूलमफलं स्यात् तदा मृषावाददोषादनेनैवास्य विनाशः करिष्यते।

रत्ना—अहो अत्याहितम् !

माधवः—स्वामिन्, अलमाशङ्कया, गृहीतपूर्वमादावेव तादृशं भेषजं मया शैलाग्रात्, यदेतादृशस्यापि विषधरस्य विषप्रतीकाराय पर्याप्तम्।

रत्ना—अहो उज्जीवितोऽस्मि। ततस्ततः ?

माधवः—ततः समानीतः स पञ्जरबद्ध आशीविषः पञ्जरेण सहैव राजपुरुषैः, यस्य भीषणेन क्रोधहुङ्कारेण सर्व एव तदा तत्रत्यः समुद्वेजितः समाजः।

रत्ना—ततस्ततः ?

माधवः—ततो मया वसनग्रन्थितः समुद्धृतं किमपि विषहरं मूलं करेण गृहीत्वा यावत् पञ्जरस्य द्वारमपावृतं तावदेवासौ भीषणो विषधरः स्वामुग्रतां विस्मृत्य पञ्जरकोणे किञ्चुलुक इव शयितो गृहीतश्च कण्ठे निर्विशङ्कम्।

रत्ना—ततस्ततः ?

माधवः—ततो यावदसौ कण्ठे गृहीत्वा निर्वीर्यो बहिरवतारितः, तावद् मम मूलप्रभावे अप्रत्ययितः सदर्पः सेनापतिः तं तथैव ग्रहीतुमुपक्रान्तः। पुनः पुनः प्रतिषिध्यमानोऽपि जनसमाजेन मम प्रकर्षं लघूकर्तुं स्वप्रकर्षञ्च प्रकटयितुं यावत्तं मम हस्तात् समाददे तावदेव हस्तात् स्खलितोऽसौ तं करे दष्टवान्, पतितश्च तत्क्षण एव 'हां हतोऽस्मी' त्युक्त्वा सेनापतिर्भूमौ। तावदेव हाहाकारेण मुखरिताः सर्वा दिशः।

रत्ना—साधु, माधव, साधु, एकः शत्रुः क्षयं नीतः ! ततस्ततः ?

माधवः—अथ तत्सर्पभयात् सुदूरमपक्रान्ते जनसमाजे तस्य नियमनाय

पुनः पुनः सम्प्रार्थयमाने राजप्रमुखे जनसंघे पुनरेवाहं तं विषधरं सहसा अभिगृह्य पञ्जरे बद्ध्वा क्षुभितं जनसमाजमभयवादेन समाश्वास्य विषहारिणा मूलेन सेनापतेः क्षतस्थानं परामृश्य प्रशमितवानस्य क्षणेनैव विषवेगम्।

रत्ना—धिक् कष्टम्! निर्विचारमेवास्य त्वया प्रशमं नीतो विषवेगः। हा धिक्! शत्रुपक्षः किलायं दैवेन मारितोऽपि बुद्धिदोषात् पुनरुज्जीवितः? धिक्! निर्विचारमिदमनुष्ठितम्!

माधवः—स्वामिन्, अलमधिक्षेपेण। जानात्येव माधवः शत्रु-मित्रे विचारयितुम्। तादृश तत्र मया विषवेगप्रशमनाय मूलं प्रयुक्तं येन साम्प्रतं सुतरां प्रशान्तेऽपि विषवेगे पीतक्षीरस्यास्य प्रवृद्धेन विषवेगेन तृतीयदिवसे प्राणहानिः सम्पद्येत। सहैव च समादिष्टमस्य तृतीयदिवसे क्षीरपानम्।

रत्ना—आं निपुणः खलु माधव इति शतशः परीक्षितमपि कार्य-गौरवाद् विस्मरामि। ततस्ततः?

माधवः—ततश्च मदीयप्रभावविस्मितेन राज्ञा दीनेन वचसा पृष्टोऽस्मि।

रत्ना—किमिति?

माधवः—एतत् पृष्टोऽस्मि, भो वैद्यराज, अस्ति मे प्रवरः कुमारो राजेश्वरो नाम, स हि विविधैरुपकरणैरुपचरितोऽपि न तथा समुपचितावयवो दृश्यते, तद् यद्यस्ति तादृशं मूलं येन प्रवरः कुमारो मे विशेषतः समुपचितशरीरः स्यात् तर्हि कृपया प्रयोक्तुमर्हसि। इति।

रत्ना—ततस्ततः?

माधवः—ततो मयापि वितीर्णं मूलम्, तदैव च तत् कृष्णसूत्रेण समारोपितमस्य कण्ठे।

रत्ना—भद्र, माधव, अस्ति किमत्रापि ते कश्चिदभिसन्धिः?

माधवः—अथ किम्।

रत्ना—कीदृशः स इति श्रवणाय समुत्कण्ठितोऽस्मि।

माधवः—स्वामिन्, यदेतद् वितीर्णं मूलं, तदेव सर्पो भूत्वा तृतीयरजन्याममुं व्यापादयिष्यति।

रत्ना—साधु, माधव, साधु, निपुणः खल्वसि। ततस्ततः ?

माधवः—ततश्च तरणीयात्रार्थमुपकरणवाहिनः संख्यातीतान् राज-परिजनानुपलभ्य मया प्रसङ्गतः पृष्टः सेनापतिराह।

रत्ना—किमिति ?

माधवः—अद्यैव अपराह्णे सप्रहरणैः पञ्चाशता सैनिकैः सुबहुविचित्रा-लङ्कारसमलङ्कृताभिर्नर्त्तकीभिः विलासोपकरणसम्पादनपरैः परिजनैश्च समधिष्ठितां शतवाहिनीं तरणीमधिष्ठाय राजा सरयूनद्यामवतरिष्यतीति।

रत्ना—( सहर्षं ) माधव, अपि सत्यं ब्रवीषि ?

माधवः—स्वामिन्, विशेषतो निश्चयमनुपलभ्य किमु स्वामी विज्ञाप्यते ? तदत्र प्रत्ययः कार्यः।

रत्ना—भद्र, माधव, श्रुतं यच्छ्रोतव्यम्। तदिदानीं गच्छ विश्रान्तो भव।

माधवः—यथाज्ञापयति स्वामी। ( निष्क्रान्तः )

रत्ना—कः कोऽत्र ?

प्रविश्य पुरुषः—आज्ञापयतु स्वामी।

रत्ना—सत्वरं वीरबलः समाहूयताम्।

पुरुषः—यथाज्ञापयति स्वामी। ( निष्क्रान्तः )

रत्ना—अहो प्रतिहिंसा ! प्रतिहिंसा !! प्रतिहिंसा !!!

यस्याज्ञया हन्त कशाप्रहारात्
तातस्य पुत्रस्य च मे शरीरे।
क्षतं क्षतं चेतसि मे व्यतानीत्
स वर्ततेऽद्यापि सुखेन लोके ?

तदस्य मूढस्य राज्ञः पुत्र-सेनापत्योरचिरभावि मरणं प्रयोजयता माधवेन सुष्ठु कृतः समारम्भः। मूढ, कामेश्वर, न मामभिजानासि ? मूढ,

मत्तो वित्तमदेन दीननिवहान् वित्रासयन्नन्वहं
मग्नोऽसि व्यसनेषु नो वितनुषे लेशान् परार्थं क्वचित्।

तातं मे तनयश्च दुर्मतिवशात् सम्पीड्य भृत्याधमै-
र्दप्ताशीविष एव भीषणतमः पादेन संघट्टितः ।

तदद्यैवाहं—ज्वालामहर्निशमुदग्रतया ज्वलन्तीं
निर्वापयामि तव जीवनतर्पणेन ।
अद्यास्तमेतु तव निष्ठुरकृत्यसीमा
वित्ताभिमानकलुषं लयमेतु लोके ।

अहह ! तात, क्षणमपेक्षस्व—
तवाङ्गाद् येन मूढेन शोणितं विनिपातितम् ।
तस्य सन्तप्तरक्तेन क्षालयिष्यामि ते पदम् ॥

( ततः प्रविशति सम्भ्रान्तो वीरबलः )

रत्ना—( दूरादवलोक्य ) वयस्य, वीरबल, सज्जो भव, महायज्ञः प्राप्तः ।

वीर—वयस्य, किमिव ? को नाम महायज्ञे वलिः ?

रत्ना—( कर्णे ) एवमेवम् ।

वीर—तत् कथमद्यापि विलम्बसे ?

रत्ना—त्वामेव प्रतिपालयन्नस्मि ।

वीर—तदिदानीमादिश्यतां कृत्यम् ।

रत्ना—उच्यन्तां नातिदूरवर्त्तिन्यां सरयूनद्याः शाखायां वर्त्तमानां सार्द्धशतवाहिनीं तरणीमधितिष्ठन्तस्तरीवाहकाः, यथा अद्यैवापराह्णे सर्वोपकरणसहितां तरणीमादाय ते शाखानद्या मुखे प्रतिपालयन्तु, भेरीशब्दसङ्केतेन च समाहूय सप्रहरणाः परीक्षितगुणाः सन्दिश्यन्तां मेघवर्णविशालाक्षप्रमुखाः सार्द्धशतं पुरुषाः, यथा यथाकालममी यथास्थानमुपगच्छन्तु । मा तावदिमे प्रमोदमत्ताः कोलाहलेन दिशो मुखरिताः कुर्युः । त्वामपि सर्वानिमानधितिष्ठन्तमह्नस्तृतीये यामे नद्याः शाखामुखे सोपकरणं द्रष्टुमिच्छामि ।

वीर—यथाज्ञापयति वयस्यः ।

रत्ना—वयस्य, वीरबल, तदलमद्यापि कालहरणेन, सम्प्रति हि—

क्षणोऽपि युगवद् भाति सन्ततं ज्वलितात्मना ।
कदा खलु मनोज्वाला मम निर्वाणमेष्यति ?

वीर,—वयस्य, अलमुत्कण्ठया, अचिरमेव सा निर्वाणं गमिष्यति ।

रत्ना—एवमस्तु । तद् गच्छ शीघ्रम्, अहमपि तातं मातरञ्च समभिवाद्य यथाकालं सन्नद्धो भूत्वा नद्याः शाखामुखे युष्मान् द्रक्ष्यामि ।

वीर—यथाज्ञापयति वयस्यः । ( निष्क्रान्तौ )

पञ्चमाङ्कः समाप्तः

---

## षष्ठाङ्कः

( ततः प्रविशतः सरयूनद्यां तरणीमधितिष्ठन्तौ धीवरौ )

१मः—अरे रोहितक, अवसितप्रायो दिवसः, सूर्यश्च पश्चिमायामाशायामवतीर्णो लक्ष्यते । अद्यापि नासादिताः प्रभूतमत्स्याः, तदद्य न जाने कीदृशी वा समवस्था सरयूनद्याः, येन सर्वं दिवसं यतमानयोरपि आवयोर्न मत्स्यान् प्रदर्शयतीति ।

२यः—अरे कुलीरक, अवहितो भव, एते पुलिनमधिशयाना विशालकायाः पञ्चषाः कुम्भीरा दृश्यन्ते, अये, एते तरङ्गक्षोभभीताः क्रमेण सलिलं प्रविशन्ति ।

१मः—अरे रोहितक, एतेऽपि गजप्रमाणाः शिशुमाराः समुत्प्लुत्य पुनः सहसा सलिलमभिनिविशन्ति ।

२यः—अरे, एषापि विकटानना मकरश्रेणी, तदन्यस्यां दिशि तरीं प्रवर्त्तयावः ।

( क्रमशः )

---

# ভাষারত্নম্

[ শ্রীকণাদতর্কবাগীশ-প্রণীতো নব্যন্যায়মতসিদ্ধ-পদার্থ-প্রতিপাদকো গ্রন্থঃ ]

কলিকাতা-রাজকীয়সংস্কৃতমহাবিদ্যালয়-ন্যায়শাস্ত্রাধ্যাপক-

**শ্রীকালীপদ-তর্কাচার্য্য**-সম্পাদিতম্।

এষ গ্রন্থঃ সরলয়া সরণ্যা তর্কশাস্ত্রপ্রসিদ্ধান্ পদার্থান্ প্রতিপাদয়ন্ সুবহুপ্রাচীনকালাৎ প্রভৃত্যেব পণ্ডিতসমাজে সুবিশ্রুতো লক্ষ্যতে। অত্র পদার্থসিদ্ধৌ সমপেক্ষিতা যুক্তয়ঃ সুগময়া দিশা পরিগৃহীতা মহান্তমুপকারং জনয়ন্তি তর্কশাস্ত্রং প্রবিবিক্ষতাম্। বিদ্যার্থিনাং সুখেনাবগমায় সম্পাদকমহোদয়েনাত্র সরলা কাচিৎ **টীকাপি** সংযোজিতা। অত্র বিস্তৃতা **বিষয়-সূচী** ভূমিকায়াং ন্যায়মতসিদ্ধানেক-**পারিভাষিক-পদার্থবিবৃতিশ্চ** সন্নিবেশিতা, যেন সংস্করণস্যাস্য নিতরামুৎকর্ষঃ সমজনি।

এষ গ্রন্থ ইতঃ পূর্বং কদাপি ন প্রকাশিতঃ। অতোঽপ্রকাশিতপূর্বস্যাস্য গ্রন্থস্য পরমোপাদেয়স্য লাভেন বিদ্যার্থিনোঽধ্যাপকাশ্চ সুতরামুপকৃতা ভবিষ্যন্তীতি নিঃসংশয়ো বাদঃ।

তৎ সত্বরা ভবন্তু শ্রীমন্তস্তর্কপদার্থবিজ্ঞানরসিকা যেন কালাতিক্রমো নাভিলষিতসিদ্ধিং প্রতিবধ্নীয়াৎ।

মূল্যম্—সাধারণানাম্—৩া৹,  পরিষৎ-সদস্যানাম্—৩৲

অস্য প্রাপ্তিস্থানম্—**সংস্কৃত-সাহিত্য-পরিষৎ-কার্য্যালয়ঃ**
১৭ আর. জি. কর রোড, শ্যামবাজার, কলিকাতা।

**Printed at the Calcutta Oriental Press, Ltd.,**
**9, Panchanan Ghose Lane, Calcutta.**

# Sanskrit Sahitya Parishad Series.

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. As. 10, As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by Pt. Kalipada Tarkacharya. (Almost out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4, Re. 1. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Re. 1-4, Re. 1 (for members).

7. **Durgotsava-vivekah** of Sulapani—Edited by Pt. Satishchandra Siddhantabhushan. As. 8, As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt, Janakinath Sahityashastri As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D. As. 12, As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satishchandra Siddhantabhushan. As. 7, As. 5 (for members).

11. **Prabhakara-vijayam** of Nandisvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4, Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As. 6, As. 5 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Pt. Chintaharan Chakravarti, M.A. As. 12, As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of Pt. Kalipada Tarkacharya. Re. 1 As. 4, Re 1 (for members).

15. **Prasastapada-bhashyam**—Edited by Pt. Kalipada Tarkacharya. Rs. 2, Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1, As. 12 (for members).

17. **Rik-pratisakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D. with the assistance of Pt. Chintaharan Chakravarti, M.A. Rs. 2 As. 8, Rs. 2. (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Pt. Akshayakumar Shastri. Re. 1 As. 4, Re. 1 (for members).

19. **Chhandogyamantrabhashyam**—Ed. by Pt. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12, Rs. 3 (for members).

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by Pt. Kalipada Tarkacharya. Rs. 3. As. 8, Rs. 3 (for members.)

21 **Manodutam** of Vishnudasa—Ed. by Pt. Chintaharan Chakravarti, M.A. As. 10, As.8 (for members.)

Reg. No. C. 1073

Vol. XXI, No. 11] [March, 1939

१८६० शकीये फाल्गुने २१श-वर्षस्य ११श-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

# मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४५ वङ्गाब्दीय-सौरचैत्रस्य १०म ( दशम )-दिवसे शुक्रवासरे सायं सप्तवादनतो भविष्यतीति सर्वेषां संस्कृत-भाषाध्यायिनाम-ध्यापकानाञ्च तत्र समुपस्थितिः प्रार्थनीया ।

# মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী **মাসিক সভা—১০ই চৈত্র, ১৩৪৫, শুক্রবার, সন্ধ্যা ৭টার** সময়ে হইবে। সর্ব্বসাধারণের উপস্থিতি একান্ত প্রার্থনীয়।

আলোচ্য বিষয়:—আচারহীনতাই অধঃপতনের প্রধান কারণ।

# পণ্ডিতগণের জীবনী-সংগ্রহ

বঙ্গদেশে এখনও প্রায় ১০০০ সুপ্রতিষ্ঠিত অধ্যাপক আছেন, তাঁহাদের এবং তাঁহাদের অধ্যাপক পণ্ডিতগণের জীবনী সংগ্রহ করিতে পারিলে একটা উল্লেখযোগ্য কার্য্য সম্পন্ন করা যাইতে পারে। তদুদ্দেশ্যে প্রত্যেক অধ্যাপকের নিকট বিনীত অনুরোধ এই যে, তাঁহারা অনুগ্রহপূর্ব্বক নিজের এবং স্বপরিচিত পরলোকগত বা বর্ত্তমান অধ্যাপকগণের মধ্যে অন্ততঃ দুই জনের সম্বন্ধে নিম্নলিখিত সংবাদগুলি **সংস্কৃত-সাহিত্য-পরিষৎ-সম্পাদকের** নামে লিখিতভাবে জানাইলে দেশের ও দশের মহৎ উপকার সাধিত হইবে:—

নাম, পিতার নাম, উপাধি, কর্ম্মস্থল, জন্মস্থান (গ্রাম, পোঃ, জেলা), জন্মদিবস (বাংলা তারিখ, অন্ততঃ আনুমানিক সাল), বর্ত্তমান বয়স (পরলোকগত-স্থলে মৃত্যুদিবস—বাংলা তারিখ), তাঁহার অধ্যাপকের নাম, স্বরচিত কোন গ্রন্থাদি থাকিলে তাহার নাম (মুদ্রিত বা অমুদ্রিত জানা দরকার), নিজে টোলে মোট যত ছাত্র পড়াইয়াছেন তাহার আনুমানিক সংখ্যা, টোলের নাম ও ঠিকানা। সংবাদদাতার নাম ও ঠিকানা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| March, 1939. | १८६०-शकीये फाल्गुने २१श-वर्षस्य ११श-संख्या | Vol XXI, No. 11 |


## आयुर्वेदे शालाक्यतन्त्रम्।

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—भिषगाचार्य-श्रीज्योतिषचन्द्र-सरस्वतीः ]

### कर्णरोगाः—

सुश्रुते ह्यष्टाविंशतिः कर्णरोगाणां दृश्यते। वृद्धवाग्भटे त्वष्टात्रिंशत। कर्णरोगाणां चिकित्साऽद्यत्वेऽपि प्राच्यवैद्यैः क्रियत इति दृश्यते। किं कारणम्, अत्र हि नेत्ररोगेष्विव प्रायः सर्वत्रैव नोपक्रमे शस्त्रापेक्षावश्यकीयतो नात्र पाश्चात्यानामेकच्छत्रित्वमुपलभ्यते। तथाऽप्यज्ञाते शल्यतन्त्रस्य सामान्यसूत्रे न कर्णगतविद्रध्यादीनां प्रतिकर्म सम्भाव्यते। अपि चात्र व्याधिसन्दर्शनार्थं नाडीयन्त्रस्य (Ear spaculum) कर्णगतकीटादि-शल्य-निष्काशनार्थञ्च कङ्कमुखादियन्त्रस्य ( Ear forceps ) परिचयः प्रयोगाभ्यासश्च निःसशयं कर्त्तव्यौ। अन्यथा नेत्रव्याधिवद् इमेऽपि शनैः पाश्चात्यकवलिता भवेरन्। साम्प्रतमेवमपि दृश्यते यत् कर्णशूले बाधिर्ये वा यन्त्रदीनामनपेक्षेऽपि आयुर्वेदे बहुभेषजसद्भावेऽपि यन्त्रेण परीक्षितुं पाश्

डाक्तारानेव शरण्यत्वेनानेके व्याधिता मन्येरन् । अतो विद्यालयेषु यन्त्रादि-प्रयोगाभ्यासोऽधुनैव विद्यार्थिभिः कर्त्तव्य एव ।

नासागता रोगाः—

सुश्रुतसंहितायामत्राधिष्ठाने एकत्रिंशतो व्याधीनां सत्ताऽवगम्यते । वृद्ध-वाग्भटस्तु तदुक्तेषु द्वौ विहाय नवीनौ द्वावाह । तयोर्नासागतरक्तपित्तस्य रक्तपित्तान्तर्भावाद् भ्रंशथुसंज्ञकस्य च नासास्रावप्रतीकत्वादनुल्लेखो न सर्वथा युक्तः । नवीनयोस्तु दुष्टप्रतिश्यायस्य सान्निपातिकप्रतिश्याय एवान्तर्भावो युज्यते । पुटकाख्यस्य तु पृथगुल्लेखो युज्यत एव । स खल्वधुना बहुशो दृश्यते । अधिकारेऽस्मिन्नपि नाडीयन्त्रस्य कङ्कमुखादेरपि प्रयोगा-भ्यासः कर्त्तव्य एवेति तत्प्रयोगपद्धतिः शिक्षणीयैव । नासार्शःप्रभृतिषु च क्षारप्रयोगोऽभ्यसनीयः । अन्यथा तत्रापि पाश्चात्त्यानां भेषजदैन्येऽपि वैद्यानां प्रसारः शनैस्तिरोभविष्यति ।

शिरोरोगाः—

सुश्रुते शिरोरोगा एकादश इति कथ्यते वृद्धवाग्भटस्तु दश एवा-वादीत् । तत्र तस्य अनन्तवाताख्यस्यानुल्लेखोऽयुक्त एवेति मन्ये । अद्यत्वेऽ-प्यनन्तवाताक्रान्तानां व्याधितानां संख्या भूयस्येवोपलभ्यते । तत एव प्राधान्येन श्लैष्मिकलिङ्गनाशो ( cataract ) भवति । शिरोरोगेष्वनेके आयुर्वेदोक्तेनोपक्रान्ता अपि न सर्वत्र सुफलं भजन्ते, किं कारणम्, शिरो-रोगेष्वधिकांशा हि शिराव्यधसाध्याः । यदुक्तं सुश्रुते—

"न चेच्छान्तिं व्रजत्येवं स्निग्धस्विन्नांस्ततो भिषक् ।
पश्चादुपाचरेत् सम्यक् शिराणामथ मोक्षणैः ॥" इति ।

शिराव्यधाभावादेव केवल-भेषजप्रयोगेण न सर्वत्र फलमुत्पद्यते । पाश्चात्त्यास्तु क्षणिकोपशमात् परं न किञ्चित् कर्त्तुं प्रभवन्ति । ते तु क्षणिकोपशमका उपक्रमाः प्रायेणावसादका इत्यात्यन्तिकोपशमेऽप्रभवः परमवसादानयनात् कदाचिद् दुःखान्तरमुत्पादयन्त्येव । केऽपि डाक्ताराः शिरोरोगस्य निदानं

दृष्टिशक्तेः क्षीणतां दन्तगत'पायोरिया'ख्यव्याधिं वा निर्दिशन्त उपनेत्राभ्यासं (spectecles) दन्तोत्पाटनं वा व्यवस्थापयन्ति । प्रायस्तादृश्या चिकित्सया उपनेत्राभ्यासो दन्तोन्मूलनं वा लाभः स्यात्, शिरःशूलं यथापूर्वं प्रचरत्येव । समासत एष एव सिद्धान्तः, तयोर्योग्यक्रमाप्रयोगात् साध्यान्यपि शिरःशूलानि न कदाचिदुपशाम्यन्ति, तैरेव चाजीवनमनेके क्लेशान् भुञ्जन्ति इति । केऽपि वा वैद्योपक्रमतः फलमनधिगम्य 'एस्पिरिन' प्रभृतीन्यवसादकानि यावज्जीवमाददते । एवं गते वैद्यैः शिरोरोगाणां सर्वाङ्गसम्पूर्णमुपक्रममायत्तीकर्तुं शिराव्यधविधिरादावस्यसनीयः। कायचिकित्सामात्रवादी चरकोऽपि वातिकश्लैष्मिक-शिरोरोगयोरग्निकर्म रक्तज-पैत्तिकयोश्च शोणितमोक्षणमवश्यकर्त्तव्यत्वेन निर्दिदेश, यथा—

'कफानिलोद्भवे दाहः शेषयो रक्तमोक्षणम्' इति

तूर्णमेव शिरोवेदनामुपशमयितुं नानोपक्रमेण चाशान्ते शिरोरोगे नैरुज्याय रक्तमोक्षणमेव वरमिति बहुशः परीक्षितमस्माभिः ।

## मुखरोगाः—

आयुर्वेदे ह्योष्ठादारभ्य कण्ठनाड्या अन्तिमं यावत् प्रदेशं मुखमण्डलमित्याचक्षते । तद्गतव्याधीनां निदानं चिकित्साञ्च जिज्ञासूनां ज्ञानार्थं कतिपयाभिः संज्ञाभिस्तद् विभिद्य निर्दिश्यते । तद् यथा—ओष्ठौ, दन्तमूलानि, दन्ताः, जिह्वा, तालु, कण्ठश्चेति । तत्र ओष्ठयोरष्टौ व्याधयः, दन्तमूलेषु पञ्चदश, दन्तेष्वष्टौ, जिह्वायां पञ्च, तालुनि नव, कण्ठे चोनविंशतिः सर्वायतने च त्रय इति सप्तषष्टिर्व्याधयो जायन्ते । एषा खलु सुश्रुतोक्ता संख्या, वृद्धवाग्भटे त्वेतदतिरिक्तानां केषाञ्चन व्याधीनां सत्ताऽत्रगम्यते । सुश्रुतोक्तेष्वेषु खलूनविंशतिर्व्याधयोऽसाध्याः शिष्टाः साध्या इत्युपदेशः । वाग्भटस्त्वेकमर्बुदं कपोलाभ्यन्तरगमसाध्यमाह । स्थानक्रमतो वयमेषां यथास्थूलं विवृतिं निवेदयामः ।

ओष्ठगता व्याधयः—

सुश्रुतसंहितायामोष्ठगता अष्टौ व्याधयः कथ्यन्ते वृद्धवाग्भटेन त्वेकादश। तेषु जलार्बुदसंज्ञो व्याधिरधुनापि दृश्यते। तत्र पुना रक्तदुष्ट्या मांसदुष्ट्या च द्वावर्बुदौ भवतस्तावसाध्यौ। पाश्चात्त्यपरीक्षातः परीक्षितयोस्तयोः प्रायस्तौ क्यानसार ( cancer ) इति संज्ञयाऽभिहितौ भवितुमर्हतः। आयुर्वेदे ह्येतयोश्चिकित्सापद्धतिरपि नाभिहिता, अतस्तौ निष्प्रतिक्रियावेव मन्तव्यौ, इति तयोश्चिकित्साक्रममाविष्कर्त्तुं गवेषणा निरर्थिका एवेति आयुर्वेदज्ञा मन्यन्ते। ओष्ठगतव्याधीनां चिकित्सार्थं प्रायो रक्तमोक्षणमपेक्षते। मेदोजे च व्याधौ शस्त्रावचारणमग्निकर्म च प्रयुज्येते। असाध्य-व्याधेरुपक्रमानुसन्धानात् साध्यानामुपक्रमे या च यन्त्र-शस्त्रयोः सहायतावश्यकी तदवचारणाभ्यास एव वरमिति मन्यामहे।

दन्तमूलगता दन्तगताश्च रोगाः—

सुश्रुतो हि दन्तमूलेषु पञ्चदश, दन्तेषु चाष्टौ व्याधयो भवन्तीति निर्दिशति. वृद्धवाग्भटस्तु दन्तमूलेषु त्रयोदश दन्तेषु च दश व्याधीनुपदिशति। सुश्रुतोक्तौ द्वौ दन्तमूलगतौ वृद्धवाग्भटेन दन्तेषु पठितत्वादेवं वैशिष्ट्यं जातम्। दन्तमूलगतानामुपक्रमे प्रायः सर्वत्रैव यन्त्र-शस्त्रयोरपेक्षा दृश्यते। क्षाराग्नी चापि कुत्र कुत्र व्यवह्रियेते। विशेषतो रक्तमोक्षणं दन्तमूलगतेषु कण्ठजेषु प्रायः सर्वत्रैव प्रयुज्यते। यदुक्तं वृद्धवाग्भटेन—

'मुख-दन्तमूल-गलजाः प्रायो रोगाः कफास्रभूयिष्ठाः।
तस्मात्तेषामसकृद् रुधिरं विस्रावयेद्दुष्टम् ॥' इति

एतद्गतेष्वधिकांशा एव शस्त्रपूर्वेण भेषजेन साध्या इति प्राच्यवैद्या द्वित्रान मुष्टियोगानन्तरेण न कमप्युपक्रममुपदिशन्तीति न ते सर्वत्र कृतकृत्या भवितुमर्हन्ति। व्याधितास्तु गत्यन्तराभावात् पाश्चात्त्यानेवाश्रयन्ति। परन्तु परं नो दौर्भाग्यं यत्तेषां यन्त्रशस्त्रकर्माभ्यासपटुत्वेऽपि युक्तभेषजाभावाद् व्याधितान् निरामयीकर्त्तुमसमर्थास्ते व्याधितानां दन्तानुत्पाट्य

कृत्रिमदन्तसंयोगमेव व्यवस्थापयन्ति । सत्यप्रयोजने व्याधिदुष्टानां प्रत्यङ्गाना-मपसारणमेव निरामयीकरणाय मुख्योपाय इत्यायुर्वेदज्ञा न स्वीकुर्वन्ति। फलमपि चात्र न सर्वत्र साधु भवति। निरङ्कुशतया दन्तोत्पाटनान्मानवानां प्राणा अपि अपसरन्ति। तत्तु चिकित्साव्यपदेशेन हिंसाया रूपान्तरमेव।

सुश्रुतस्त्वाह—

"उद्धृते तूत्तरे दन्ते सशूले स्थिरबन्धने।
रक्तातियोगात् पूर्वोक्ता रोगा घोरा भवन्ति हि ॥
काणः सञ्जायते जन्तुरर्दितश्चास्य जायते।
चलमप्युत्तरं दन्तमतो नापहरेद् भिषक् ॥" इति

इत एव पाश्चात्त्यैर्वैद्यैः सुशिक्षितायामपि दन्ताहरणयोग्यतायां कैरप्यायुर्वेदज्ञैरसति प्रयोजने दन्तनाड्यादौ नोत्तरा दन्ता कदाचिदाहर्त्तव्याः। वैद्यानां शस्त्रेष्वज्ञतैव वर्षेऽस्मिन्नसत्स्वपि दन्तव्याधिषु कृत्रिमदन्तनिर्मातॄणां (Dentists) तत्सहयोगिनाञ्च डाक्ताराणाममूलकभीतिप्रदर्शनेन भीत-भीतान् किशोरान् यूनो वा कृत्रिमदन्तोपशोभितवदनान् भूरिशः पश्यामः। 'पायोरियाख्य'रोगभयेन रुजाकरं दन्तोत्पाटनं स्वीकृत्यानेके आजीवन-मजीर्णेन आक्रम्यन्ते खाद्यास्वादग्रहणे च वञ्चिता भवन्ति। शस्त्राकुशल-तैव जनतासु प्रचारयन्ति आयुर्वेदज्ञा दन्तचिकित्सास्वक्षमा इति।

( क्रमशः )

---

# अभिभाषणम्*

यां वाचं समुपासते दिविषदो विश्वे विधात्रादयो
यस्यामायतते हविः क्रतुभुजां धर्म्यश्च कर्माखिलम् ।
यामाराध्य नृपा नरा यमिवराः स्वाभीष्टसिद्धाः पुरा
तां कल्याणमयीमुतामृतमयीं दैवीं गिरं राध्नुमः ॥

मान्यमहोदयास्सभासदः, अनवद्यविद्योदधिविलोडनावाप्तज्ञानामृतास्वादननिर्वृतनिखिलनिजकरणा विपश्चिद्वराः, सुरभारतीसेवनपरिपूतजीवना विद्यार्थिनः, अन्ये च तदाराधकास्सामाजिकाः !

अद्याहमात्मानमतिवेलं सभाजितं मन्ये यदत्रभवन्तः सभापतिपदे महनीयगुणगणनिधिभिः, अखिलविद्याविलासपरिपक्वज्ञानैर्दिगन्तविश्रान्तस्वयशोराशिभिर्विपश्चिदपश्चिमैरधिष्ठेये करणीयबहुकार्यभारगुरुणि मां तदनर्हं स्थापयन्ति। तत्र च निरतिशयो निर्व्याजश्च प्रेमैव भवतां कारणम् । न मदीयो गुणो विद्या वा। अतस्तदर्थं भवद्भ्यो हार्दिकान् धन्यवादान् बहुशो वितरामि। पवित्रतमे सुरभारतीसमुद्धरणजीवातौ भुवनक्षेमङ्करे व्यापारेऽत्र स्वशक्त्यनुरूपं किञ्चिदपि कर्तुमवसरो मया लब्ध इति तेनातितरामात्मानं कृतकृत्यमवगच्छामि च ।

अयि सभाजनार्हाः सभासदः !

---

* विगते दिसेम्बरमासस्य ( १९३८ ) एकत्रिंशदिवसे जानुयारीमासस्य ( १९३९ ) प्रथमदिवसे च विहारप्रदेशान्तर्गतमुङ्गेरनगरसन्निहिते "लख्मिनिया" नामकस्थाने संवृत्तं देवभाषापरिषद एकादशं महाधिवेशनम् । तत्र काशीहिन्दूविश्वविद्यालये धर्मविज्ञानविभागस्योपाध्यक्षाः पण्डितप्रकाण्डाः श्रीयुतचित्रस्वामिमहोदयाः साभापत्यपदमलमकुर्वन् । तेषां प्रख्यातवैदुषीविभवानां सभापतिमहोदयानामिदमभिभाषणं पाठकमहाभागेभ्य उपायनीक्रियते ।

प्रायशस्सर्वेऽपि सुरभारतीसमाराधका वयं जानीम एव भाषेयं दैवी भाषान्तराणां भारतीयानामखिलानामपि जननी पालनी च सर्वसमाराधिता अखिलमपि गौरवमुपलम्भिता कदाचित् सर्वोत्तमा विराजते स्मेति। ये च धर्मज्ञाः, ये च व्यावहारिकाः, ये च राज्यशासकाः, ये च लोकयात्रा-निर्वर्तिनः, ये च तपस्विनः, ये चाऽऽत्मनिरताः, सर्वेषामेषां स्वसमीहित-साधने नान्तरीयकमासीदेतद्भाषाध्ययनम्।

अस्या देवभाषात्वम्

इयं हि पूर्वं देवभाषा, राजभाषा, जनभाषा, ग्रान्थिकीति चतुष्टयासीदिति सूक्ष्मेक्षिकया विचार्यमाणे सुस्पष्टमवगम्यते। तथाहि—यो यया भाषया व्यवहरति रात्रिन्दिवं, यामालम्ब्यैव तस्य भोजनाच्छादनादयस्सर्वे व्यापाराः प्रवर्तन्ते, सा तस्य भाषेति लोकानुभवसिद्धम्। एवञ्च देवैस्साकं यो व्यवहर्तुमिच्छति, सोऽनयैव भाषया तं सम्पादयितुमीष्टे। सतीषु बह्वीषु भाषासु अधुनाऽपि यो देवानाराराधयिषति, क्रतुभिर्वा यियक्षति, स्तवैर्वा तुष्टूषति, स इमामेव भाषां शरणीकरोति। न क्रतवो ज्योतिष्टोमाद्या दर्शपूर्णमासाद्या वा हिन्दीभाषया वङ्गभाषया तैलङ्गभाषया क्रियन्ते कृता वा। न हि तत्रत्याः स्तुतयो भाषान्तरेण सम्पाद्यन्ते, न वा 'इदमिन्द्राय न मम, 'इदमग्नये न मम' इति शब्दान् परित्यज्य भाषान्तरीयैश्शब्दैर्देवतायै हवींषि त्यज्यन्ते। न वा तथा करणे देवता हविर्गृह्णन्ति, कर्माण्यपि सम्पन्नानि भवन्तीत्यत्र किञ्चिदपि प्रमाणं भवति। व्यापारान्तरं तु यथा कथञ्चित् सम्पद्येताऽपि, परं देवैस्सह क्रियमाणो यागदानहोमश्राद्धादि-व्यवहारोऽस्यामेवाऽऽयतते, नान्यस्यां भाषायाम्। अस्मादेव हेतोरस्या दैवीत्वम्। एवं धार्मिककृत्यानुष्ठानं सर्वमप्येतद्भाषाधीनमित्यस्या धार्मिकत्व-कथनमपि सुसङ्गतमेव।

राजभाषात्वम्

भारतीयै राजभिरपि स्वकार्यक्षेत्र एषैव भाषा नियोजितेति स्फुटतरं निश्चीयते। यतो हि राजकार्यौपयिकास्सर्वेऽपि विधि-नियम-नियन्त्रण-

शासनादयो विषया अनयैव भाषया निर्मिता मनु-याज्ञवल्क्य-व्यास-पराशरादिभिः। एतेषां हि मन्वादीनां महर्षीणां ग्रन्थकरणं न स्वयशः-ख्यापनाय, न वा करकण्डूत्यपनुत्तये, परन्तु लोकानुजिघृक्षयैव। स्व-ग्रन्थोक्तान् राजधर्मान् यथावदवबुध्य, यथा राजानः प्रजाः पालयेयुः, यथा च धर्मविप्लवो न भवेत् लोकनाशो वेत्येतदर्थमेव। अपि च राज्ञामपि स्वकार्यनिर्वहणार्थं राजधर्मविदका ग्रन्था अवश्यापेक्षिताः, यानवलोक्यार्थतोऽवगत्य च स्वकार्यं यथावदविकलमनुतिष्ठेयुस्ते। एवञ्च विनैनां भाषां यदि अपरा तत्कालवर्त्तिनी भाषा अवर्तिष्यत राजकार्योपयुक्ता, तदा तस्यामेव भाषायां सर्वे इमे ग्रन्था निर्मिता अभविष्यन्। यथाऽद्यत्वे तादृशा ग्रन्था राजभाषायामेव ( आङ्गलभाषायां ) निर्मीयन्ते। अधिकरणेष्वपीयमेव व्यवहृताऽऽसीत्, जयदानादिशासनपत्राण्यप्यस्यामेव भाषायां व्यलिख्यन्त राजभिः।

'पटे वा ताम्रपट्टे वा स्वमुद्रोपरि चिह्नितम्।
अभिलेख्याऽऽत्मनो वंश्यानात्मानं च महीपतिः ॥'

(या. स्मृ. आ., ३१९.)

इत्यादिना महर्षियाज्ञवल्क्याद्युक्तमार्गानुसारेणान्यूनानतिरिक्तानि शासन-पत्राणि सुरभारत्यामेव राजभिर्लिखितान्यद्याप्युपलभ्यन्ते प्राचीनानि तत्र तत्र। रीतिरियं यावत्पर्यन्तं भारतस्यास्य समग्रशः खण्डशो वा शासका भारतीया राजानोऽभवन् तावत्प्रचलिताऽऽसीत्। अतो भारतीया राजानः सर्वेऽपीमामेव राजभाषात्वेन व्यवाहार्षुरित्यत्र इतोऽपि किमन्यत्प्रमाणमन्वे-ष्टव्यम् ?

## जनभाषात्वम्

जना अपि तत्र तत्र संस्कृतप्रभवया प्राकृतभाषया कयाचित् क्वचित्क्व-चिद्व्यवहरन्तोऽपि व्यवहारपदेषु गैर्वाण्या एव विशेषत उपयोगं कुर्वन्ति स्मेति प्रतीयते। तथा हि जनपदलेख्यप्रकरणे 'विनापि साक्षिभिर्लेख्यम्' इति याज्ञवल्क्यीयं पद्यं व्याचक्षाणो विज्ञानेश्वरः "प्रातिस्विकदेशभाषयाऽपि

लेखनीयम्" इति वदन् जानपदलेखेऽपि प्रथमं गैर्वाण्येव ग्राह्या, असम्भवे तत्तद्देशभाषेति 'अपि' शब्दात् स्फोरयति। किञ्च दृश्यकाव्यावलोकनेन निस्सन्दिग्धमवगम्यते—सर्वजनविदितेयं भाषाऽऽसीदिति। न हि भाषानभिज्ञानां पुरतो नाटकान्यभिनीयन्ते। न हि दक्षिणदेशं गत्वा केचिद् हिन्दीभाषया नाटकमभिनिनीषन्ति, न वा दाक्षिणात्याः स्वभाषया तदनभिज्ञानां पुरतः। रसिकाभावे रसस्फूर्तिर्वा कथम्? कथञ्च वा तथा सति नाटककरणे पण्डितानां प्रवृत्तिः? अतः केषाञ्चनाधमपात्राणां प्राकृतेन व्यवहारेऽपि उत्तमपात्राणां संस्कृतेन व्यवहारस्तदवगमश्च सर्वसाधारण आसीदित्येव निश्चेतव्यं भवति।

ग्रान्थिकीत्वम्।

ग्रन्थाश्चैतद्भाषायां न केवलं लक्षशः कोटिकोटिशः प्रणीतास्तेषु तेषु विषयेषु। अमूल्यानि तत्तादृशानि रत्नान्यन्तर्भावयन्तो ग्रन्थविशेषा अतिप्राचीना अदर्शनं बहवो गताः प्रापिताश्च। अद्यापि तादृशास्सन्ति बहवोऽप्रकाशिताः, येषां प्रकाशनेन भारतभागधेयमुन्मिषितं स्यात्।

एवं पुरुषार्थ इव पुरुषोत्तम इव च चतुर्धाऽऽत्मानं विभज्य सर्वामिमां भारतभूमिं, आ च हिमवत आ च कुमारिकाभ्यः, आ च पश्चिमोदधेः, आ च पूर्वोदन्वतोऽभिव्याप्य सर्वं भागं, सर्वोत्तमतया विराजमानाऽऽसीदियं देववाणीति भूतार्थकथनमेव, नातिशयोक्तिः। एवञ्च दैवी वागियं तदात्वे स्वराज्यमूर्धनि प्रतिष्ठिताऽऽसीदिति किमु वक्तव्यम्?

अस्या आधुनिकदशा

एवमस्याः पुरातनीं परमोन्नतिं ग्रन्थेभ्य इतिहासाच्चावगच्छत आधुनिकीं चावनतिमध्यक्षमीक्षमाणस्य कस्य नाम सचेतसस्तत्प्रणयिनः पाषाणकठिनमपि न द्रवेद्धृदयम्? सति चैवं कथमेवमेषा शोचनीयामिमां दशामापन्नेदानीम्? केन वा कारणेन स्वस्थानात् प्रच्याविता? किमर्थं वा तदुपसेविनः क्लिश्यन्ति नितरामधीतिनोऽध्यापयितारो वा?

केचिदभिप्रयन्ति—नास्याः स्वस्थानात्परिच्युतिः, न वा प्राचीनं

गौरवमस्या गतम्। अद्यापि बहवो भाषामिमामधीयत एव सानुरागम्। न वा तदुपसेविनां क्लेशलेशः, नैव सुरभाषोपसेवी क्वचिदद्यापि क्षुधा मृतः उदन्यया वा। धार्मिकजनता तां तथैवाऽऽद्रियते। अतो न किञ्चिदव-हीनमिति। न वयमिदमभ्युपगन्तुमीश्महे एतद्विपरीतामेव लोकयात्रां प्रत्यक्षमीक्षमाणा जगति। य एवमभिप्रयन्ति किं न ते शृण्वन्ति शतेष्वे-कोऽपि गैर्वाणीं नाधीत इति? सोऽप्येकोऽन्यां गतिमाङ्गलविद्याध्ययने काञ्चित् मनागप्यपश्यन् बलादेव नियोज्यते एतदध्ययन इति? किं ते नावगच्छन्ति—अध्ययनकालेऽधीतिभिरात्मन एकस्मै समयायाप्यपर्याप्त-मतिक्षुद्रमपि लब्धुं भोजनं कास्का दशा अनुभूयन्त इति? अपि न ते जानन्ति—प्राप्यापि काञ्चन जीविकामशनाच्छादनादेरपर्याप्ताम् अपूरितोदरा एवास्पृष्टस्वच्छशोभनवस्त्रा एव च बहवः सुधियो नयन्त्यात्मीयां जीवनयात्रां खिन्नमनस आत्मानम् आत्मनो विद्याञ्च बहुशो निन्दन्त एवेति। एवं शतशो दृष्ट्वा श्रुत्वाऽवगत्यापि च ये नाम एतावताऽपि किञ्चिन्नावहीनमिति कथयितुं प्रगल्भन्ते, ते क्वचित् सम्प्राप्तसमुचितजीविकान् लब्धप्रतिष्ठांश्चाऽऽत्मन एवो-पमां कृत्वा परानपि तथैव चक्षुषा पश्यन्तः परमं पाण्डित्यं प्राप्ता इत्यत्र न संशयः। परं तात्त्विकी परिस्थितिः सैव, या मया पूर्वं वर्णिता। सेयं सर्वैः प्रत्यक्षीक्रियमाणा न संछादनमर्हति। सैषा दशा देववाण्या अपसार-णीयाऽस्माभिः सर्वप्रयत्नेनापि। यावदियं न सर्वसुलभा क्रियते, सारल्यं च नाऽऽपाद्यते, तावदयं दोषो नापेयात्। प्रायशस्समेषामेव विद्यार्थिनां विदुषां च प्रबोध एतद्विषये प्रबलस्समुदितः। सोऽपि नातिचिरादेव दोषमिम-मस्याः परिजिहीर्षति। अतस्तेऽप्यत्रास्माकं साह्यमाचरेयुः। परं तद-पेक्षया बहु गन्तव्यमग्रेऽस्माभिः, यतो हि भाषाया अस्या राष्ट्रीयत्वापादनं परममुद्देश्यमस्माकम्। योऽयमस्माकमुद्देशः स नवे पथि कस्मिंश्चिदद्य यावदक्षुण्णे पदनिक्षेपणमिति न मन्तव्यम्, यतोऽधुनैवोपपादितम्—अयमेव प्राचीनोऽध्वा प्रायशो भूसुरैर्भूपतिभिरन्यैश्च क्षुण्ण इति। अतो नास्माभि-र्नूत्ने पथि पदं निक्षिप्यते। प्राचीनारूढ एव मार्गो मध्यकाले छिन्नभिन्नः

पुनर्नवीकर्तु मुद्दिश्यते। तावदेव। परमत्रापि महान् क्लेशोऽनुभवनीयो भवेत् मध्ये बहुभिरनेहोभिर्विच्छिन्नो नाल्पेनाऽऽयासेन सहसा श्लक्ष्णीकर्त्तुं शक्यते, तथाऽपि यतितव्यमेव, 'न साहसमनारुह्य नरो भद्राणि पश्यति' इति ह्यभियुक्ता कथयन्ति।

तत्र प्रथमतो विचारणीयम्—प्रयत्नोऽयमास्माकीनस्तिलेषु तैलनिष्पीडनम्, उत सिकतास्विति। न वयं जानीमः—कुतो न फलेदस्माकं मनोरथतरुरिति। हिन्दीभाषां राष्ट्रभाषां चिकीर्षन्ति तज्ज्ञाः, उरुदूभाषां तदभिमानिनः, केचिदुभयसंमिश्रां काञ्चन भाषाम्। आसु न कोऽपि कदाचिदपि सर्वदेशव्यापिन्यासीदस्ति वा इति तु सुविदितमेव। यदि च तास्वेकस्यास्सर्वजनीनत्वमाषाद्येत, तर्हि कुतो न गैर्वाण्यास्तथात्वमापाद्यते? सत्स्वपि विभिन्नभाषाभाषिषु जनेषु हिन्दीभाषाभाषिण एव संख्यया सर्वानतिशेरत इति तु सत्यं, तथाऽप्यद्यापि तादृशाः प्रदेशास्सन्ति भारतभूमावेव, यत्र हिन्दीभाषाया उरुदूभाषाया वा नामापि न जानन्ति जनाः। परं नैकमपि नगरं ग्रामो वाऽस्ति कुत्रापि प्रदेशे यत्र स्थितेषु न कोऽपि जानाति सुरगवीमिति। तेषामश्रुतापरिचितभाषापेक्षया स्वग्रामे स्वनगरे वा इतस्ततोऽसकृच्छ्रुतचराया अध्ययने महत्सौलभ्यं स्यात्।

किञ्च तादृशेषु प्रदेशेषु हिन्दीभाषाया उरुदूभाषाया वा शिक्षणार्थं तदभिज्ञास्तस्माद् देशादानाययितव्याः। यथेदानीं मद्रप्रान्ते हिन्दीशिक्षणार्थं संयुक्तप्रान्तत एवाध्यापकाः प्रेष्यन्ते। तदर्थञ्च क्लेशोऽधिकतरस्तेषां बहुविधः। संस्कृतशिक्षणार्थं तु न तादृशः क्लेशः, यतस्तत्तत्स्थलगताः पण्डितास्तत्र नियोक्तुं शक्यन्ते। ते चातिसौलभ्येनाध्यापयेयुश्छात्रान्।

किञ्च ये नामाऽऽत्मानमभिमन्वते हिन्दुत्वेन तेषां पूर्वजेष्ववश्यमेव केचिदधीतैतद्भाषाका भवेयुरित्यत एतेषामसृग् मस्तिष्कं वाऽऽरूढैतत्संस्कारमेव भवेदित्यत्र नास्ति संशयः। अतो निगूढस्य तस्योद्बोधनमेवाऽऽवश्यकमेतद्भाषाविषये। भाषान्तरविषये तु संस्कार उत्पादनीय इत्यस्ति महान् भेदः। गीर्वाणभाषायां बहून्यतिकठिनानि पदानि प्रकृतदेशकालानुपयुक्तानि

सन्ति यान्यवलोक्य बिभ्यति सर्वेऽपि तामध्येतुमिति समानोऽयं दोष इतरत्रापि। विषयेऽत्राचिरादेव पत्रिकायां प्रकाशितं लौकिकेषु व्यवहारेषु परं पारङ्गतानां श्रीमतां डाँ० तेजबहादूर् सप्रूमहोदयानां वचनमुद्धृत्यात्र श्रीमतां पुरत उपस्थापयितुमिच्छामि। तदित्थम्—"It is complained that Urdu contains words which are unintelligible to the villagers, there are hundreds of words which are equally untntelligible to them in Hindi which is in voSue at prosent." "अर्थात् उरुदूभाषायां सन्ति बहूनि पदानि येषामर्थाः ग्रामीणैः पुरुषैर्नावगम्यन्त इति अभिशस्यते, परं हिन्दीभाषायामपि तथैवानेकशतानि पदानि सन्ति यान्यज्ञातार्थानि अनुपयुक्तानि चेति'। अतस्सार्वत्रिकोऽयं दोषो नैकत्रैव व्यपदेष्टुमुचितः।

अथ वा यदि सन्ति कठिनानि पदान्यप्रकृतानि च, स्युर्नाम, का नो हानिः ? सर्वाण्यपि तान्यध्येयानि अध्यापनीयानि वेति का वा राजाज्ञा ? पाठप्रणाली काचित्सर्वत्र प्रवर्तनोया यया नातिचिरेण कालेन सरलानामुपयुक्तानामेवाध्ययनं सम्पद्यते। ग्रन्थाश्च तादृशा बालशिक्षार्थं प्रणेतव्याः। ये व्यवहारौपयिकैरतिप्रसिद्धैस्सरलैः शब्दैरर्थैरेव च सन्दृब्धा भवेयुः।

किञ्चाधिकरण-राजसभादावपेक्षित-व्यवहारसम्पत्तयेऽपेक्षिताः पारिभाषिकाः शब्दाः सर्वे प्रायशोऽस्मत्पूर्वाचार्यैरन्विष्यान्विष्य प्रत्युक्तास्स्वग्रन्थेषु। येऽधुनापि हिन्दीभाषायामपि व्यवह्रियन्ते। अतस्तदर्थमपि न नः क्लेशलेशः। कोऽयमत्र भवतामनिर्भेद्य आग्रहविशेष इति चेत—कथमयमाग्रहः ? यदि नाम कश्चित्स्वस्य स्वभ्रातृणां स्वदेशमात्रस्य वा निखिलश्रेयोनिदानभूतां सर्वस्माद् दुःखात्परित्राय पोषयन्तीं जननीशतसमां पूर्वमेवमेव परमे स्थाने निवेश्य लालितां कालचक्रवशात् स्वस्थानतश्च्युतां देवगिरं पुनस्तस्मिन्नेव स्थानेऽभिषिच्य यत् तादृशं देशमङ्गलमाहर्तुमिच्छति सोऽयमाग्रहः ? को वा मातृकुक्षिपरिपोषितस्तदीयस्तन्यविवृद्धो दुर्हृदयोऽपि वक्तुमीष्टे प्रयत्नोऽय-

माग्रहपूर्ण इति। न हि ; अतस्स्वकर्तव्यमिदं कार्यजातमेकैकस्यापि स्वोन्नतौ स्वदेशोन्नतौ स्वजननीसमुद्धरणे वा दर्शितादरस्य।

किञ्च नायमस्माकमभिलाषो भाषासौन्दर्य-सौष्ठव-प्राचीनतादिगुणगण-समाकृष्टमनस्कत्वकृतः, यया भाषया भारतं वर्षमिदं समग्रमप्येकेनैव सूत्रेण बद्धमासीत्, यद्‌बलादेव च सर्वे वयं परस्परादृष्टश्रुतशीलाचारा अपि एकस्यामेव वर्तन्यां गच्छन्त एकप्रकारावेव विधि-निषेधावाद्रियमाणा एकमेव धर्मं चरन्तः कदाचिद्दैववशाद्दर्शनप्रसङ्गे अननुभूतपूर्वं प्रेमभरजनितमानन्दमनुभवन्तो भ्रातृभावं वा स्नेहरसाप्लुतमुपदर्शयन्तो नित्यतृप्ता आत्मनो जीवनयात्रां निरवर्तयाम, यस्या ह्रासदोषादिदानीमस्माकं तादृशो भावो मन्दं मन्दं विपरिवर्तते प्रान्तीयभावश्चास्मान् शनैर्जिग्रषिषते। प्रथमं मामेव निदर्शयत। कोऽहम् ? कुतस्त्यः ? कुत्रत्यः किङ्गुणः ? किंशीलो वा ? मयाऽत्र सभामध्य उपस्थितौ भवतां प्रेमरससमाप्लुते मनसि दृढतरमवकाशं लब्धुं वा को वाऽवसरोऽलप्स्यत, यदीयं भगवती जगज्जननी देवभाषाऽस्मानेकस्मिन् सूत्रे नाग्रन्थिष्यत्।

किञ्चास्या एव देव्याः कोऽपि महिमा—यद्वयं भारतीया भूमावन्यत्र सभ्यतायाः कस्या अपि अङ्कुरोदयात्पूर्वमेव तस्यां परिनिष्ठिता अभूम, आस्महे चाधुनापि। अतो भारतीयसभ्यताया उत्पादिनी परिपोषिणी चेयमेव महनीयतमा भाषेति साध्ववगम्यते। भिन्नभिन्नभाषाभाषिणोऽपीमामात्मीयामेव सहार्दमभिमन्वते भारतीयाः। अतो देवभाषाया राष्ट्रीयत्वापादनमस्मास्वैकमत्यविशेषसम्पादनद्वाराऽतिप्राचीनरीतिसमुद्धारद्वारा तद्‌गतानाममूल्यरत्नानां प्रख्यापनद्वारा च कमपि महिमानमाविर्भावयेदधुनेति न तत्र संशयः।

## किमस्माकं कर्तव्यम् ?

एवं सर्वाभ्युदयकरेऽप्यत्र कार्ये यदि विदुषां वैमत्यं भवेत्, तर्हि ते विषयवैतथ्यमवबोधनीया यथावसरम्। जनता चान्यत्रापि सभाधिवेशन-व्याख्यानादिमुखेन वस्तुयाथात्म्यप्रतिपादनद्वाराऽत्र रुचिमत्यापादनीया।

ततो राजकीयाश्च प्रार्थनीया भाषाया अस्या, अनिवार्यशिक्षाकोटिनिविष्टत्व-सम्पादने, तदनुरोधेन च बहूनामध्ययनागाराणामुद्घाटने, तदनुगुणशिक्षा-प्रदाने च। सर्वेषामेव विषयाणां संस्कृतभाषयैवाध्यापनेऽध्यापकाः प्रार्थनीयाः। असति विशिष्टबाधके सर्वेऽपि व्यवहारा गैर्वाणभाषयैव कर्तव्याः। छात्राश्च सुरवाण्यामेव लेखन-भाषणादौ विशेषतश्शिक्षणीयाः। ते च ते च महाराजा विद्याप्रणयिनस्सुरभारतीसेवकाश्च धनिका यथायथमत्र साह्यमाधातुमभ्यर्थनीयाः। परमत्र सर्वत्राप्यस्माभिरत्यक्तधर्मपथैरेव भाव्यम्। नेदं कदाऽपि विस्मर्तव्यं सर्वपथीनश्रेयोदायिन्यपीयं सुरगवी तदवलम्बिनो वयं च सर्वदा धर्मोत्तरा एवेति। यदि च स भगवान् सनातनो धर्मोऽवलेहनं प्राप्यते मनागपि, तर्हि अवधीरितोऽणुमात्रमप्यास्माकीनप्रयत्न-फलदानाय न कल्पेत। अतः प्राचीने धर्म्ये पथि स्थितैरेवात्र यदि प्रयत्येत स्वाभीष्टसम्पादने, तर्हि तं मनोरथं भगवान् परमेश्वरः "धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" इति स्ववचनानुरोधेन स्वस्वरूपमेव मन्वानो नाति-चिरादेव तत्सम्पादनेनास्माननुगृह्णीयात्। वयमप्यतिप्राचीनामपि नित्य-यौवनां मङ्गलैकमयीमस्मन्मातृरूपां देववाणीं यथावत्पूजयन्तः, तस्याः, तस्य परमपूरुषस्य च निस्सीम्नोऽनुकम्पाया आत्मानं अस्मद्भारतभूमिञ्च नित्य-भाजनं कुर्वन्तस्सर्वदा सुखमेधिषीमहि।

॥ इति शम् ॥

---

# श्रीहर्षबाणभट्टीयम्

(पूर्वानुवृत्तम्)

[ निबन्धकः—आर्-रङ्गाचार्यः ]

कुन्त—प्रसीदतु देवः। गौडाधिपो मिथ्योपचारेणोपचितविश्वासं मुक्तशस्त्रमेकाकिनं विस्रब्धं स्वभवन एव भ्रातरं व्यापादितवान्।

हर्षः—अह हा! किं गौडापसदः! किं भ्रातरं जघान! कोऽयं परिभवः! कथमयमग्निना सह क्रीडति! तिष्ठ, तिष्ठ रे दुर्विनीत! गौडापसद! हन्त न भवसि! क्वेदानीं यास्यसि? पश्येदानीं पुष्पभूतिसंततेर्बाहुप्रतापम्। ननु श्रूयतां मे प्रतिज्ञा। शपाम्यद्यार्यस्यैव पादपांसुस्पर्शेन। यदि परिणतैरेव वासरैर्निर्गौडां न करोमि मेदिनीं ततस्तनूनपाति पीतसर्पिषि पतङ्ग इव पातयाम्यात्मानम्। भद्र! अवन्तिक!! लिख्यताम्। "विदां कुर्वन्तु सर्वेऽपीदं महीपालाः। सर्वेषां राज्ञां कराः सज्जीक्रियन्तां करदानाय. शस्त्रग्रहणाय वा। नमन्तु शिरांसि धनूंषि वा। इदमाघुष्यतां—परितः पृथिवीम्। ( इति कृतनिश्चयो मुक्तास्थानः सभामत्याक्षीत )।

( ततः प्रविशति भण्डिः )

भण्डिः—अहो! दुःखदावानलदूषितहृदयस्य श्रीहर्षदेवस्याग्रे कथं स्थास्यामि! कथं वा वक्तव्यं वदिष्यामि! नान्या गतिः! कुत्र वा तमहं द्रक्ष्यामि। अहो! दिष्ट्याऽभिवर्तते इत एव कुमारो हर्षदेवः।

हर्षः—अहो! भण्डिः! एह्येहि। अत्रोपविश।

भण्डिः—विजयतां कुमारदेवः।

हर्षः—अपि कुशलं राज्यश्रियाः?

भण्डिः—देव! मर्षय तावत, देवभूयं गते देवे श्रीमत्यार्यश्रीराज्यवर्धने

गुप्तनाम्ना च गृहीते कुशस्थले देवी राज्यश्रीः परिभ्रश्य बन्धनाद्विन्ध्याटवीं सपरिवारा प्रविष्टेति लोकतो वार्तामश्रृणवम् अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता जना नाद्यापि निवर्तन्त इति,

हर्षः—( सरोषं परुषं च ) "किमन्यैरनुपदिभिः" ( इति वदन् यत्र सा तत्र परित्यक्तान्यकृत्यः स्वसारमन्वेष्टुं विन्ध्याटवीं गच्छति )।

( ततः प्रविशति प्रदोषसमये विन्ध्याटवीमध्यगतो हर्षो दिवाकरमित्रश्च )

दिवा—समाश्वसिहि, भद्र, समाश्वसिहि! अचिरेणाव्याहतां स्वसारं द्रक्ष्यसि।

हर्षः—आर्य! उत्तिष्ठ। प्रसीद। दर्शय क्वासौ। अपि नाम तां जीवन्तीं द्रक्ष्यामि।

दिवा—नियतं भगवतः कृपया जीवन्तीं स्वस्तिमतीं च द्रक्ष्यसि।

( नेपथ्ये महतस्त्रैणस्य महान् कोलाहलः )

हर्षः—आर्य! कुतोऽयमार्तनादः श्रूयते।

दिवा—किंचिदवधीयताम्। श्रृणुमस्तावत्।

( नेपथ्ये पुनरपि महान् कोलाहलः )

"हा! देवि! दुहितृस्नेहमयि! यशोवति! मुषिताऽसि दग्धदैवदस्युना! देव! दुहितरि दह्यमानायां नोपेतोऽसि प्रतापशील! शिथिलीभूतमपत्यप्रेम! महाराज! राज्यवर्धन! न धावसि। मन्दीभूता भगिनीप्रीतिः! देव! दुःखितजनार्तिहर हर्ष! कुतो न मामीक्षस" इति।

हर्षः—( श्रवणमभिनीय ) मम पितरं भ्रातरं मातरं मां च नामनिर्देशं निर्दिशत्ययमार्तस्वरः। आचार्य! मन्ये सर्वथाऽयं भगिन्या राज्यश्रिया एव विलापः। ( इत्युक्त्वा तमुद्देशं सत्वरमुपसर्पति )

( ततः प्रविशति मुह्यन्ती पावकप्रवेशोद्यता राज्यश्रीः )

राज्य—हा! हतविधे!! निष्करुणोऽसि। एवमनाथामरण्ये विलपन्तीं मां नानुकम्पसे।

हर्षः—( सत्वरमभिगम्य ) "हा वत्से! मा भैषीः। एकोऽस्मि

तवार्तिहरो हर्षः। मा कुरु साहसम्" (इति कराञ्चलेन राज्यश्रियमालम्बते)।

राज्य—(कुतोऽपि जीविताह्लादकेन हस्तसंस्पर्शेन समुन्मीलति। करुणकाहलेन स्वरेणातिचिरं रोदिति)।

हर्षः—(दुःखदुःखेन) वत्से! मा विषीद! मा विषीद! स्थिरा भव। अलं रुदित्वाऽतिचिरम्।

राज्य—अहो! भ्राता आर्यः श्रीहर्षः!! आर्य! मन्दभागिनी दुर्दैवदूषिताऽहं वन्दे। क्षमस्व। जानात्यार्यः कुलकलत्रमहमस्मि, चारित्रधना, धर्मधवले कुले जाता इति। जानाति च केसरिण इव गृह्यवर्मणः केसरिणी गृहिणीति। किं मयाऽपुण्ययेह लोके जीवन्त्या कर्तव्यमस्ति। अबलानां हि पतिरपत्यं वाऽवलम्बनम्। उभयविकलानां तु प्राणितमशालीनत्वमेव केवलम्। आर्यागमेन च कुतोऽपि प्रतिहतो मरणप्रयत्नः। अतः काषायग्रहणानुज्ञयाऽनुगृह्यतामयपुण्यभाजनं जन इति।

हर्षः—(तत्समाकर्ण्य तूष्णीमेवावतिष्ठते)।

दिवा—(राज्यश्रियमवलोक्य) आयुष्मति! बाले!! शोको हि नामाक्षयो राजयक्ष्मा। अप्रतिबोधो निद्राप्रकारः। एवं सति सत्यव्रते! कथय किमत्र क्रियते। सर्वमक्षिणी निमील्य सोढव्यं मूढेन मर्त्यधर्मणा। दूरगते हि शोके नन्विदानीमपेक्षणीय एवायम्। ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुः। इतरथा को न बहुमन्येत भवत्याः काषायग्रहणव्रतम्। यदार्यः समादिशति तदेवानुष्ठेयम्—यदि ज्येष्ठ इति राजेति, सर्वथा स्थातव्यमस्य नियोगे।

हर्षः—आर्यमपहाय कोऽन्य एवमभिदध्यात्। किंचिदर्थये भवन्तम्। मया भ्रातृवधापकारि-रिपुकुलविनाशाय प्रतिज्ञा कृता। अद्य प्रभृति यावदयं जनो लघयति प्रतिज्ञां तावदिमामत्र भवता रक्ष्यमाणामिच्छामि। इयं तु ग्रहीष्यति मयैव समं समाप्तप्रतिज्ञेन काषायाणि इति।

दिवा—यथाऽऽदिश्यते देवपादेन। निरुपयोगस्यास्य जनस्योपयोगस्तु लघुनि गुरुणि वा कृत्ये गुणवदायत्तः।

२

हर्षः—सन्तु बहवो धन्यवादा भवद्भ्यः। वत्से उत्तिष्ठ, कानिचन पदानि मामनुगच्छ। ( निष्क्रान्ताः सर्वे )।

इति तृतीयोऽङ्कः।

# चतुर्थाङ्कः

## श्रीहर्ष-बाणसमागमः

( विन्ध्याटवी—ग्रीष्मः—मध्याह्नसमयः )

( ततः प्रविशतः—प्रीतिकूटाख्ये ग्रामे स्ववेश्मन्यन्तो विश्रान्तसुखी समासीनो बाणभट्टः, तदीयो भ्राता पारशवश्चन्द्रसेनश्च )।

चन्द्र—( कार्यगौरवमाविष्कुर्वत्या दृष्ट्या पश्यन ससंभ्रमम् ) आर्य, लेखहारकः कश्चिद् द्वारदेशमध्यास्ते।

बाणः—( आलस्यं प्रदर्शयन ) अहमधुना स्तोकमिव स्वप्तुकामोऽस्मि। केनायं प्रहितः ?

चन्द्र—( ससंभ्रमम ) भ्रातः ! चतुरुदधिमेखलाया भुवो भर्तुर्महाराजाधिराजस्य परमेश्वर-श्रीहर्षदेवस्य भ्रात्रा कृष्णनाम्ना भवदन्तिकं प्रहितः।

बाणः—अहो ! यदि तथा स्यात्, यावदहं सुप्तप्रवुद्धोऽस्मि तावन्नायमर्हति मां प्रतिपालयितुम्। दीयतां मदीयमुत्तरीयम्। ( चन्द्रसेनार्पितं सुवर्णमण्डिताञ्चलं सूक्ष्मवस्त्रम् उष्णीषं च गृह्णाति। शिरसि निदधाति। उत्तरीयं च यथावद्धरति )। दीयन्तां मया लिखितानि पत्राणि। यो नाम कवी राजसभां प्रवेष्टुमिच्छति न तेन नातिचिरालिखिता ग्रन्थास्त्यक्तव्याः।

चन्द्र—( लिखितपत्रगुच्छमर्पयति )।

बाणः—चन्द्रसेन ! लेखहारकमविलम्बितं प्रवेशय। ( चन्द्रसेनो निष्क्रम्याध्वखिन्नेन लेखहारकेण सह प्रविशति। मेखलकश्च शिरसा बाणभट्टं प्रणमति )।

चन्द्र—आर्य ! प्रसीद । अयमेव लेखहारको मेखलकः ।

बाणः—अपि कुशलमस्मत्प्राणप्रियस्य सुहृदः कृष्णदेवस्य ।

मेख—स्वामिन् ! सर्वत्र वार्तम् ।

बाणः—अपि नाम यः कोऽपि लेखो मह्यमर्पणीयोऽस्ति ।

मेख—स्वामिन् ! दयस्व । ( शिरोवेष्टनादेकां प्रतनुं कार्मिकपटवस्त्रेणावृतां भस्त्रिकां तदन्तः सूक्ष्मवस्त्रनिवेशितं लेखं चादत्ते । महताऽऽदरेण समर्पयति ) एष खलु स्वामिनो माननीयस्य प्रहित इति ।

बाणः—( सादरं गृहीत्वा अभितश्चक्षुर्विक्षिप्य । जालान्तरप्रेषितदृष्टीनुपश्रोतृजनान् दृष्ट्वा ) सर्वैरपगम्यताम् । अहमेकान्ततः स्थातुमभिलषामि । निर्मक्षिकं भवतु । ( सर्वेऽपि परिजनाः सपदि निष्क्रान्ताः । बाणो लेखमादत्ते । वाचयति । सभ्रूभङ्गं कराञ्चलेन लेखं पुरस्तात्पृष्ठतश्च परिवर्तयन् पुनरपि प्रथमां पङ्क्तिं पठति, अन्तिमां च पश्यति । "भवान् मेखलकात्संदिष्टमवधार्य...फलप्रतिबन्धी धीमद्भिरपहरणीयः कालातिपातः । अन्यथा स्वयमेवाऽऽगतस्य श्रेयसः प्रतिक्षेपः" इत्येतावदत्रार्थजातम् । इतरद् वार्तासंवादनमात्रम् ।

बाणः—मेखलक ! कीदृशः संदेशः ?

मेख—( बाणस्य समीपं गत्वा ) एवमाह मेधाविनं स्वामी । "जानात्येव मान्यो भवति महनीयां मम मतिं गरीयांसं च स्नेहम् । भवन्तमन्तरेणान्यथान्यथा चायं चक्रवर्ती दुर्जनैर्ग्राहित आसीत् । न च तत्तथा । शैशवचापलहेतोर्भवतः केनचिदसहिष्णुना यत्किंचिदसदृशमुदीरितम् । इतरो लोकस्तथैव तद् गृह्णाति, वक्ति च "बाणभट्ट उन्मादग्रस्त" इति । विज्ञप्तश्च चक्रवर्ती त्वदर्थम् । प्रायेण प्रथमे वयसि सर्वस्यैव चापलमपराध्यति । तथेति च प्रतिपन्नम्, अतो भवताऽत्राकृतकालक्षेपमागन्तव्यमि"ति ।

बाणः—( विचिन्त्य ) किं करोमि । अन्यथा संभावितोऽस्मि राज्ञा । अव्याज-बन्धुना सुहृदा चैवं संदिष्टं कृष्णेन । कष्टा च राजसेवा । न च तत्र मे पूर्वजप्रवर्तिता प्रीतिः । न च राजवल्लभपरिचयः ।

मेख—तर्हि ममात्रागमनं निष्प्रयोजनम्। वयसा वर्षीयानहम्, भवद्गुणपक्षपाती च।

बाणः—भद्र! मेखलक! इदमधिकृत्य सम्यक् चिन्तनीयमास्ते। भ्रातश्चन्द्रसेन! अमुं कृताहारविधिं विश्रान्तसुखिनं कारय।

चन्द्र—( मेखलकेन सह निष्क्रम्य पुनः प्रविश्य ) आर्य वन्दे।

बाणः—स्वस्ति।

चन्द्र—अप्यार्यः कृतनिश्चयः।

बाण—किं राजसभां प्रवेष्टुम्?

चन्द्र—आम्। आर्य!

बाण—( अकामेन ) ननु भ्रातः! मन्ये तदुचितं यत्त्वमुदीरयसि।

चन्द्र—( सवेगम् ) आर्य! भवान् स्तोकमिव मन्दोत्साह इव भाति। आर्यः किमिति विलम्बते। यदि भवान् राजसभां प्रविशति, अस्माकं श्रेयः संपत्स्यते। नियतं वयं महाकुलीनास्तथाप्यकिंचनाः किल।

बाणः—भ्रातः! सत्यम्। श्वोभूते प्रयाणाय यत्कर्तव्यं तत् करिष्यामि। प्रातरेवोत्थाय स्नात्वा दुकूलवासः परिधाय, भगवतो धूपदीपबहुलां पूजां विधाय, द्विजेभ्यो द्रविणं प्रदाय, सुरभिं प्रदक्षिणीकृत्य, प्राङ्मुखो भूत्वा, निहितनवचूतपल्लवं पूर्णकलशमभिवीक्ष्य, प्रणम्य कुलदेवताभ्यः प्रथमकृत-दक्षिणचरणः प्रस्थास्ये। भगवान् जगदीश्वरः प्रस्थितस्य मे सर्वं सांप्रत-माधास्यति ( इति भगवन्तं ध्यायति। त्रीणि दिनान्यतीतानि। अन्वजिर-वति स्कन्धवारं कृतसंनिवेशमाससाद। कृतस्नानाशनो विश्रान्तो मेखलके-नानुगम्यमानो राजगृहद्वारमुपसर्पति )।

दौवारिकः—तिष्ठतु भवानत्र क्षणं पुण्यभागी।

मेखलकः—स्वामिन्! अयं देवस्य चक्षुष्यः पारियात्रनामा दौवारिकः। अनुगृह्णात्वेनमनुरूपया प्रतिपत्त्या।

पारि—( कृतप्रणामः सविनयम् ) आगच्छत। प्रविशत राजदर्शनाय। कृतप्रसादो देवः।

बाणः—धन्योऽस्मि । यदेवमनुग्राह्यमिमं जनं देवो मन्यते । इत्युक्त्वा तेनोपदिश्यमानमार्गोऽभ्यन्तरं प्रविशति । महानीलमये पादपीठे विन्यस्तचरणं बहुभिः पण्डितलोकैरन्यैश्च परिजनैरन्वास्यमानं प्रमदाजनानां कमलकोमलैः पाणितलैः संवाह्यमानपादपल्लवं रत्नमये भद्रासने समासीनं गम्भीरं प्रसन्नं त्रासजननं रमणीयं चक्रवर्तिनं दृष्ट्वा मुञ्चन्नानन्दबाष्पबिन्दून्, ( हा !! सोऽयं सुजन्मा सुगृहीतनामा देवः परमेश्वरो हर्षः !! एतेन खलु राजन्वती पृथिवी !! ) । इति विस्मयस्मेरस्तिष्ठति ।

पारि—स्वामिन् ! अयमेव राजाधिराजः श्रीहर्षदेवः ।

बाणः—( शनैः सविनयं सादरमुपसृत्य ) देव ! स्वस्ति भवते ।

( नातिदूरे राजधिष्ण्यस्य किंचन गीतं शृणोति )

करिकलभ विमुञ्च लोलतां चर विनयव्रतमानताननः ।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरि क्षमते नतोऽङ्कुशः ॥

( समाकर्ण्येदमात्मानं साकूतं निन्दमानमवगत्य सोत्कण्ठं राजानं पश्यति )

हर्षः—एष स बाणः ?

पारियात्रः—यथाज्ञापयति देवः । सोऽयम् ।

हर्षः—"न तावदेनमकृतप्रसादः पश्यामि"इति चक्षुः परिवृत्य प्रेष्ठं पृष्ठतो निषण्णं मालवराजसूनुमकथयत् "महानयं भुजङ्गः" इति ।

बाणः—( सादरं सविनयम् ) "देव ! भवान् प्रमाणम् । कस्मादेवमाज्ञाप्यते देवपादेन । नार्हति देवो मामन्यथा संभावयितुम् । स्वैरिणो विचित्राश्च लोकप्रवादाः स्वभावाश्च । का मे भुजङ्गता ! । लोकद्वयाविरोधिभिस्तु चापलैश्शैशवमशून्यमासीत् । आसतां तावन्मनुष्यकपोताः । सर्वथा मां यथावज्ज्ञास्यति देवो महाराजः" ( इत्यभिधाय तूष्णीमभूत् ) ।

हर्षः—( परुषं सरोषं च ) एवमस्माभिः । ( संभाषणासनदानादिप्रसादेन नैनमन्वग्रहीत ) ।

बाणः—( एवमुपजातपरिभवो मत्सरिभिः सावहेलमवलोक्यमानो राज

गृहद्वारमुपसर्पति। पारियात्रं निर्दिश्य ) भद्र! किमर्थमहमत्रागतोऽस्मि। हा!! दुःसहोऽयं परिभवशङ्कुः। कुतो मया प्रीतिकूट एव वसता गुरुपादान् सेवमानेन कालो नानीयत।

पारि—स्वामिन्! क्षम्यताम्। किं भवान् मन्यते? किं चक्रवर्ती भवन्तं दृष्टमात्रमेव सपदि सिंहासनादवरुह्य भवन्तं करग्रहणेन स्वागतीकृत्यार्धासनं नादादिति भवान्विमनायत इव?

बाणः—को वेद मदीयं नियतेर्वा हृदयम्? यथा तथा वा भवतु। व्यतिकरो विप्रतीपः संवृत्तः।

पारि—( बाणं कराग्रेण स्पृशन् ) पश्यतु स्वामी। माऽन्यथाऽमंस्त भवान्। यद्यपि देवः परुषं सरोषमभाषिष्ट तथाऽपि केवलममृतमयेन स्नेहगर्भेण दृष्टिपातेनान्तरगतां प्रीतिमकथयत्।

बाणः—आम्। सत्यम्। यद्यपि बालचापलाकौलीनकोपितस्तथापि स्निह्यत्येव मयि। वेत्ति च मां गुणवन्तम्। अहो!! धिङ्मामनात्मज्ञम्। स्वदोषान्धमानसम्। अनादरपीडितम्। एवमधिगुणवति राजनि चान्यथा किलाचिन्तयम्। सर्वथा करोमि तथा, यथावस्थितं मां देवः कालेन ज्ञास्यति। ( इत्यवधार्य निष्क्रम्य राजगृहात् सुहृदां बान्धवानां च भवनेषु तावदवातिष्ठत, यावदस्य गृहीतस्वभावः पृथिवीपतिः प्रसादवानभवत्। पुनरपि राजभवनम्। कतिपयैरेवानेहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विस्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमनीयत नरेन्द्रेण।

इति चतुर्थोऽङ्कः

शुभम्

———

# श्रीश्रीअद्वैत-चरितम्

[ निबन्धकः—श्रीकालीहरदास-वसु-भक्तिसागर-विद्याविनोदः ]

श्रीहट्टप्रदेशे "लाउड" इति स्वाधीनराज्यमेकमासीत्। शकस्य त्रयोदशशताब्द्याः प्रथमे भागे दिव्यगुणशाली दिव्यसिंहोऽस्य शासक आसीत्। कुबेराचार्यो नाम तस्य मन्त्री मयूरभट्टवंशोद्भवस्य प्रथितनाम्नो नीलमेघस्य नन्दिनीं लाभानाम्नीमुदुह्य मुदं लेभे। तस्य कुबेरपण्डितस्य पिता कृतविद्यो नरहरिः शान्तिपुरमध्यवसत्। तत्र तस्मिन्नुपरते "तर्कपञ्चानन" इत्युपाहितः स कुबेरः सस्त्रीकः पैतृकनिवासभूमिं "लाउड" इति ग्रामं प्रत्यागच्छद्धित्वा शान्तिपुरम्। राजा पुनरागताय तस्मै सचिवपदं ददौ।

अनन्तरं लाभादेवी क्रमेण षट् पुत्रान् कन्यामेकाञ्च सूते स्म। परं तान्यपत्यानि शैशव एवैकैकशः पञ्चत्वं गतानि। सन्तानशोकेनाभिभूतया तया देव्यैकदा निजप्राणवल्लभोऽभ्यधायि—"भो नात्र मया स्थातव्य"मिति। शोकविधुरां तां सम्यक् सान्त्वयितुं कुबेरपण्डितः सानन्दं सहसा पुण्यतोयायाः सुरसरितस्तटीमधिवसितुं सपत्नीकः शान्तिपुरमागच्छत्। एवं गच्छति काले एकदा गङ्गादेवी स्वयं सानुकम्पमाविर्भूय मधुरया गिरा सम्भाव्य कुबेरमुवाच—"हरिणा अभिन्नात्मा जनिष्यते पतिर्मे भवत्तो लाभादेव्याम्"।

जगदार्त्तीरपाकर्त्तुम् आदिशिवो गोपेश्वरः अनन्तवीर्यो महाविष्णुश्च परमप्रेमवशादेकात्मतामापन्नो लाभा-गर्भं प्राविशत्। अनन्तरं दिव्यसिंहेनादिष्टो भाग्यभाक् स कुबेरपण्डितः लाउडं पुनर्भार्यया सह समागतः।

कथाप्रसङ्गेन कुबेर एकदा स्वभार्याया गर्भसञ्चारकथां राज्ञः कर्णगोचरीभूतामकरोत्। अस्मिन्नवसरे एको ज्योतिर्विद्विप्रः समागत्य निजेन प्रभूतविद्याप्रभावेण गणयित्वोवाच—"भोः पण्डितशिरोमणे! भवतो वनिताया अस्मिन गर्भे भक्तियोगसंशनार्थमेकः परमदयालुर्दानशीलो महात्मा प्रविष्टः।

स हायनमध्य आविर्भविष्यति" इति प्रोच्य लाभां प्रति दृष्टिं निक्षिपन ज्ञात-महिमानं तस्या गर्भमुपश्लोकयितुमारेभे—"एष आविर्भूय जगन्मङ्गलं पुमर्थानां मौलिं प्रेमाणमातनिष्यति। भक्तिप्रदानेन जीवान् दिवमपि थुत्कार-यिष्यति। दुर्विगाहमहिमाऽयं कलिं धन्यं करिष्यति। अस्याऽऽविर्भावेण शास्त्रविदां कलकलः शमितो भविष्यति। जगदेव निष्पुनंस्तव पुत्रः शाम्भवं धामेति विज्ञाय आनन्दममन्दं भज। परभक्तिविद्यायाः प्रचारेण भूरिशास्त्रविद्याया अर्थकरीं चर्चां तिरस्करिष्यति।" सर्वज्ञस्य एतन्मधुरं वचः श्रुत्वा तौ दम्पती धन्यम्मन्यौ परमां निर्वृतिं लब्ध्वा तं सबहुमान-मानर्चतुः। सोऽपि सन्तुष्टो यथाभीष्टं देशं प्रतितष्ठे।

अथ रजन्यामेकदा लाभादेवी ब्रह्मादिभिर्महितौ हरिहरौ एकात्मतां गतौ तस्या हृदयं प्रविष्टाविति—कोटिचन्द्रसारभूतादमृतद्रवादपि सुतरां सुमधुरं हरे कृष्णेति नाम गायन्तौ नृत्यत इति—तन्मङ्गलाक्षरमाधुर्यं श्रुतिरसनाभि-रास्वाद्य आपामरं सर्वं पापिनः सद्यः स्वर्गच्छन्तीति—धर्मराजः कृता-ञ्जलिस्तौ स्तवीति च—चित्तचमत्कारकारिणीं लीलां स्वप्नेऽपश्यत्। निद्रोत्थिता सा तत्क्षणमेव स्वामिने तं स्वप्नवृत्तान्तं न्यवेदयत्।

१३५६तमे शाकाब्दे माघे मासि शुक्लसप्तम्यां शुभे लग्ने कैलाससमो-ल्लसत्-"लाउड"-शिखरस्थे नवग्रामे कुबेरस्य नवः कुमारोऽजायत। तस्य जन्मना दिगङ्गनाः सुप्रसन्नाः परमश्रीसम्पन्नाश्चाभवन्। सुरभिर्वायुरवात्। अमराः पुष्पाण्यवर्षन्। मुनिगणो देवगणश्च गुप्तमागत्य सूतिकागृहं प्रविष्टः काकुशतं कुर्वन्, तृणं दशने दधत् पादयोः पतंश्चास्तौत्तं भगवदनवमं नवशिशुं वेदमन्त्रोच्चारणेन। कुबेरपण्डितः श्रद्धालुः कृतस्नानः षोडशमातृका अभ्यर्च्य आभ्युदयिकश्राद्धमूलं जातकर्मादिकं समाप्य द्विजदीनेभ्यः प्रचुराणि धनान्यन्नानि च ददौ। लाभादेवी तनयमुखपद्मं निरीक्ष्य पूर्वशोकं विस्मृतवती निबिडानन्दमकरन्दमपिबत्। आनन्दसन्दोहस्निग्धा सा पुलक-पुष्पिताङ्गा गङ्गाधारामिव वात्सल्यपीयूषं पुत्रस्य चन्द्रवदने स्तनदानमिषेण ददौ। भारतक्षेत्रे रोपितं जीवानां सौभाग्यलताबीजमेवं प्रारोहत्।

# प्रशान्तरत्नाकरम्

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वाऽनुवृत्तिः )

१म—अरे, शीघ्रं कुन्तं गृहाण, एष कश्चन कमठः समुत्प्लवते।

२य—आं ! एष गृह्णामि, यथास्थानं तरणीं प्रवर्त्तय ।

१म—एष प्रवर्त्तयामि, शीघ्रं सज्जो भव ।

२य—एष कुन्तं क्षिपामि । ( सपरिकरं कुन्तं क्षिपति )

१म—आ मूर्ख, भ्रष्टलक्ष्योऽसि ।

२य—दैवमेवाद्य विरूपं दृश्यते ! अरे इतो दृष्टिं देहि, इह रोहित इव दृश्यते ।

१म—अरे सत्यम्, तत् तिष्ठ, अहमत्र कुन्तं क्षिपामि ।

२य—नहि नहि, अलं कुन्तेन, बृहज्जालं क्षिपामि ।

१म—एवं क्रियताम् ।

२य—( सपरिकरं जालं क्षिपति )

१म—अरे कीदृशं मन्यसे ?

२य—जाले पतित इव ।

१म—तत सावधानमाकृष्यतां जालम् ।

२य—( जालमुद्भिद्य रोहितं समुत्पतन्तमवलोक्य ) हा धिक्, भ्रष्टः ।

१म—धिङ् मूर्ख, अतिजडोऽसि । येन वारद्वय एव निष्फला प्रवृत्तिः । तदलमतः परं प्रयत्नेन, एहि तरणीं परावर्त्त्य स्वगेहं गच्छावः ।

२य—(श्रुतिमभिनीय ) अरे, कुतो नु खलु एष काललयशुद्धो मृदङ्ग-ध्वनिः, सह च मनोहरं सङ्गीतम् ?

१म—अरे ममाप्यस्ति कौतूहलम् ! तत प्रतिपालयावः ।

२य—अरे क्रमेणायं समीपचारी निक्कणः ।

१म—अरे, पश्य पश्य, एषा काचिद् विचित्ररचना पत्रपुष्पादिसमलङ्कृता तरणी। यत्रायं सङ्गीतवादित्रप्रबन्धः !

२य—अरे न केवलं सङ्गीतमेव, ललित-ललनाकण्ठमूर्च्छनापि ।

१म—आं ! नानाविधभावविभावितं नृत्यमपि कामिनीनाम् ! अरे, सौभाग्यत एव न वयं पूर्वतः प्रतिनिवृत्ताः !

२य—अरे अपगतः सम्प्रति मत्स्याप्राप्तिनिबन्धनो विषादलेशोऽपि । यदिदं समासादितं दर्शनफलं श्रवणफलञ्च ।

१म—सुभगाः खलु धनिकाः, ये स्वच्छन्दत एव तादृशीं सुखसम्पदं भोक्तुमर्हन्ति ।

२य—अरे एषाऽस्माकं क्षुद्रा तरणी तरङ्गेण सुतरां स्पन्दमाना स्थिरां दृष्टिं मनसः स्थैर्यञ्च प्रतिहन्ति, तदेहि, यावदिहैव समीपे तरणीं स्थापयित्वा पुलिनमारुह्य निराबाधं द्रष्टव्यं पश्यावः श्रोतव्यञ्च शृणुवः ।

१म—अरे अयमदूरे सन्निहितो नद्यास्तीरपादपो दृश्यते, तदत्र तरणीं बद्ध्वा तीरमारोहावः ।

२य—एवमस्तु । ( निष्क्रान्तौ )

---

( ततः प्रविशति नदीवक्षसि तरणीमारूढः सपरिवारो राजा नृत्यन्त्यो वाराङ्गनाश्च )

राजा—गीयतां नृत्यताम्, अलं विश्रामेण ।

वसन्तकः—भोः ! एवं निरन्तरं प्रवर्तिताभ्यां नृत्यगीताभ्यां विलासिनीनां कटिबाधा कण्ठस्वरभङ्गश्च समुपजायेताम्, तदन्तरा विश्राममप्यनुमन्यस्व । एष दृश्यतां मृदङ्गं वादयतामपि करतलस्तम्भः ।

राजा—वयस्य, वसन्तक, सत्यां सर्वबाधाप्रशमनकारिण्यां सुरायां किमेवमाशङ्कसे ? एषा हि

सर्वव्यथाप्रशमनं कुरुते शरीरे
कण्ठस्वरं नयति कोकिलशब्दसाम्यम् ।
लोकोत्तरं मनसि दीपयति प्रमोदं
मूढाः सुरा यदसुरेषु सुरां दधुस्ते ।

वसन्तकः—भोः भोः ! अलमस्या दास्याः पुत्र्याः सुरायास्तावता स्तुतिगीतेन, यया सकृत्पीतया महान्तं विकारं प्रापयन्त्या पादेन खञ्जीकृतोऽस्मि । तदस्या दास्याः पुत्र्या गन्धोऽपि नेदानीं मे रोचते ।

राजा—वयस्य, वसन्तक, सकृत पानेन नास्या महत्त्वमवगच्छसि, येनैवं ब्रवीषि । प्रिये लीलावति, दीयतामस्य वसन्तकस्य पानपात्रम् ।

लीला—वयस्य, एहि, पिब । ( उपनयति )

वसन्तकः—मा तावद् भोः ! किमयमेकोऽपि मे सुस्थितः पादो न भवद्भ्यो रोचते ? यद्येवमानीयतां निशातः खड्गः, छिद्येताञ्चानेन दीनब्राह्मणस्य चरणौ । हा हा ! पित्रोः प्रसादात् पादद्वयं लब्धम्, एकस्तु दास्याः पुत्र्या सुरया अपहृतः, द्वितीयेन कथमपि स्वस्थेन पानभोजनगेहं प्रविश्य स्वेच्छया दग्धोदरं परिपूरयामि । तदेतदपि न सोढव्यम् ? हा तात, हा मातः ! क नु खलु युवां तिष्ठथः ?

राजा—प्रिये लीलावति, सुतरां विक्लवो ब्राह्मणः । तदलमत्र निर्बन्धेन, ममैव समुपनीयताम् ।

लीला—भीरुक एष ब्राह्मणः । का गतिः ? ( राज्ञ उपनयति )

राजा—( पानमभिनीय ) प्रिये, लीलावति, सखीभिः सह गीयतां नृत्यताम् । भो भो मार्दङ्गिकाः ! कथं विश्रान्तो मृदङ्गशब्दः ? वादयत, वादयत ।

( ससखीजना लीलावती गायन्ती नृत्यति, मार्दङ्गिका
मृदङ्गं वादयन्ति )

गीतम्

एहि दयित हृदये मम किं विलम्बसे ?

दूरे कथमसि न हि मयि करुणां कुरुषे ।
विधुरञ्चति चन्द्रिकां तरुरञ्चति मल्लिकाम्
जलधिरेति तटिनीं मां कथमुपेक्षसे ?
अधरे कुरु मधुराधरमबलामनु मुदमाहर
नयने कुरु नयनं प्रिय किं न भाषसे ?

( नृत्यति )

राजा—अहो सुधास्राविं सङ्गीतम् ! लोकोत्तरं मनोहरञ्च नृत्यकौशलम् । तथाहि—

मधुरस्वरमेष पावनः पवनः सादरमाहरन्नितः ।
अमृतभ्रमतः किमूर्ध्वतः सुरसम्प्रीतिकृते प्रयच्छति ?

अपि च,

आकाशं विपिनं महीध्रनिकरो वातस्तथा प्रान्तरं
नीरं वीचिसमाकुलञ्च सरितः सर्वं सुधाप्लावितम् ।
नृत्यं दृष्टवती तरङ्गतरला स्रोतस्वतीयं ध्रुवं
लीलालास्यविलासशिक्षणकृते लीलावतीं वीक्षते ॥

वसन्तकः—भो वयस्य, एषा ससखीजना लीलावती तथा समुच्चैर्गायन्ती न मे रोचते ।

राजा—वयस्य, कथमिव ?

वसन्तकः—एवं प्रवाते देशे तथा समुच्चैर्गायन्ती लीलावती पवनारूढस्वरसंक्रमेण विदिता गीर्वाणैर्वा गन्धर्वैर्वा अभिगृह्येत । एवं सति प्रियवयस्यस्तथा वयं लीलावतीललितगीतनृत्योपभोगसौभाग्यात् सुतरां वञ्चिता भविष्यामः ।

सर्वे—( हसन्ति )

राजा—आं ! एवम् ? वयस्य, अलमाशङ्कया, तत्प्रतीकाराय सन्ति सहैव सप्रहरणाः सैनिकाः ।

वसन्तकः—वयस्य, देवा गन्धर्वाश्च न प्रत्यक्षमभिगृह्णन्ति, परं परोक्षमेव। तददृष्टव्यापाराः सैनिकाः कथमिव प्रतिकुर्युः ?

राजा—एवमपि ब्राह्मणो वसन्तकः श्रौतं मन्त्रं प्रयुञ्जानः प्रतीकारं करिष्यति।

वसन्तकः—भोः तिष्ठतु तावत् परिहासः ! सति व्यसनसम्पाते दीनब्राह्मणस्य वचनं स्मरिष्यथ। भो वयस्य, अथ पृच्छामि, अतः परं कियद्दूरमस्माभिः प्रस्थातव्यम् ? अपि न लक्षयसि यदेष प्रदोषः प्राप्त इति।

राजा—वयस्य, प्रदोष इति कोऽयमुच्चैर्वादः ? अद्य बहुलपक्षीया चतुर्थी तिथिः। रजन्याः प्रथमं यामं यावदन्धकारः। तावत्पर्यन्तमग्रे गत्वा समुदिते सुधाकरे कौमुदीमहोत्सवं सम्भावयन्तः प्रतिनिवृत्ता भविष्यामः। किं वा लीलावती मन्यते ?

लीला—अथ किम् ? यदि रात्रौ नदीवक्षसि कौमुदीमहोत्सवमेव नानुभवेम, कीदृशस्तर्हि नैशविहारः ?

राजा—युज्यते।

वसन्तकः—अहन्तु जीवनात् कौमुदीमहोत्सवं नाधिकं मन्ये।

राजा—कथमिव ?

वसन्तकः—अलं वा तदुक्त्वा, येन कौमुदीमहोत्सवसम्भावनव्याकुलानां युष्माकं परिहासमेव समासादयेयम्।

राजा—वयस्य, तथापि कथ्यताम्।

वसन्तकः—किं वा कथनीयम् ? तमोवृतायां रजन्यां शैलारण्यसन्निहिते नदीवक्षसि विहरतोऽस्मान् दस्यवो वा अभिगृह्णीयुः।

राजा—आम् एवं शङ्कसे ? वयस्य, मा तावत्। सन्ति किल सहैव गृहीताः सप्रहरणाः सैनिकाः, त एव तत्प्रतीकारं करिष्यन्ति। तदलं शङ्कया। अथवा यदि नात्र रमसे, तदा त्वमितः पानभोजनप्रकोष्ठमासाद्य पानभोजनाभ्यां रतिं विन्दस्व।

वसन्तकः—एवमस्तु, का गतिः ? ( निष्क्रान्तः )

राजा—प्रिये, लीलावति, अवसितो दिवसः ! तथाहि—

एषा भास्कररागरक्तसलिलं वासो विहाय द्रुतं
सम्भ्रान्ता सरयूः प्रयाति जलधिं कृष्णांशुकेनाऽऽवृता ।
नीरे च प्रतिबिम्बितेन परितो दीपोच्चयेनाधुना
दीव्यद्रत्नमयं विभाति तदिदं कृष्णांशुकं सर्वतः ।

अपि च—

शैलाद् भिन्नतया न पादपगणो ध्वान्तेन संलक्ष्यते
शैलस्यायतिरायता समभवद् भीमा च कान्ता च मे ।
यद्दृष्टं दिवसे जगत् सुविपुलं रात्रौ तदेवाधुना
संक्षिप्तं परिदृश्यते रसवतामत्रापि दिव्यं सुखम् ।

लीला—आम् एवम् । ऊर्ध्वं नक्षत्रमालासमलङ्कृतं सुनीलमाकाशं, अधस्तात् तरङ्गतरला सान्ध्यप्रदीपमालाप्रतिबिम्बचुम्बिता सरयूः, पार्श्वयोः समीपे पश्चाच्च निरन्तरसन्निवेशमेकीभूतमिव शैलारण्यम्! एतया भीम-कान्तया तामसीश्रिया नवीनमानन्दमनुभवामि ।

राजा—प्रिये,

पश्चात् सम्मुखतो नदीमुभयतः प्राकारवद् विस्तृतं
शैलारण्यमिदं निरन्तरतया वाभाति चक्षुष्मताम् ।
ऊर्ध्वं चारुवितानमेव गगनं शुभ्रं जलञ्चाप्यधः
श्वेतप्रस्तरबद्धकुट्टिममिव प्रत्येमि रात्र्यागमे ॥

भवतु, अतः परं पश्यामि । कः कोऽत्र ?

पुरुषः—आज्ञापयतु देवः ।

राजा—उच्यन्तां नाविकाः, समया गत्या तरणीं वाहयन्तु इति ।

पुरुषः—यथाज्ञापयति स्वामी । ( निष्क्रान्तः )

राजा—कः कोऽत्र ?

पुरुषः—आज्ञापयतु देवः ।

राजा – उच्यतां प्रधानसूपकारः, चिरं नृत्यगीताभ्यां परिश्रान्ता ससखीजना लीलावती वयश्च, तदचिरं सान्ध्यभोजनप्रबन्धः कर्तव्य इति ।

पुरुषः—यथाज्ञापयति स्वामी । ( निष्क्रान्तः )

राजा—प्रिये लीलावति, एषा सम्प्रति समं प्रवर्तते तरणी । तथाहि—

वेगं विहाय समतां तरणी प्रपन्ना
स्थैर्यभ्रमं वितनुते चलिताऽपि चित्ते ।
आहन्यते लहरमालिकयाऽन्तराले
तेनैव नौनिवसतिः स्फुटतामुपैति ॥

प्रविश्य ) पुरुषः—जयति देवः । देव, सज्जे पानभोजने, श्रुत्वा देवः प्रमाणम् ।

राजा—प्रिये, लीलावति, एहि पानभोजनप्रकोष्ठं प्रविशामः ।

लीला—तथा ( सर्वे निष्क्रान्ताः ) ।

( ततः प्रविशति नदीवक्षसि सपरिजनेन रत्नाकरेणाधिष्ठिता तरणी )

रत्ना—वयस्य, वीरबल, साम्प्रतं योग्यः कालः प्राप्तः । सर्वतस्तिमिरावृतं जगत ! तद् यावदसौ कामेश्वरेणाधिष्ठिता तरणी सम्मुखे वक्रतामुपगतं प्रवाहमभिविशेत तावदेव वयं समुपसृत्य तरीमिमामभिग्रहीष्यामः ।

वीर—वयस्य, सम्प्रति सैनिकाः सान्ध्यभोजनरता लक्ष्यन्ते, तदस्मिन्नवसरे तेषामास्कन्दनं सुकरं सम्भाव्यते ।

रत्ना—एवमिदम् ।

वीर—तदादिश्यतां क्रमः ।

रत्ना—श्रूयताम्, निपुणमेकं वीरमिहैव जले अवतारय ।

वीर—कथमिव ?

रत्ना—सलिले पतितः प्लवमानोऽसौ तस्यास्तरण्याः सन्निहित आत्मपरित्राणं याचमानो नूनं तत्र स्थितैः पुरुषैः समुद्धरिष्यते ।

वीर—तथाऽसौ समुद्धृतः कथं जले मग्नोऽसीति पृष्टः किं ब्रूयात ?

रत्ना—एवं ब्रूयात,—अहं बन्धुभिः साकमुतसवपण्यवीथिकायां गतोऽस्मि, तत्र च केनापि समं बन्धुजनदर्पात् कलहं कुर्वाणस्तेनैव कुपितेन नदीप्रवाहे निक्षिप्तोऽस्मि। अनुपदमेव च नूनं सुहृदो मे मदन्वेषणाय समागच्छन्तीति।

वीर—वयस्य, कथं खल्वेष महानारम्भः क्रियते ?

रत्ना—वीरबल, श्रूयताम्, जानामि यदेवं महान्तमारम्भम् अकृत्वापि कृते कामेश्वरतरीसन्निरोधे नास्माकं पराभव इति। तथापि मरणमुत्प्रेक्षमाणा पिपीलिकाऽपि प्रतिपक्षदंशनान्न विरमतीति किञ्चिदिवानिष्टमुत्प्रेक्ष्य तत्प्रतीकाराय प्रवृत्तोऽस्मि।

वीर—अनेन समारम्भेण कीदृशस्तस्य प्रतीकारः ?

रत्ना—वीरबल, श्रूयताम्, यदा वयं तां तरणीं निरोत्स्यामः, तदा सैनिकैः शक्यक्रिये शस्त्रप्रयोगे द्वित्राणामपि सपक्षाणां प्राणवियोगमाशङ्क्य, अतः शस्त्रागारं तरणीस्थितमायत्तीकर्तुमेतत प्रस्तूयते। अन्यथा कुतः खलु शस्त्रागारमित्यविदितवतां प्रथमत एव शस्त्रागाराधिकारः कथं सुशकः स्यात ? तदादौ गत्वा स शस्त्रागारं विज्ञास्यति, यदा वयं तरीसन्निहिता भविष्यामस्तदैव च तेन विज्ञापिता वयमादौ शस्त्रागारं निरोत्स्यामः।

वीर—ततस्ततः ?

रत्ना—ततश्च तां तरीमारुह्य क्षणमात्रकेणैव द्वाभ्यां द्वाभ्यामेकैकशः सैनिका निःशेषं मारयित्वा नदीसलिले निक्षेप्तव्याः। अपरेषाञ्च प्रत्येकमेकैक एव पर्याप्तो भविष्यति। तदनन्तरमवशिष्यते दुरात्मा कामेश्वरः, स त्वया मया च सावधानं जीवित एव ग्रहीतव्यः।

वीर—कथमिव ?

रत्ना—किं न स्मरसि यन्मया तातमुद्दिश्य प्रतिज्ञातम्, दुरात्मनः कामेश्वरस्य सन्तप्तेन शोणितेन तातस्य पादौ प्रक्षालयिष्यामीति।

( क्रमशः )

---

# Sanskrit Sahitya Parishad Series.

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. As. 10, As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by Pt. Kalipada Tarkacharya. (Almost out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4, Re. 1. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Re. 1-4, Re. 1 (for members).

7. **Durgotsava-vivekah** of Sulapani—Edited by Pt. Satishchandra Siddhantabhushan. As. 8, As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt, Janakinath Sahityashastri As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A , B.L., Ph D. As. 12, As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satishchandra Siddhantabhushan. As. 7 As. 5 (for members).

11. **Prabhakara-vijayam** of Nandisvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4, Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As. 6, As. 5 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Pt. Chintaharan Chakravarti, M.A. As. 12, As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of Pt. Kalipada Tarkacharya. Re. 1 As. 4, Re 1 (for members).

15. **Prasastapada-bhashyam**—Edited by Pt. Kalipada Tarkacharya. Rs. 2, Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1, As. 12 (for members).

17. **Rik-pratisakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D. with the assistance of Pt. Chintaharan Chakravarti, M.A. Rs. 2 As. 8, Rs. 2. (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Pt. Akshayakumar Shastri. Re. 1 As. 4, Re. 1 (for members).

19. **Chhandogyamantrabhashyam**—Ed. by Pt. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12, Rs. 3 (for members).

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by Pt. Kalipada Tarkacharya. Rs. 3. As. 8, Rs. 3 (for members.)

21 **Manodutam** of Vishnudasa—Ed. by Pt. Chintaharan Chakravarti, M.A. As. 10, As.8 (for members.)

# স্বল্পমূল্যে পুরাতন সংস্কৃত-সাহিত্য-পরিষৎ-পত্রিকা

বর্ত্তমানে একবিংশ বর্ষ চলিতেছে। পূর্ব্বের কয়েক বর্ষের অল্পসংখ্যক পত্রিকা এখনও সম্পূর্ণভাবে পাওয়া যাইবে। সভ্যগণের সুবিধার জন্য নিম্নলিখিত মূল্যে পুরাতন পত্রিকাগুলি এখনও দেওয়া হইতেছে, এ বিষয়ে সভ্যগণের দৃষ্টি আকর্ষণ করা যাইতেছে। যিনি যে বৎসরের পত্রিকা ক্রয় করিতে ইচ্ছুক সেই বৎসরের পত্রিকা বর্ত্তমানে সম্পূর্ণ পাওয়া যাইবে কিনা পূর্ব্বে পত্রদ্বারা জানিয়া নিলে ভাল হইবে।—

| | | | |
|---|---|---|---|
| এক বৎসরের পুরাতন পত্রিকা··· | | ৩৲ | ( ডাক মাশুল ৶০ ) |
| ২ বৎসরের | ,, ,, | ( এক সঙ্গে )—৫৷০ | ( ,, ।৶০ ) |
| ৩ বৎসরের | ,, ,, | ,, ৮৲ | ( ,, ৷৵০ ) |
| ৪ বৎসরের | ,, ,, | ,, ১০৲ | ( ,, ৸০ ) |

## Opinions on the 'Kalitantram'

( Sanskrit Sahitya Parishad Series No. 2 )

**Amrita Bazar Patrika** (31. 10. 22)—We hail the appearance of a new book-let called Kali-Tantram published by the Sanskrit Sahitya Parishat, Shyambazar, Calcutta. It is annotated and translated by Pandit Satish Chandra Siddhantabhushan. We dare say that the work will prove to be a great help to those who care to make an attempt towards the realisation of the monistic philosophy contained in the Tantras. There is no doubt that it will at least serve the public in giving some inkling about the mode of worship enjoined by the Tantras and so help them from being duped by professional impostors. We hope that the presentment of such works will throw much light into the hitherto neglected Tantra literature. The get up of the book is good. It is priced at *8 as. for members* of the Sanskrit Sahitya Parishad and *10 as.* for the public.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

Reg. No. C. 1073

Vol. XXI, No. 12] [April, 1939

१८६० शकीये चैत्रे २१श-वर्षस्य १२श संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

## मासिक-सभा

संस्कृत-साहित्य-परिषद आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरवैशाखस्य १०म ( दशम )-दिवसे सोमवासरे सायं सप्तवादनतो भविष्यतीति सर्वेषां संस्कृत-भाषाध्यायिनामध्यापकानाञ्च तत्र समुपस्थितिः प्रार्थनीया।

आलोच्यविषयः :—आचारहीनता हि अधःपतनस्य निदानम्।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী **মাসিক সভা—১০ই বৈশাখ, ১৩৪৬, সোমবার, সন্ধ্যা ৭টার** সময়ে হইবে। সর্ব্বসাধারণের উপস্থিতি একান্ত প্রার্থনীয়।

আলোচ্য বিষয় :—আচারহীনতাই অধঃপতনের প্রধান কারণ।

## পণ্ডিতগণের জীবনী-সংগ্রহ

বঙ্গদেশে এখনও প্রায় ১০০০ সুপ্রতিষ্ঠিত অধ্যাপক আছেন, তাঁহাদের এবং তাঁহাদের অধ্যাপক পণ্ডিতগণের জীবনী সংগ্রহ করিতে পারিলে একটা উল্লেখযোগ্য কার্য্য সম্পন্ন করা যাইতে পারে। তদুদ্দেশ্যে প্রত্যেক অধ্যাপকের নিকট বিনীত অনুরোধ এই যে, তাঁহারা অনুগ্রহপূর্ব্বক নিজের এবং স্বপরিচিত পরলোকগত বা বর্ত্তমান অধ্যাপকগণের মধ্যে অন্ততঃ দুই জনের সম্বন্ধে নিম্নলিখিত সংবাদগুলি **সংস্কৃত-সাহিত্য-পরিষৎ-সম্পাদকের** নামে লিখিতভাবে জানাইলে দেশের ও দশের মহৎ উপকার সাধিত হইবে :—

নাম, পিতার নাম, উপাধি, কর্ম্মস্থল, জন্মস্থান (গ্রাম, পোঃ, জেলা), জন্মদিবস (বাংলা তারিখ, অন্ততঃ আনুমানিক সাল), বর্ত্তমান বয়স (পরলোকগত-স্থলে মৃত্যুদিবস—বাংলা তারিখ), তাঁহার অধ্যাপকের নাম, স্বরচিত কোন গ্রন্থাদি থাকিলে তাহার নাম (মুদ্রিত বা অমুদ্রিত জানা দরকার), নিজে টোলে মোট যত ছাত্র পড়াইয়াছেন তাহার আনুমানিক সংখ্যা, টোলের নাম ও ঠিকানা। সংবাদদাতার নাম ও ঠিকানা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1939. | १८६०-शकीये चैत्रे २१श-वर्षस्य १२श-संख्या | Vol. XXI, No. 12 |


## समवर्ती*

[ निबन्धकः—आर्० अप्पणाचार्यः, बि. ए. ]

पक्षी फणी बलो भू-मे यानं तल्पोऽग्रजः प्रिये।
कृष्णः पवर्गभूषोऽपि प्रसीदत्वपवर्गदः ॥१॥

पतङ्गचन्द्रौ प्रतिलक्षणेक्षणे
पतङ्ग एकः खगवाहनायितः।
भुजङ्गमङ्गीकुरुते च शायिकाम्
अनङ्ग इत्यद्भुत एव पुत्रकः ॥२॥

एकैश्वर्ये स्थितोऽपीत्थं योऽसक्त इव दृश्यते।
वैराजलोकसिद्ध्यर्थं वैराग्यं नस्तनोतु सः ॥३॥

---

* Sanskrit Translation of Death the Leveller by J. Shirley (ślokas 4-9).

इयं लोके कीर्तिः कुलज इति या च प्रभुरिति
क्षणच्छायास्थैर्यं न खलु चिररात्राय धरति ।
बलं बिभ्रद्रोप्तुं न हि हतविधेः कोऽपि कवचो
यमो हिंस्रं हस्तं प्रणुदति हि सम्राज्यपि निजम् ॥४॥

साम्राज्यदण्डमुकुटप्रकटीकृतौजाः
प्रभ्रश्य एव स च दण्डधरप्रहारैः ।
भस्मीभवन्नधनदात्रखनित्रवृत्ति-
साम्यं समेति नियतं स च सार्वभौमः ॥५॥

रणक्षेत्रे केचिच्चिनुयुरसिभिः स्वं बलफलं
नवान कीर्तिस्तम्भानपि च निखनेयुर्हतपदे ।
अथ त्वन्ते तेषां बलमपि भवत्येव नमितं
व्यवस्यन्त्यन्योन्यप्रशमनविधावेव त इमे ॥६॥

---

I.

The glories of our blood and state
Are shadows, not substantial things;
There is no armour against fate;
Detha lays his icy hands on kings:
Sceptre and crown
Must tumble down,
And in the dust be equal made
With the poor crooked scythe and spade,

II.

Some men with swords may reap the field,
And plant fresh laurels where they kill;
But their strong nerves at last must yield;
They tame but one another still:

प्रह्वा दैवे तेऽचिराद्वा चिराद्वा
प्राणास्त्याज्यास्तैश्च चेतोविरुद्धम् ।
पाण्डुच्छायेष्वेषु दासीकृतेषु
मन्दं मन्दं कालगेहं सरत्सु ॥७॥

भ्रुवोरूर्ध्वं जिष्णोः स्रगियमपि ते म्लायतितमां
प्रशंसा रे ! मा भूदित उपरि ते विक्रमकृतौ ।
बलीभूयेदानीं रुधिरबलिपीठे पितृपते-
रसृग्गात्राज्जैत्रो गिरति करुणं लक्षय ततः ॥८॥

अस्मिन्नेवात्यन्ततिग्मे श्मशाने
मूर्धानोऽद्धा जातुचिद्वोऽपि दह्याः ।
भव्याचारा एव सौरभ्यगर्भा
भूतीभूते भान्ति भूते प्रफुल्लाः ॥९॥

इतीव वाण्या गैर्वाण्या 'षर्ली'-काव्यमनूदितम् ।
अप्पण्णाचार्यकविना जेजीयेत मुदं ददत ॥१० ॥

---

Early or late,
They stoop to fate,
And must give up their murmuring breath,
When they, pale captives, creep to death.

III.

The garlands wither on your brow ;
Then boast no more your mighty deeds !
Upon Death's purple altar, now,
See where the victor-victim bleeds !
Your heads must come
To the cold tomb :
Only the actions of the just
Smell sweet and blossom in the dust.

# आयुर्वेदे शालाक्यतन्त्रम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—भिषगाचार्य-श्रीज्योतिषचन्द्र-सरस्वतीः ]

## जिह्वागतास्तालुगताश्च रोगाः

सुश्रुते हि जिह्वागताः पञ्च, तालुगताश्च नव व्याधयो दृश्यन्ते। वृद्ध-वाग्भटे तु षडष्टौ च यथाक्रमम्। तेषु वाग्भटेन जिह्वागतत्वेन याऽधि-जिह्विकोक्ता, सा तु सुश्रुते कण्ठगतेति पठ्यते, सुश्रुतेनोक्ताञ्च तालुगतां तुण्डीकेरीं वृद्धवाग्भटः कण्ठगतामाह। समासतोऽनयोरधिष्ठानयोस्तयोः सम्मतिस्तुल्यरूपैव दृश्यते। अनेनैव तु तयोस्ताल्वादिप्रदेशस्य स्थान-निर्देशे किञ्चिद् वैशिष्ट्यं ज्ञायते। जिह्वागतानामुपक्रमे लेखनं विश्रावणञ्च युज्येते। तालुगतानान्तु प्रायशः शस्त्रसाहाय्यमावश्यकमेव। विशेषतो गलशुण्डिकायां सति प्रयोजने तालव्यैकदेशः (uvala) छेद्य एव। शस्त्र-कर्मेदं व्यापद्बहुलमिति सुशिक्षितेन जितहस्तेनैव भिषजा कर्तव्यम्। सुश्रुतो ह्याह—

"अङ्गुष्ठाङ्गुलिसन्दंशेनाऽऽकृष्य गलशुण्डिकाम्।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम्॥
नोत्कृष्टञ्च न हीनञ्च त्रिभागं छेदयेद् भिषक्।
अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च॥
हीनच्छेदाद् भवेच्छोफो लाला निद्रा भ्रमस्तमः॥" इति।

नातिरूढे खलु व्याधौ शस्त्रतो भेषजप्रयोगादेव सुफलं लभ्यते। अति-प्रवृद्धे तु छेद एव वरम्। पाश्चात्त्या भिषजो भेषजदैन्याच्छस्त्रपातनमेव सर्वत्र वरं मन्यन्ते। तेन कदाचिद् व्यापत्तिरपि भवति। आयुर्वेदे एतादृशा बहवः सिद्धयोगाः सन्ति यत्सहाया वयं तालुपुप्पुटादौ (Tonsi-

litis) विना शस्त्रावचारणेन (Tonsil Guillotine) अतिरूढेऽपि अनेकान व्याधितान निरामयीकर्त्तुं प्राभवाम। अद्यत्वे आयुर्वेदज्ञानां शस्त्रभीरुत्वेनैव एते व्याधयः पाश्चात्त्यैरुपक्रान्ता अनेके अपसारिततालवैकदेशा जरणशक्तेरल्पतामनुभवन्ति। एतदधिष्ठानगतानामलासो नाम व्याधिर्जिह्वागतस्तालुगतश्चार्बुदः वृद्धवाग्भटोक्तश्च कपोलाभ्यन्तरजोऽर्बुदः आयुर्वेदे स्थानसंस्थाननामभिर्भिन्ना अपि पाश्चात्त्यपरीक्षया क्यानसार (Cancer) इत्येकव्याधित्वेनाभाष्यन्ते। सर्व एवैते असाध्या निष्प्रतिक्रियाश्च।

कण्ठगता व्याधयः—

शालाक्यतन्त्रोक्तेषु व्याधिषु कण्ठगता व्याधयः प्रायोऽधिकांशाः कृच्छ्रसाध्याः केचिद्वा सद्यः प्राणहराः, किं ब्रूमः केचिदहोरात्रेणैव मृत्यवे भवन्ति। इतस्तत्र प्रायः सर्वत्रैव तीक्ष्णतरा सद्यःफलदा च क्रिया कार्या। वृद्धवाग्भटस्त्वाह—

"प्राणानिलपथसंस्थाः श्वसितमपि निरुन्धते प्रमादवतः।
कण्ठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥" इति।

सुश्रुतस्त्वत्रोनविंशतेरेव व्याधीनां सत्तां न्यवेदयत्। वृद्धवाग्भटस्तु तेषां कांश्चिद्वा जहौ, ते च प्रायः सर्व एव निष्प्रतिक्रियाः। कण्ठगतेषु नव असाध्याः। पैत्तिकरोहिण्यान्तु आशुकारिणां तीक्ष्णतमानाञ्च भेषजानां प्रयोगादुपशान्तिः सम्भाव्येत। वातिकी श्लैष्मिकी तु न तथा सद्यः प्राणघातिन्यपि अक्रियायामपक्रमे वा प्राणान निहन्ति। व्याधिमिमं पाश्चात्त्याः 'डिपथिरिया' (Deptheria) इत्यभिधयाऽभिदधति। न खलु सर्वा एव डिपथिरिया रोहिणीति वक्तुं शक्यते, तस्याः सर्वाङ्गाधिष्ठानत्वात्। यत्तु व्रणं कलाविशेषेण (Deptherial membrane) आवृतं स्यात्तस्यैव 'डिपथिरिया' इति संज्ञा पाश्चात्त्यैर्दीयते। कदाचित फेरङ्गरोगाज्जाते गलक्षतेऽपि डिप्थिरिया-निर्देशो दृष्टोऽस्माभिः। अत एव रोहिणीवत नहि डिपथिरिया प्रायोऽसाध्या प्राणहरी च सर्वत्र भवति। पाश्चात्त्यैश्चात्र किमपि भेषजं प्रतिषेधार्थमाविष्कृतम्, तस्य च सूच्या प्रयोगादनेकैर्व्याधितैर्नैरुज्ये गतेऽपि

अचिकित्स्येषु व्याधिष्वपि तत् सुफलमापादयतीति आयुर्वेदज्ञा न सर्वथा विश्वसन्ति। ते खलु आविष्कारका वैज्ञानिका आहुरेतेन बहूनां नैरुज्ये सम्पादितेऽपि अल्पीयसां मरणं न प्रतिरोद्धुं शक्यत इति। अत एव एवं तर्कोऽननुयोज्यः स्याद् यत् ये खलु तस्माद् व्याधेरनेन भेषजेन निर्मुक्ता-स्ते न खलु असाध्य-रोहिणीव्याधिनाक्रान्ता आसन्निति। असाध्या हि व्याधयः स्वल्पतरा एव भवन्ति। अतोऽयं सिद्धान्तो नाहेतुको यद् रक्त-ज्ञायां सान्निपातिक्याञ्च रोहिण्यां भेषजमिदं न किमपि कर्म करोतीति। आयुर्वेदातुरालये तु प्राच्यप्रतीच्यैर्वैद्यैः सिद्धान्तस्यास्य सत्यासत्यता परीक्ष्य परीक्ष्य निर्णेया।

रोहिणीं विहाय पुनरष्टौ व्याधयः कण्ठगतेषु निष्प्रतिक्रिया उपलभ्यन्ते। आयुर्वेदे तेषु कापि प्रतिक्रिया न निबद्धा। तेषु स्वरघ्नः, मांसतानः, शतघ्नी, वलयश्चेति चत्वारः पाश्चात्त्यमतेन क्यान्सार इत्याख्ये व्याधावुपनिपतन्ति। रेडियम् प्रभृतिना पाश्चात्त्योपक्रमेण सामयिके उपशमे गतेऽपि न तेन तेषां मृत्युरोधो दृष्टः। मन्ये गलौघादिषु चतुर्ष्वपि सम्यक् परीक्षितेषु तेऽपि क्यानसार इत्याख्यस्यान्तर्भूता भविष्यन्तीति। एवं पाश्चात्त्यनिर्दिष्टमेकमेव व्याधिं वयं स्थानसंस्थानादिभेदाद् बहव इति वक्तुं शक्नुमः। मुखरोगेष्वे-वौष्ठादिस्थानभेदात् पाश्चात्त्यनिर्दिष्टमेकमेव क्यानसाराख्यं नानाभिधयाभि-धातुं प्रभवामः। एते च सर्वे कण्ठगता अपि दोषतारतम्यतः स्थानव्यति-क्रमतश्चाऽऽयुर्वेदे नानासंज्ञया संज्ञिताः। ते च सर्व एव निष्प्रतिक्रिया इति तत्र काचिद् गवेषणाऽनर्थिकैवेति मन्यामहे। इदमेव कारणमवेक्षमाणो वृद्ध-वाग्भटस्तेषां केषाञ्चिदुल्लेखमपि न कृतवान्। साध्यानां कण्ठगतानां उपक्रमे प्रायशः शस्त्रावचारण-रक्तमोक्षणयोर्विशेषत आवश्यकत्वादायुर्वेदज्ञा न तांश्चिकित्सितुं समीहन्ते।

## उपसंहारः—

माननीया आयुर्वेदहितैषिणः पाठकाः, एवं भवतां पुरतः प्राच्यशालाक्य-तन्त्रोक्तानां व्याधीनां नातिसंक्षिप्तां विवृतिमुपस्थापयामः। एषु द्विपञ्चा-

शङ्ख्याययोऽसाध्याः तेषां केऽप्युपक्रमा आयुर्वेदे नोद्दिष्टाः। काय-चिकित्सादिषु बहवोऽसाध्याः व्याधयः सन्ति, परं तत्र तेषामुपक्रमः सर्वत्र निवेदितः। असाध्यतमस्यापि राजयक्ष्मणः प्रतिक्रिया निरवशेषतो विहितः। अवस्थाभेदाद् बहवोऽपि तत्र नीरुजा भवन्तीति दृश्यते। साध्यानां कर्मैव निरवशेषत आयुर्वेदे ईरितं न त्वसाध्यानाम्। परमत्रानेकत्रैव स्वल्पशास्त्रविचारपूर्विकैव क्रिया कर्तव्येति न खलु सर्वत्र केवलेन भेषजेन सुफलं प्राप्यते। एवं गते ये खलु विद्वांसः पाश्चात्त्यप्रथया गवेषणाभिरायुर्वेद-स्योन्नतिं कामयन्ते तान् प्रति एतावदेवास्मत्वक्तव्यं वर्तते यत्—भवेन्नाम नानाविप्लवेनायुर्वेदस्य कियानंशो ध्वस्त इति तेषामाविष्काराय गवेषणायाः प्राक् अद्यत्वे यावान् ग्रन्थः समुपलभ्यते तमेव साभिनिवेशमधिगत्य ततश्चेत् कश्चिदभावः परिदृश्येत तर्हि नूत्नाविष्कारकामनया गवेषणा कर्तव्या। अन्यथा साम्प्रतं वर्तमानानामपि ग्रन्थानां सुशिक्षाया व्यवस्थामकृत्वा दोषदुष्टेष्वपि तेषु तत्संशोधनाय च प्रयत्नमनाश्रित्य तदङ्गं छित्त्वा पाश्चात्त्यानां कृत्रिममङ्गं योजयितुं प्रयासः पाश्चात्त्यमतेनैवोन्नतिसंज्ञयाऽ-भिधातुं युज्यते न तु प्राच्यमतेन। आयुर्वेदस्य वैशिष्ट्यं नाशयित्वा तद्विरोध्यंशयोजनमुन्नतिर्भवितुं नार्हति। प्राचयोक्तं चिकित्साबीजं गवेषणाभिर्बहुधाप्रसारणं हि आयुर्वेदे गवेषणाशब्दवाच्यं भवति, न च तस्य च्छेदः न वा तत्सिद्धान्तविरोध्यंशयोजनम्। एवं गवेषणा मुनिभिरपि समर्थिता। यदुक्तं सुश्रुते—

"तदिदं बहुगूढार्थं चिकित्साबीजमीरितम्।
कुशलेनाभिप्रपन्नं बहुधाभिप्ररोहति॥
तस्मान्मतिमता नित्यं नानाशास्त्रार्थदर्शिना।
सर्वमूह्यमगाधार्थं शास्त्रमागमबुद्धिना॥" इति।

आयुर्वेदस्योन्नतिरित्यज्ञोद्भाविता वाणी अद्यत्वे प्रायः सर्वत्र प्रचरति। यथा हि परःसहस्रेणापि प्रयत्नेन मानुषैः स्वहस्तमानेन सार्द्धत्रिहस्तमानान्नाति-रिच्यते, तथैव सर्वाङ्गसम्पूर्णस्यास्यायुर्वेदस्य नवतत्त्वसन्निवेशेनोन्नतिरस-

म्भाव्यैव। आयुर्वेदसेविनश्चेदुन्नतिः काम्यते तर्हि तथा प्रचेष्टा कुत्रापि भवतीति न श्रूयतेऽपि। इदं हि शालाक्यतन्त्रं पूर्णतयायुर्वेदेषूपलब्धेऽपि मनाक् शस्त्रस्पर्शभयाद् विशेषज्ञैः पाश्चात्य-शल्यतन्त्रोत्तीर्णैरपि सञ्जातवैद्यै-रस्पृश्यं जातम्, किमुताज्ञैः प्राच्यशास्त्रमात्राध्यायिभिः। साम्प्रतमनालोचित-पूर्वमेव वैद्यकतन्त्रं तज्ज्ञैरालोचनीयम्। तथा प्रयत्नं विहाय यत्र यत्राङ्गम् अस्माकमज्ञतया अस्माकमलसतया वालोचनाभावान्मलिनतरमवबुध्येत तदेवाङ्गञ्चेद् दुष्टमिति मत्वा तत्संशोधनाय बुद्धिं न्यक्कृत्य पाश्चात्त्यमतानु-सारेण छेद एव ( amputation ) अद्वितीयः पन्थाः इत्येतेषामुन्नति-कामिनां सिद्धान्तः स्यात्तर्हि स एवास्मान वक्तुं प्रचोदयति—

'बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति' इति

माननीयाः स्वदेशहितैषिणः पाठकाः, नीरसमिदमस्मदभिभाषणं भवतां श्रवणेषु अति-भाषणमिवाभातुं सम्भवति। एवमस्मद्दोषान नग्नतया पत्रिका-सहायेन जनतासु प्रचारादपराद्धोऽहं क्षन्तव्यो भवद्भिः। न खलु दोष-दुष्टेष्वङ्गेषु शस्त्रपातने कारुण्यावकाशो वर्त्तते। एतदपि विवेच्यमस्मदुद्देश्यं साध्विति। पुनश्च भवद्भ्यो निवेदयामि एवं विचारोऽस्माकं प्रमादो वा भवेत अदोषेष्वस्मासु दोषदर्शनं मे स्वप्नो वा नु स्यात परं भवतामेवान्त-रङ्गोऽहं भवतामेव सहकर्मित्वेन आत्मीय एवेति विविच्य मां भवतां ज्ञानालोकसम्पातेन प्रबुद्धं कुरुध्वम्। पुनरिदमपि मनसा सदैवावधातव्यम् —व्यक्तिगतं विद्वेषं जातिगतं वैषम्यं देशगतं पार्थक्यमर्थगतञ्च विभेदं सर्वथा परिहृत्य वयं खलु सर्वत्रैवायुर्वेदस्य दीनाः सेवका इति।

———

# अष्टादशत्व-संख्या

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

अष्टादशत्वसंख्यायां विद्वद्भिरन्तर्निहितं जगत् ।
षडङ्ग-गुणिता पूर्वं विद्या ह्यष्टादशाभवन् ॥१॥
अष्टादश पुराणानि पाराशर्य-कृतानि हि ।
श्रीमन्महाभारतं च पर्वाष्टादशकाञ्चितम् ॥२॥
अष्टादशाध्यायिनी हि गीता भगवता कृता ।
अष्टादशैव विहिताः स्मृतयः स्मर्तृभिः पुरा ॥३॥
तामष्टादशधाऽधीत्य शङ्करः सूत-संहिताम् ।
बादरायणसूत्राणां निर्ममे भाष्यमुत्तमम् ॥४॥
प्राचीने भारते वर्षे वाद्यान्यष्टादशाभवन् ।
प्राचीने भारते वर्षे भाषा अष्टादशाचलन् ॥५॥
"अष्टादशोक्तमवरं येषु कर्म" श्रुतौ स्थितम् ।
आषाढेऽष्टादशदिने मिष्टान्नं भुञ्जते जनाः ॥६॥
अष्टौ दश च सोपानान्यारुह्य यात्रिकाग्रगाः ।
अटवीवर्त्मनाऽटित्वा शारतृ-देवमुपासते ॥७॥
देवी ह्येषा भूतधात्री द्वीपाष्टादशकाङ्किता ।
अष्टादश-प्रभेदा हि पाकविद्या जगत्त्रये ॥८॥
दाक्षिणात्याङ्गना-वस्त्रं हस्ताष्टादशकायतम् ।
कालज्ञा जगदुः काष्ठाम् अष्टादश-निमेषिणीम् ॥९॥
अष्टादशे वयस्येव पुमान् स्वातन्त्र्य-भाग् भवेत् ।
अष्टादश-वयस्को हि चतुर्दश-वयस्विनीम् ।
अभीकः कामिनीं रत्यै यभेतेत्यनुशासनम् ॥१०॥
निर्माय शारदश्चक्रे निर्मायं लोक-वञ्चनम् ।
शारदानुग्रहेणायं जीवताच्छरदां शतम् ॥११॥

---

# स्त्रीधर्मः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः एम्. ए. ]

था कश्चिद्रक्षको न विद्यते तदा राजानमेव पालकत्वेन साश्रयेत् । तथाच नारदः

"ततसपिण्डेष्वरक्षतसु पितृपक्षः प्रभुः स्त्रियाः ।
पक्षद्वयावसाने तु राजा भर्ता पतिः स्त्रियाः ।
स तस्या भरणं कुर्यान्निगृह्णीयात पथश्च्युता"मिति

अत्र 'स तस्या भरणमि'त्याद्यंशेन यथा राज्ञो भर्तृत्वं पतित्वञ्च व्यवस्थापितं तथा राजाश्रयाभावे तादृगवस्थाप्राप्ता स्त्री अशन-वसनाद्यर्थं परिचारिकादिवृत्याप्यन्यमेव पालकं समाश्रयेदित्येतदेव मुनिवचनतात्पर्यम् । अत एव मनुनाप्युक्तम्—

"कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य त्वि"ति ।

अत एव नष्टे मृते इत्यादि वचनव्याख्याने मेधातिथिनोक्तं यथा अत्र पालनात् पतिमन्यमाश्रयेत सैरिन्ध्र्यकर्मादिनात्मवृत्यर्थम् इत्यादि । अनश्चात्मवृत्यर्थं राज्ञः पुरुषान्तरस्य वा समाश्रयणेनापि विधवा सततमेव ब्रह्मचर्यं पालयेदिति विष्णुना पक्षद्वयमेव विहितं 'ब्रह्मचर्यं तदन्वारोहणं चे'त्यनेन । ननु गर्भिण्यादीनामनुगमननिषेधात् तासां भवतु ब्रह्मचर्यरूपं पक्षान्तरम् कथं पुनर्ब्रह्मचर्यंस्यानुगमनेन समं विधवा स्त्री साधारणविषयमिच्छावैकल्पिकत्वं समबलत्वाभावात, तथाच याज्ञवल्क्यसंहिताव्याख्याने वीरमित्रोदयधृतमङ्गिरोवचनम्—

"यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात् कथञ्चन ।।

सर्वासामेव नारीणामग्निप्रपतनादृते ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कर्हिचिदि"ति ॥

तेन चानुगमनस्यैव मृतभर्तृकायाः प्रधानं पक्षः। ब्रह्मचर्यन्त्वनुगमनासम्भवे कादाचित्कमित्येष एवास्तु सिद्धान्त इति चेत् अत्रोच्यते, —वचनद्वयममूलकम्, समूलकत्वेऽपि पूर्ववचनं न पक्षान्तरबाधकमपि तु महापातकिनीनां सत्यपि पत्यौ पुरुषान्तरगतानां वा स्त्रीणामनुगमनाधिकारबाधकम्। पतिव्रतेत्युक्तेः। वचनन्तु कथञ्चिदार्थवादिकमेवान्यथा विष्णुविरोधः स्यात्। विशेषतस्तु मन्वादिभिर्मृतभर्तृकाया ब्रह्मचर्यमेव विहितं न पुनरनुगमनविधानं व्यवस्थापितम्। परवचनन्तु सर्वासामित्यनेन कथञ्चिदपि सहायरहितानां स्त्रीणां शत्रुप्रभृत्याक्रमणसम्भवे ब्रह्मचर्याद्यवलम्बनस्य दुष्करत्वात् अनुगमनस्याबाधसाध्यत्वं प्रतिपादितम् "नान्यो धर्मो हि विज्ञेय" इत्यर्थवादिकेनांशेनेति बोद्धव्यम्।

---

# श्रीश्रीअद्वैतचरितम्

( बाल्यलीला )

[ निबन्धकः—श्रीकालीहरदास-वसुभक्तिसागरविद्याविनोदः ]

कुमारस्य "कमलाक्ष" इति नामकरणे उत्सवो यथाशास्त्रं कृतः। कमलाक्षाभिधो बालको लीलया परमेश्वरलिङ्गानि प्रकटयन्नास्ते। परमाद्भुतः स परमरमणीयो बालक आ बाल्याद् विष्णुप्रसादान्नं विनाऽन्यत् किञ्चिदपि न गृह्णातीति सर्वान् विस्माययामास। बालकोऽनिवेदितान्नं पुरीषतुल्यमिति सततं प्रचारयति—"हरि" इति कस्मादपि शृण्वन्नुत्कण्ठते। धर्मतत्त्वानि मधुरं व्याख्याय स्वमातरमुपदिशति। माता चन्द्रमुखक्षरितामुपदेशसुधां

पीत्वा पीत्वा सुखसिन्धौ प्लवते। एकदा माता निशान्ते स्वप्ने धवल-श्यामलौ द्वौ बालकौ सानन्दं क्रीडन्तौ दृष्ट्वा चकिता विस्मिता चाभूत्। खेलन्तौ तावन्ततः कमलाक्षस्य नवनीतकोमलाङ्गे प्राविशतामित्यालोक्य जननी अधिकतरं विस्मयविह्वला सगद्गदं शब्दं चकार।

श्रीकमलाक्षो मोक्षं विनिन्द्य लीलया भक्तिश्रियं प्रकटीकारयितुं प्रत्यक्षमवतीर्णः। तस्य जननीदेवी एकदा तीर्थस्नानं कर्त्तुमैच्छत्। कमलाक्षस्तस्याः कामनां पूरयितुं स्वेनालौकिकेन देवभावप्रभावेण तामन्यत्रानीत्वा सर्वतीर्थानि मथित्वा स्वभवनमानीयैकीचकार। तेषामिदं समवायभूतं नवतीर्थं तेन "पणा"–भिधं कृतम्। माता विस्मिता तस्मिन् पुण्ये 'पणा'-तीर्थेऽवगाह्य कृतकृतार्थाऽभूत्। स्नानसमये धन्यम्मन्याऽसौ देवी कालिन्द्याः कृष्णसलिलं गङ्गायाः श्वेतसलिलञ्च पृथक् पृथक् प्रवाहितमैक्षत। अद्याप्यत्र मधुकृष्णत्रयोदश्यां तिथौ वारुणीस्नानव्यपदेशेन महती यात्रा भवति। बहुयात्रिणां समागमो घटमानः कमलाक्षस्य विस्मापिकां तल्लीलां स्मारयति च।

अतिप्रधीरेष मेधावी बालकस्त्रिभिर्वर्षैः समग्रं कलापं शब्दकोषं सकलानि काव्यशास्त्राणि चाधीते स्म। राजपुत्रस्तस्य सहाध्यायी।

नभस्तः पतितं चन्द्रयुगलमिव प्रतीयमानमिदं सुन्दरबालकद्वयं सायमेकदा चण्डीमन्दिराङ्गणं गतम्। राजतनयश्चण्डिकादेवीं प्रण्यपतत्। किन्तु कुबेरनन्दन एवं नाकरोत्। राजनन्दनो देवहेलनं निरीक्ष्य दुःखितो भूत्वा तं गुरुकुमारं निर्भर्त्स्य अवादीत—"भोः किमेतत्, यत्त्वं देवीं न प्रणमसि। यदि त्वं परेद्यवि तथा कुर्याः, देवीं सश्रद्धं न प्रणमेर्नूनं त्वामहं समुचितं दण्डयिष्यामी"ति। वयस्यस्य राजकुमारस्य तथा दारुण-दारुणं वचनं निशम्य शम्भुभावाम्बुधिपोतः कुबेरसुतः सहसैकं हुङ्कारोच्चारमुच्चैश्चकार। राजपुत्रो हुङ्कारशब्दश्रवणाद्विगतसंज्ञ उर्व्यामपतत्। पुत्रं मृतं वीक्ष्य राजानौ अतिशोकग्रस्तौ बभूवतुः। कुबेरोऽप्रतिभो भूत्वा पुत्रं कमलाक्षं गुरुं जिज्ञासते स्म—"भोः पुत्र! एतस्य व्यापारस्य

रहस्यं सुस्पष्टं मां ब्रूहि।" पुत्रस्तदा सविनयं प्रत्यवदत—"पितः, राजपुत्रः कुतर्कदोषेणैव स्वयं मूर्च्छां प्राप्तः।" राजा दिव्यसिंहो निजपुत्रं ब्रह्मकोपानलदग्धं विज्ञाय मर्माहतः सन् सस्नेहं गुरुपुत्रमपृच्छत—"भोः किमत्र कर्त्तव्यं भवानभिदधातु।" तच्छ्रुत्वा लज्जाभाराक्रान्तः स कुबेरसुतस्तत्क्षणादेव अनुकम्पया द्रुतचित्तो राजपुत्रस्याङ्गं विष्णुपादोदकाम्बुनाभिषिषेच। सपदि राजपुत्रस्य मूर्च्छाभङ्गोऽभूत।

विस्मयकरमेतन्निरीक्ष्य व्यापारं सर्वे स्तम्भिता अभवन। राजभवने आनन्दकोलाहल उदतिष्ठत। धावं धावमतितरां सर्वः प्रजावर्गस्तदलौकिकं दृश्यं निरीक्षितुं मोदभरेण स्मितपेशलास्यम् अम्बुजेक्षणं कोटिचन्द्रत्विषं तं ब्राह्मणकुमारं संवेष्टयामास। स्वप्नमिव मन्यमानौ तौ राजदम्पती सुखसिन्धौ प्लवमानौ ईश्वरधिया गुरुपुत्रं बहु सममानयताम्। तयोरानन्दः सीमानमुल्लङ्घते स्म। ततः प्रभृति राजा दिव्यगुणोपेतो दिव्यसिंहो दीप्यद्देवभावसम्पन्नं गुरुसूनुं भक्तिनम्रः सततं सम्मानयन्नासीत। नवनीततो मृदुलचित्तः कमलाक्षश्च नृपतेर्भक्त्या तुष्टः पित्रा राज्ञा च समभावेन लाल्यमान आसीत।

"मरुभुवि सुरतरुकदम्ब इव, परमदुःखवृक्षशिखरे सान्द्रानन्दकुसुममिव" स ब्राह्मणपाको मातुरङ्के रोचते स्म। "कमलं कुर्वदिव वदनकमलं" तस्य सततं स्मितमधु क्षरत पितरौ अनन्दयत। माता श्रद्धालुना चेतसा पुत्रस्य कटितटे सूक्ष्मां धटीं संपरिधाप्य नानास्वर्णालङ्कारैस्तं भूषयन्ती तस्य क्रीडादिकं प्रत्यहं सकौतूहलं परिलक्षयन्ती च मोदते। कट्यां रुणुरुणायमाना काञ्ची पदद्वये रुणुझुनायमानौ मञ्जीरौ च शोभन्ते। मातरं विस्मापयितुं कदापि कमलाक्षः परिहासच्छलेन मृदमत्ति।

कृष्णलीलामभिनयन् क्षणे क्षणे स कुबेरनन्दन आत्मानं परिचाययति, पुनः पिदधाति च स्वमायया।

लाभानन्दनः कमलाक्षः पौगण्ड एव असाधारणमेधाबलेन षडङ्गसहितान् वेदान् कण्ठस्थान कुर्वंस्तानधिजगे। अस्मात् "कुबेरनन्दनः श्रुतिधर" इति प्रसिद्धिं प्राप।

देव्याः प्रतिमां स न प्रणमतीति नृपतिर्मनसि सततं नितरां दूयते। राज्ञो मनोदुःखं खण्डयितुं कुबेरदेवो बहुभिरनुनयैरुपदेशैश्च पुत्रेण तथा कारयितुं न शशाक। देव्या मूर्तिं वन्दितुं स कथमपि न सम्मतोऽभूत्। भवतु तावत्, पितृदुःखदर्शनाद्दूयमानः पुत्रस्तं तोषयितुकामोऽगदत्—"पितः! यथा रुचितं भवते। एषोऽहं भवानीं प्रणमामि" इत्यभिधाय यदा स देवीं नमस्कर्त्तुमुद्यतोऽभूत्तदा तस्य उपक्रमं दृष्ट्वा देवी शिवानी कम्पमाना शिवस्वरूपं कुबेरपुत्रं पृष्ठतः कृत्वा दण्डायमानाऽभवत्, प्रतिमा च सपदि विदीर्णाऽभवत्। जगन्माता दिव्यसिंहस्य राजधानीं परित्यज्य शान्तिपुरं प्रस्थिता। कमलाक्षोऽपि सभास्थले निजस्वरूपं प्रकटय्य अन्तर्दधे। कमलाक्षस्य पारोक्षिकीमाज्ञामवबोध्यैव एवमलक्षिता भवानी-देवी शान्तिपुरं प्रातिष्ठत। यत्र शक्तिस्तत्र शिवो विराजति, दुग्धे नवनीतवत् शक्त्यां शिवो गूढस्तिष्ठति। देवदेव्यौ शश्वत् शान्तिपुरमेवाधितिष्ठतः। शान्तिरानन्दमावहति। "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्"। भगवदवतारं परिचेतुं मूढानामशक्यमेव तदनुग्रहं विना।

अहह, महत् कष्टमापतितम्। महापद्मनिधिस्वरूपं स्वपुत्रमदृष्ट्वा सहसैव पलायितं हृतसर्वस्वाविव पुत्रविच्छेदमसहमानौ पितरौ घोरमेवं विलपितु-मारेभाते—हंहो पुत्र प्राणाधिक! आवामत्र परिहाय क्व गतोऽसि? हा हतावास्व! त्वरयागत्यात्र आवयोर्दुर्दशां पश्य। एवं परिदेवयन्तौ तौ दम्पती कथं कथमपि कालं नयतः। कुबेरो यत् पुरार्जितं कर्म तदवश्यमेव भोक्तव्यमिति मन्यमान आत्मानं प्रबोधयामास। स्थैर्यं धैर्यञ्च लेभे। एवं कियति काले गच्छति तत्र शान्तिपुरे कमलाक्षः पितुर्मातुश्च चित्तसन्तापं मनसि विचिन्त्य भृशमनुतप्तोऽभूत्। तथाभूतः स विलम्बमकृत्वा पत्रमेकं लिखित्वा अनुगतभृत्येनैकेन तत् पितृसकाशं प्रेरितवान्।

नवग्राममासाद्य भृत्यः अग्रेसरो भूत्वा कुबेरचरणान्तिकं गत्वा तमभि-वन्द्य तत्करे लेखमर्पयामास। कुबेरस्तमभिनन्द्य उपवेश्य च स्वयं सानन्दं तनयकराङ्कितां लिपिमपठत्। पुत्रस्य शुभवार्त्तां प्राप्य परमं पिप्रिये।

उद्‌भ्रचन्द्रोमाद्यैर्निचिताङ्गः स सस्त्रीको राज्ञाऽनुज्ञातः पत्रवाहकेन सह शान्तिपुरं प्रति चलितवान्।

कुबेरस्तत्र स्वगृहमुपनीय पुत्रस्य पद्ममुखावलोकेन शीतलीभूय नयनरञ्जनं तं दोर्भ्यां परिरभ्य परमां निर्वृतिमवाप। निमज्जितनिधिमुद्धृतमिव पुत्रं प्राप्य माता आनन्दाप्लुता मुहुस्तस्य चन्द्रवदनं बहु चुम्बतिस्म—अङ्के धृत्वा तमश्रुभिः स्नपयति स्म। कमलाक्षः पित्रोः पादरजांसि गृहीत्वा तैर्निजाङ्गे तिलकरचनां चारु चकार। अहो, भक्तिर्जयति सर्वत्र।

अथैकदा पित्राऽनुज्ञातः कमलाक्षः "पूर्णवाटी" इति ग्रामस्य शान्त-नाम्नो विप्रस्य समीपे शास्त्राण्यध्येतुं प्रवृत्ते। मातापित्रोः सेवां गुरोः सेवाञ्च स परमव्रतमिवानुतिष्ठन्नासीत्। एतेषामुपदेशमणिभिर्माल्यं निर्माय कण्ठे दधन्मञ्जु रोचते स्म च। ब्राह्मण-वधिरान्धेभ्योऽन्नाच्छादनदानादीनि तस्य नित्यकर्माणि। तस्य दयादाक्षिण्यादयो गुणा जनानां मस्तकोपरि छत्रं रचयामासुः। कमलाक्षः श्यामदासपण्डितेन यदा उपनीतस्तदा दैववाणीयं श्रूयते स्म—"भो अस्य 'अद्वैत" इति नामधेयं भवतु"। सा दैववाणी कियतामन्येषां कर्णातिथिर्जाता। "बाढमिति—भगवत्यै वाणीश्रियै यथा रोचत" इति—मनसि सम्भाव्य आचार्येण तथैवाचरितम्। समकालमेव "जय जयाद्वैतचन्द्र" इत्युच्चैरानन्दकोलाहलः सञ्जातः। विद्यापीठस्य गुरुपादानामुपदेशप्रसादेन स अद्वैताभिधः कुमारो "वेदपञ्चानन" इत्युपाधिं प्राप। क्रमशस्तस्य लोकोत्तरा गुणश्रीः प्रकाशेन लोकानन्वरञ्जयत्। "स्वस्ति तस्मै" इति सर्वे वदन्ति, परोक्षेऽपि सर्वे तं प्रशंसन्ति। "पिहितामपि कस्तुरिकां गन्धो व्यनक्ति' इति प्रसिद्धमेव। श्रीमदद्वैतस्य "वेदपञ्चानन" इत्युपाधिः स्वरूपतः पात्रेऽस्मिन् सार्थक एव। लीलाविचिन्तनेन तज् ज्ञायते।

# समालोचनम्

[ निबन्धकः—नारायणशास्त्री आठले, प्रा. ग्रं. संग्रह, उज्जयिनी ]

मैसूर-संस्कृतग्रन्थसूची—अभिनन्द्यते मैसूराधिपतीनां गौरवयोग्यः प्राच्यकोशागारस्थ-लिखित--संस्कृतग्रन्थ--सविवरणसूची-प्रथमभाग-प्रकाशन-प्रयत्नः स्वागतपूर्वकम्। उल्लिख्यते च यदेतादृश्यः सूच्यः पन्नगपुर-मद्रास-वाराणसी-बटोदर-तंजावर-पुण्यपत्तनादि-स्थानेभ्यः पूर्वं प्रकाशिताः प्रकाश्यन्तेऽधुनापि। परमस्य सूचीभागस्य शैली स्वतन्त्रैव विभाति। प्रतिपादितौ स्तः साधुरीत्या सुरभारत्यां प्रतिपाद्य-विषय-वक्तव्यविशेषौ च ग्रन्थानाम्। तथा केषांचित्पुस्तकानां विषय आङ्ग्लभाषाया-मपि प्रदत्तो वर्तते। ग्रन्थकर्तृपरिचयः प्राक्कथने सम्यक्तया प्रतिपादि-तत्वात् ग्रन्थविवरणसमये त्यक्त इति न चित्रम्। प्रतिपुस्तकस्य लेखनसमयः शकसंवत्सरादिभिः प्रदत्तश्चेच्छोभनमभविष्यत्। संपादित-मेतत्सफलतापूर्वकं सुचारुरूपेण कार्यं महता परिश्रमेण मैसूरप्राच्य-पुस्तकालयाधिकारिभिः श्रीमान् एम्. एम्. बसवालिङ्गय्या तथा पण्डित-प्रवरैर्टी. टी. श्रीनिवासगोपालाचारमहोदयैः। अत उभावपि विद्वांसौ सम्मानार्हौ। प्राचीनग्रन्थरत्नानामाशयः सुलभरीत्याऽवगम्यते पुस्तका-दस्माद् गीर्वाणवाणीपरायणैः। आशासे अन्यविषयपुस्तकानामपि सूची-करणभागाः शीघ्रमेव मुद्रणालयात् प्रकटीभविष्यन्ति। येभ्यश्च संस्कृत्यन्त-र्गतसमस्तदेववाणीप्रेमवतां ज्ञानिनां च ज्ञानसंवर्धनेऽधिकसुगमो भवेन्मार्गः।

इति शम्।

---

# प्रशान्तरत्नाकरम्

( पूर्वाऽनुवृत्तिः )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

वीर—आं स्मर्यते। अथ स्त्रीणां कीदृशी गतिः ?

रत्ना—यथैव इतरेषाम्। शत्रुप्रियाः खल्वेताः शत्रूणामेव गतिं प्रापयितव्याः।

वीर—युज्यते। ततस्ततः ?

रत्ना—ततश्च कामेश्वरवर्जं सर्वेषु नदीगर्भं प्रापितेषु तत्रत्यानि रत्नादि-महार्घोपकरणानि स्वीयतरणीमारोप्य शत्रुतरीं कुठारप्रहारेण विदार्य जले मज्जयित्वा रत्नपुरं प्रति जयशब्देन प्रस्थातव्यम्।

वीर—सम्यग् गृहीतः क्रमः।

रत्ना—वीरबल, तदलं विलम्बेन, आरभ्यतां साम्प्रतं कृत्यम्।

वीर—भोः पुरुषाः! ( सर्वे उत्तिष्ठन्ति ) अपि श्रुतः स्वामिनो नियोगः ?

सर्वे—अथ किम्। श्रुतो गृहीतश्च।

वीर—अलमिदानीमेव सर्वैः। एकः साम्प्रतमपेक्ष्यते।

सर्वे—आज्ञापय।

वीर—विशालाक्ष, त्वमेव कृत्यारम्भेण पुरस्ताद् भव।

विशा—अनुगृहीतोऽस्मि। ( परिकरं बध्नाति )

वीर—निःशब्दं सलिलप्रवेशः कर्त्तव्यः।

विशा—यथाज्ञापयति वीरबलः। ( सलिले अवतरति )

रत्ना—विशालाक्ष, शत्रुतरीस्थितानां विश्वाससमुत्पादनाय सुदूरत-स्त्वमस्माभिराकारयितव्यस्त्वमपि एषोऽस्मीति प्रतिवाचं विसर्जयेथाः।

विशा—यथाज्ञापयति स्वामी। ( प्रवाहे पतितः )

रत्ना—गच्छ, अस्तु सर्वतः शुभाय ते कृत्यारम्भः। (दृष्ट्वा) अये एष विशालाक्षः प्रवाहे पतितः क्षणमात्रकेणैव सुदूरं नीतः। अपि नाम फलं दधीत ममायमभिसन्धिः ?

( नेपथ्ये 'परित्रायतां भोः परित्रायताम्' )

रत्ना—अये, एष विशालाक्षः क्रोशन्नात्मपरित्राणप्रार्थनामभिनयति। वीरबल !

वीर—भो विशालाक्ष, क्वासि ?

( नेपथ्ये 'एष भोः, एषोऽस्मि' )

वीर—( उच्चैः ) एते वयमनुपदमागच्छामः। कथञ्चित् क्षणमात्मानं धारय।

रत्ना—( निरूप्य ) अये तरणीस्थैर्गृहीतः शब्दः।

वीर—(निरूप्य) भो एष विशालाक्षस्तरीसमीपं गतः समधिकं क्रोशति।

रत्ना—( निपुणं निरूप्य ) अहो प्रमोदः ! एते तरणीस्थाः सम्भ्रान्ता रज्जुं जले क्षिपन्ति, एषा सा गृहीता विशालाक्षेण। अये एष विशालाक्षस्तामवलम्ब्य तरीसन्निधानमुपगतः। एष हस्ते गृहीत्वा तरणीस्थैः पुरुषैस्तरीमारोपितः संज्ञाहीनतां नाटयति।

वीर—( निरूप्य ) अहो अत्याहितम् ! एष कश्चन विचित्रभूषणमण्डितः पुरुषः ससम्भ्रमं सैनिकैः प्रणम्यमानः समुपेत्य विशालाक्षस्य नदीनिक्षेपमादिशति। धिक् प्रमादः ! एष नदीनिक्षेपणाय परिगृहीत एव।

रत्ना—वीरबल, एषः, एष एव स बहुभूषणभूषितमर्कटकः कामेश्वरहतकः। यस्य किल समाचारो नित्यमेव रत्नाकरस्य स्वान्तसन्तापाय परिकल्पते। यस्य शोणितपिपासया प्रतिक्षणमेव च पर्याकुलं चित्तं रत्नाकरस्य।

वीर—एष कः पुनरपरः पादेन खञ्जः सहसा समुपेत्य नदीनिक्षेपमस्य प्रतिषेधति। आः उज्जीविताः स्मः। एष तरण्यां शयितः समुपचर्यते विशालाक्षः। क्रमेणासौ संज्ञामुपलभते। अये एष संज्ञां लब्ध्वा समुत्थितः !

रत्ना—अहो निपुणः खलु विशालाक्षः ।

वीर—रत्नाकर इति वक्तव्यम् ।

रत्ना—वयस्य, वीरबल, मा मैवम्—

यत्र यत्र प्रयोगो मे सफलत्वमुपागतः ।
तत्र सर्वत्र युष्माकं प्रभावो मूलतां गतः ॥

वीरः—अलमात्मस्तवेन । वयस्य, पश्य पश्य, एष विशालाक्षः संवाद कुर्वन् इतस्ततः परिक्रामति, एष न दृश्यते ।

रत्ना—नूनमिदानीं प्रकोष्ठात् प्रकोष्ठान्तरमभिवीक्षते ।

वीर—अये, एष पुनः प्रत्यावृत्तो दृश्यते, एष अस्मत्तरणीं लक्षयन्नास्ते ।

रत्ना—तदेष एव नः समयः । तदलं विलम्बेन । एषाऽसौ तरणी नातिचिरेणैव नद्या वक्रं प्रवाहमभिविशेत । तदलमद्यापि कालात्ययेन, स्वल्पमतिक्रम्य पुनरप्याहूयतां विशालाक्षः ।

वीर—एवं करोमि । भो वाहकाः, वाहयत ।

वाहकाः—तथा ( तरीं वाहयन्तो निष्क्रान्ताः सर्वे ) ।

( ततः प्रविशतो भयं नाटयन्तौ धीवरौ )

१मः—अरे, रोहितक, अद्यापि परीक्ष्यतां मे हृत्कम्पः । भाग्येन अन्तरालगतौ जीवितौ स्वः ।

२यः—आं नाम्नैव तावत्कालं विदितो रत्नाकरः, अद्यासौ प्रत्यक्षमेव दृष्टः । अये, ईदृशो नाम रत्नाकरः ! आम् अत एवास्य नामश्रवणादपि जनाः कम्पन्ते ।

१मः—अरे, अलमत्र निमेषमपि स्थित्वा, शीघ्रमपेहि, यावद् वृक्षा-न्तरालेन गत्वा निरातङ्कं मातुरङ्कं प्रविशावः ।

२यः—अरे तरण्याः का गतिः ?

१मः—अरे रे, न खलु जीवनादप्यभीष्टतरा तरणी । तदलं तरणी-प्रेम्णा स्वजीवनव्ययं कारयित्वा ।

२यः—का गतिः ? एवमस्तु। हा तरणि, बहुलेन दुःखेन कारितासि। हा तरणि !

१मः—मूर्ख, अलमुच्चैराक्रन्दनेन, शीघ्रं निष्क्राम।

२यः—कथं नु खलु जीविका स्यात्, हा तरणि ! ( निष्क्रान्तौ )।

( ततः प्रविशति च्यवनः तत्पत्नी च )

च्य-पत्नी—आर्यपुत्र, सौभाग्यतः पुत्रप्रयत्नेन अपगतेऽपि दारिद्र्ये समुपनतेऽपि सुतरां सुखसम्भोगे किमिति भवानुत्तरोत्तरं विषण्ण इव लक्ष्यते ? तत् किन्तु खल्विदम् ?

च्यवनः—प्रिये, कीदृशं मां लक्षयसि ?

च्य-पत्नी—कतिचिद्दिनानि यावत् कुत्रापि भवतः प्रसादं न पश्यामि। सर्वदैव गभीरा कापि चिन्ता भवन्तमावृणोति, भोजने शयने भ्रमणे अन्यत्र च परतन्त्रमिव भवन्तमालोकयामि। यदा तावदतिदारिद्र्यादस्माकं सुदुःसहं दुःखमासीत् तदापि न ते तादृशं मालिन्यमवलोकितम्। तत् कथय, कथमीदृशी साम्प्रतं ते भावपरिवृत्तिः ? ईदृशं भवन्तमवलोक्य सुतरां दुःखितास्मि।

च्यवनः—प्रिये, जराया एष प्रभावः, किमन्यत् ?

च्य-पत्नी—आर्यपुत्र, मा मां वञ्चयस्व, कतिपयदिवसात् पूर्वं कष्टायामपि दशायां तथा प्रसन्नस्यापि ते तावता स्वल्पकालेन तादृशो जराजनितो विकार इति नैतदुपपद्यते। तत् सत्यं कथय। एषाहं ते धर्मपत्नी। प्रसीद, अलं मां वञ्चयित्वा।

च्यवनः—प्रिये, कथमेवं निर्बन्धं वहसि ? यदि सत्यमुच्यते, तदा महद्दुःखं गमिष्यसि। तावत्कालं तवैव दुःखपरीहाराय सत्यं प्रच्छाद्य स्वयं पुटपाकेनेव कठोरं सन्तापमनुभवन्नपि मूक एवास्मि। तदलं निर्बन्धेन, विरता भव मालिन्यहेतुश्रवणाध्यवसायात्।

च्य-पत्नी—भवतु दुःखं तथापि श्रोष्यामि। दुःखं हि स्निग्धजनसंविभक्तं सह्यवेदनं भवतीति सन्तः समामनन्ति।

च्यवनः—प्रिये, यदि तथापि निर्बन्धः, श्रूयताम्—

च्य-पत्नी—कथयतु आर्यपुत्रः।

च्यवनः—प्रिये, पुत्रप्रयत्नेन दारिद्र्यमपगतमिति भृशं प्रसन्नासि ननु ?

च्य-पत्नी—अथ किम्। कथमिदं भवतोऽपि न प्रसादमावहति ?

च्यवनः—प्रिये, महता मे दौर्भाग्येण।

च्य-पत्नी—आर्यपु॰ यदि एवंगतस्याप्यात्मनो दौर्भाग्यं मन्यते, तत् केषां पुनः सौभाग्यम् ?

च्यवनः—प्रिये, यद्येवं पृच्छसि, श्रूयताम्—

येषां पुत्राः साधुवृत्तेन पूता
भक्त्या पित्रोः पूजने व्याप्रियन्ते।
यत्पुत्राणां शीलतो लोकभव्यं
भाग्यं तेषां नेतरेषां कथञ्चित्॥

च्य-पत्नी—यद्येवं भवानपि सौभाग्यवानेव। एकमात्रः स्निग्धचित्तः पुत्रस्ते रत्नाकरः शीलवानावयोः पित्रोः परमां भक्तिं दधानः प्रतिदिनमर्चनां कुरुते। यथा यथावयोः सन्तोषस्तथा तथैव प्रयतते। व्यतीतं दैन्यदुःखं, तत्प्रसादेनैव राजेव भवानभिष्टूयते प्रतिदिनं परिजनसहस्रैः, तथापि कथं नास्ति भवतः सन्तोषः ?

च्यवनः—प्रिये, आपातदर्शिनी भवती सुखमात्रमन्वीक्षमाणा प्रसीदति। अहन्तु तथा सुखोपकरणेषु विद्यमानेष्वपि पुत्रस्य ते दुरन्तशीलविचारेण सुतरां विषण्णोऽस्मि।

च्य-पत्नी—कथमिव ?

च्यवनः—प्रिये, दुःसहदारिद्र्यापगमेन सुखितासि, अपि जानासि कथमस्माकं दारिद्र्यमपगतमिति ?

च्य-पत्नी—कथं न जानामि ?

च्यवनः—यदि जानासि कथय।

च्य-पत्नी—किमन्यत् ? रत्नाकरस्य मे वत्सस्य परमोपकारिणा दक्षिणशीलेन मित्रेण ऐश्वर्यं विसृष्टमिति।

च्यवनः— प्रिये, नैतदेवम्। प्रथमतस्तावदहमपि रत्नाकरप्रत्ययेन तथैव निरधारयम्, किन्तु साम्प्रतमन्यथैव गृहीतार्थोऽस्मि।

च्य-पत्नी—कथमिव ?

च्यवनः—प्रिये, श्रूयताम्; —अपि स्मरसि पुरा रत्नाकरेण प्रथमतो वितीर्णं वित्तमासाद्य धनदत्तस्य ऋणं शोधयितुं गतः सपरिजनेन राजश्यालेन परिभूतोऽस्मीति।

च्य-पत्नी—अथ किम्। कथं वा तद् विस्मर्यते ?

च्यवनः—तदैव राजकुले साहसमधिकृत्य—

राष्ट्रियस्य मुखाच्छ्रुत्वा दोषं रत्नाकरस्य मे।
सन्देहो हृदये जातो विश्वस्तस्यापि तं प्रति।

च्य-पत्नी—कीदृशोऽसौ सन्देहः ?

च्यवनः—प्रिये, लज्जते रसना तदभिधातुम्! अथवा का गतिः ? वत्सस्ते रत्नाकरश्चौर्यसाहसेन धनमासादयति न वेति।

च्य-पत्नी—धिक् शान्तम्! असम्भाव्यमेतत्। कथं रत्नाकरेऽपि भवतस्तादृशः संशयः ?

च्यवनः—प्रिये, आदौ सन्देहबीजमुप्तं राष्ट्रियेण। ततश्च रत्नाकरस्य दोषसंशयेन हृदि प्ररूढं महान्तं सन्तापं सोढुमशक्नुवन् भूतार्थपरिज्ञानाय महान्तं प्रयत्नमकरवम्।

च्य-पत्नी—ततस्ततः।

च्यवनः—ततो ज्ञातो भूतार्थः।

च्य-पत्नी—कीदृशः सः ?

च्यवनः—प्रिये, किमन्यत् ?

यद्यत् संशयितं नरेशपुरुषै रत्नाकरे दूषणं
तत् सत्यं न हि केवलं सुचरितं तस्यापि निःशेषताम्।

तन्नाम्नोऽपि भयं व्रजन्ति नगरे वित्तेश्वराः साम्प्रतं
जीवान वित्तकृते निहन्ति स चिरात् स्वच्छन्दतो निर्भयः ॥

अपिच—

एतद् रत्नपुरं दुरन्तचरितैः पर्यावृतं सर्वत-
स्तत्पक्ष्यैरतिमानुषेण विधिना तस्यानुगुण्यं गतैः ।
एतेषामधिपस्य दुष्कृतकृतो रत्नाकरस्याज्ञया
धर्मो लोपमिवाश्रितो भयवशात् पापञ्च वृद्धिं गतम् ॥

किं बहुना

वित्तार्थं मिथुनानि हन्त्यपदयो बालं तथा बालिकां
भूदेवान सुकृतानुसारकुशलान हित्वा सतां प्रत्ययम् ।
शूद्राचारपरः प्रयाति न चिराद् वेदेषु विश्वस्ततां
स प्राप्तो विलयं क्वचित् समभवद् भिन्नोऽद्य रत्नाकरः ॥

च्य-पत्नी—आर्यपुत्र, किं कथयति भवान ? एवं किल रत्नाकरो जात इति कथं विश्वसिमि ?

यवनः—प्रिये, ममापि पुरा तथैव मतिरासीत, परमिदानीं प्रमाणशत-मासाद्य तां मतिं विसर्जितवानस्मि । अहह ! स्मरामि, हन्त स्मरामि, एष किल वत्सो मे—

पुष्पच्छेदाद् वल्लरीं दूयमानां मत्वा पूर्वं बाष्पधारां मुमोच ।
कष्टं हन्तुं जीवसङ्घस्य पूर्वं सर्वं दुःखं स्वल्पकं तेन मेने ॥

च्य-पत्नी—स एव रत्नाकरः साम्प्रतं तथा निष्ठुरः कृत्याकृत्यविचार-पराङ्मुखः साहसकारीति कथं विश्वसिमः ?

च्यवनः—प्रिये, अलमविश्वासेन, विश्वस्ता भव, नूनमिदं त्वं न जानासि—

दारिद्र्यं नाम जीवानां सर्वसद्वृत्तिशातनम् ।
मुमूर्षून पश्यतः स्वीयान् साधोरपि मतिभ्रमः ॥

च्य-पत्नी—यद्येवं, किमिति पुत्रस्य तथा दोषं विदित्वापि भवान् न तत्प्रतिषेधाय प्रवृत्तः ?

च्यवनः—प्रिये, न जानासि, तत एवं ब्रवीषि ।

च्य-पत्नी—कथमिव ?

च्यवनः—प्रतिषेधे महान् प्रयत्नः कृतोऽपि निष्फलो जातः ।

च्य-पत्नी—आर्यपुत्र, सकृत् कृतः प्रयत्नो यद्यपि निष्फलस्तथापि द्वितीये वारे स फलप्रसूर्भवितुमर्हति । तत् पुनरपि प्रतिषिध्यतामेषः, येन प्रयत्नस्य साफल्यं सम्भवेत् ।

च्यवनः—प्रिये, किं ब्रवीषि सकृदिति । शतशः कृतः प्रतिषेधो निष्फलो जातः ।

च्य-पत्नी—आश्चर्यम् ! गुरौ लोकातीतभक्तिशालिनोऽपि तस्य भवद् वचनमनभिनन्द्य तथा गतिरिति कोऽयं दुर्ग्रहः ?

च्यवनः—प्रिये, किं वा कथयामि ?

यदा निषेधामि विरुद्धयुक्तिभिः
सदोषतामस्य कृतेरुदाहरन् ।
तदा स मूको विलसत्यधोमुखः
कृतिं ततः किन्तु करोति पूर्ववत् ॥

तत एव दुष्प्रतीकारमिमं व्याधिं मन्यमानो दुरुत्तरया चिन्तया मालिन्यमाश्रितोऽस्मि । प्रिये, प्रतिपलं पुत्रवृत्तं परिचिन्तयतो ममाद्य सुतरामशान्तिसमाक्रान्तं समग्रं जगत् । हा ! हा !!

तापस्तीव्रो दहति हृदयं भिद्यते मर्मबन्धः
शीर्णारण्यं भुवनमखिलं शान्तिलेशोऽपि लुप्तः ।
घोरध्वान्तं प्रसरति भुवि व्यायतं व्यालकीर्णं
यद् यत् सौख्यं कलयसि शुभे सर्वमेतद्धि कष्टम् ॥

क्षुरस्य धारामिव दुःखसन्ततिं क्षमोऽस्मि नो सोढुमसह्यचेतनः ।
येषां सुताः सत्पथबाह्यतां गताः कथं नु ते जीवितशल्यशालिनः ॥

च्य-पत्नी—आर्यपुत्र, तथा सुविज्ञे गुरौ भवति भर्त्तरि स्वल्पोऽप्युपदेशो मे सुतरामधिक्षेपाय कल्पते, तथापि पुत्रस्नेहविवशीकृता किञ्चिद् वक्तुमिच्छामि।

च्यवनः—प्रिये, कथय।

च्य-पत्नी—यद्यपि बहुशः प्रयुक्तोऽपि भवता प्रतिषेधः पुत्रे रत्नाकरे व्यर्थतामियाय, तथापि एहि पितरावावां मिलित्वा युगपत् प्रतिषेधावः, यदि ततोऽप्यसौ दुष्कृतान्निवर्त्तेत। तदिदानीमत्रैव तं समाहूय प्रयत्नमनुतिष्ठावः।

च्यवनः—प्रिये, साम्प्रतं रत्नाकरमाकारयितुमिच्छसि?

च्य-पत्नी—अथ किम्।

च्यवनः—कुतः खलु साम्प्रतमसौ लब्धव्यः; स इदानीं नगर एव नास्ति।

च्य-पत्नी—तत् क्व वा अन्यत्र?

च्यवनः—स हि पश्चिमाशावलम्बिनि सूरे सप्रहरणः सपरिजनश्च तरणीमधिरुह्य सरयूनदीमवतीर्णः।

च्य-पत्नी—कथमिव?

च्यवनः—प्रिये, अलमलमेतच्छ्रवणेन, कोमलप्रकृतिरसि पातकभीरुश्च। न खल्वेतत्ते सुष्ठु प्रतिभास्यति।

च्य-पत्नी—तथापि श्रोष्यामि। आर्यपुत्र, प्रसीद, कथय।

च्यवनः—प्रिये, तथापि श्रोष्यसि? तत् का गतिः? श्रूयतां

नौकाविहाराय नृपोऽस्मदीयो नद्यां सरय्वां समुपागतोऽद्य।

च्य-पत्नी—किं तेन?

च्यवनः—तस्यैव विध्वंसकृते सुतस्ते सहायजुष्टः सरयूं प्रपन्नः॥

च्य-पत्नी—हा हा! महदत्याहितम्। अत्र उभयतो विपत्तिं पश्यामि। यदि राजा समाक्रान्तो निहन्येत तदा स्वजनसहितस्य राज्ञो विनाशेन सुमहत् पातकम्, अथ न निहन्येत, तदा एककस्यापि मे दयितस्य पुत्रस्य—अहह! नातः परं चिन्तयितुमर्हामि। आर्यपुत्र, कथमसौ तदा तादृशाय

दुष्कृताय प्रतिष्ठमानो न कथमपि भवता निवर्त्तितः। हा हा व्यतीते का गतिः।

च्यवनः—प्रिये, किं ब्रवीमि, अद्यास्मिन विषमे कर्मणि प्रवर्तमानो रत्नाकरो मदीयं कठोरं प्रतिषेधं भाविनमुत्प्रेक्षमाण एव प्रस्थानात पूर्वं न मामभिगतः। अदृष्ट्वैव मां सहायसमेतः स्वाभिप्रायसिद्धये सरयूं प्रति प्रस्थितः। अनन्तरमेव च मत्कर्णपथमागतं तत।

च्य-पत्नी—तत् किमिदानीं विधेयम्?

च्यवनः—किं वा अन्यत? सपरिजनस्य राज्ञः प्राणविनाशश्रवणाय सज्जा भव।

च्य-पत्नी—आर्यपुत्र, यदि विपरीतं स्यात?

च्यवनः—प्रिये! वृथैव तदाशङ्कसे, नहि रत्नाकरस्तथा बलवाहनसमृद्धो येनास्य पराभवः सम्पद्येत।

च्य-पत्नी—अहो उज्जीवितास्मि। आर्यपुत्र, कथय, कथं कदा वा वत्सस्य मे मतिपरिवृत्तिः सम्भविता?

च्यवनः—प्रिये, सुबहु मया चिन्तितं तदधिकृत्य, अत्र एक एव उपायो दृष्टः।

च्य-पत्नी—कीदृशः सः?

च्यवनः—मम स्वेच्छया जीवनान्तः।

च्य-पत्नी—शान्तं पापं प्रतिहतममङ्गलम् आर्यपुत्रस्य! आर्यपुत्र, किमिदं ब्रवीषि? भवतो वचनाद् बिभेमि खलु। एषाहं मन्दभाग्या पादयोस्ते पतामि, प्रसीद, मा पुनरेवं भण।

च्यवनः—( संवरणं नाटयित्वा ) प्रिये, अलं भयेन, स्थिरा भव, दुःसहदुःखावेगादेवं ब्रवीमि। न खलु तथैव कृत्यव्यवसायमधिकृत्य। तदेहि यावदिदानीं वत्सस्य मे आत्रेयस्य मुखचन्द्रं निरीक्ष्य सर्वं सन्तापं लघूकुर्वः।

च्य-पत्नी—यथाज्ञापयति आर्यपुत्रः। ( स्वगतं ) अहो आर्यपुत्रस्य

वचनेन कम्पितमिव मे हृदयम्। भवतु तावत, एनमन्यासक्तं करोमि, यदि वत्सस्य आत्रेयस्य सम्पर्केण तथा स्यात्। भगवन् भूतभावन, प्रसीद, परिवर्तय मे रत्नाकरस्य हृदयम्।

च्यवनः—प्रिये, अलं चिन्तया, एहि, आत्रेयं पश्यावः।

च्य-पत्नी—यथाज्ञापयति आर्यपुत्रः।

---

## सप्तमाङ्कः

( ततः प्रविशति रत्नाकरवीरबलाधिष्ठितैः पुरुषैर्गृहीतः शृङ्खलितपाणिपादः कामेश्वरः )

रत्ना—राजन कामेश्वर, अथ क्वेदानीं भवतो राजगर्वः ?

राजा—दैवेनापनीतः।

रत्ना—न दैवेन।

राजा—तत् केन वा अपरेण ?

रत्ना—रत्नाकरेण।

राजा—रत्नाकरेण ? को नामासौ रत्नाकरः ?

रत्ना—मूढ, रत्नाकरमेव न जानीषे ? स खलु रत्नाकरो नाम—

येन व्याजलिपिं विधाय भवतः सीमान्तदुर्गं पुरा
सैन्यप्रेषणमेष सत्वरतया त्वं कारितो मूढधीः।
अग्निं योजयता गृहेषु परितो दौवारिकान् निघ्नता
येनाहारि तव प्रभूतगरिमा रात्रौ स रत्नालयः॥

राजा—( स्वगतम् ) आं ! स्थान एव नः संशयः। अहो सुतरां वञ्चितोऽस्मि पराभूतोऽस्मि मुषितोऽस्मि अनेन जाल्मेन। तदिदानीं

का गतिः ? पङ्कपतितो गज इव अशरणोऽस्मि ! हा कष्टम् ! अशरणोऽस्मि ! हा ! हा !!

लीलावती प्रियतमा परिपश्यता मे
मूढैस्तदा न्यवधि हन्त परिस्फुरन्ती ।
सख्योऽपि हा बत समां गतिमापन्नवत्यो
याता लयं निशि ममानुगताः समस्ताः ।।

हा देवि, हा पुत्रकाः ! अपि नाम दैवं पुनरपि युष्माकं दर्शनमनुमन्येत ? अपि नाम वा सेनापतिः प्रवरः कुमारो राजपरिजनाश्चापरे यथाकालं सबलवाहनं मामनागतं समीक्ष्य मदन्वेषणाय प्रबन्धं कुर्वीरन् ? अथवा तावत्कालमेते साहसकारिणो मदीयं जीवनं सहेरन्निस्यत्र को वा प्रत्ययः ?

रत्ना—भो राजन् ! किं नु खलु चिन्तयसि ?

राजा—न किमपि ।

रत्ना—मिथ्यैतदाह ।

राजा—कथमिव ?

रत्ना—यतः किमपि चिन्तयसि ।

राजा—कस्तत्र साक्षी ?

रत्ना—तव नयन-वदनविकार एव, यमिच्छन्नपि न शक्नोष्यपह्नोतुम् ।

राजा—अस्त्वेवं का क्षति ?

रत्ना—तत् कथय किं चिन्तयसि ?

राजा—सम्भाव्यमानां दैवपरिवृत्तिम् ।

रत्ना—( उच्चैर्विहस्य ) मूर्ख, अद्यापि दैवपरिवृत्तिं सम्भावयसि ? अथवा श्रूयतां कीदृशी दैवपरिवृत्तिर्भविष्यतीति । यस्ते प्रधान-सेनापतिः सकलस्य राज्यस्य समालम्बनमद्यापि ते जयाशामुद्दीपयति स हि तदा प्रशान्तेनापि विषवेगेण ततस्तृतीये दिवसे पुनः प्रवर्धमानेन सहसा पञ्चत्वं गन्ता । तथैव तस्य मूलस्य प्रभावः ।

राजा—हा कष्टम् , कथमत्रापि वैरिणा वञ्चितोऽस्मि ।

रत्ना—अन्यच्च, यस्ते प्रधानामात्यः सोऽपि गुप्तघातकेन नचिरादेव प्राणैर्वियोजयिष्यते इति कूटपुरुषो नियुक्तः ।

राजा—अहो दौर्जन्यं खलस्य !

रत्ना—राजन् ! अलमेतावतैव समाप्तिमवधार्य, अन्यदप्यस्ति ?

राजा—किमितोऽतः परं स्यात् ?

रत्ना—श्रूयताम्—यस्ते प्रवरः कुमारः परमस्नेहभाजनम् ।

राजा—किं नु खलु तस्य ?

रत्ना—अलमुत्कण्ठया श्रूयताम्—स हि तदा कण्ठे गृहीतेन मूलेन रात्रौ सर्पभावमाश्रितेन पञ्चत्वं प्रापयिष्यते, कुमाराश्चापरे न चिरादेव गुप्तघातकैर्विषप्रयोगेण व्यापादयिष्यन्ते ।

राजा—हा हतोऽस्मि मन्दभाग्यः ! रत्नाकर ! अपि त्वं पुत्रवान् नासि, येनैवं कुमारेषु निष्ठुरमनुतिष्ठतस्ते न द्रवतामुपैति चेतः ? रत्नाकर ! किमेवं निष्ठुरोऽसि ?

रत्ना—बाढं पुत्रवानस्मि, अत एवायमारम्भः ।

राजा—कथमिव ?

रत्ना—राजन्, कासेश्वर, अपि स्मरसि, यदनुष्ठितं तदा मदीये पुत्रके ?

राजा—किमिव तत्, न स्मरामि ।

रत्ना—कथं वा स्मर्येत ? यतः खलु नासौ राज्ञः पुत्रको भवति । आश्चर्यमाश्चर्यम् ! राज्ञः पुत्रा एव पुत्रकाः, दीनस्य पुत्रास्तु कुक्कुराद् वा बिडालाद् वा हीनतराः ।

कायो राजकुमारस्य कुसुमेनापि भिद्यते ।
शतधा छिद्यमानोऽपि दीनपुत्रो न खिद्यते ॥

राजा—रत्नाकर ! किमेवं भवान् ब्रवीति ? नावधारयामि ।

रत्ना—मूढ, कथमिदानीमात्मानं स्मरन्तमपि प्रच्छादयसि ? अहह ! स्मरामि तदानीमात्रेयस्य मे कुमारस्य कुसुमकोमले काये कर्कशकशाघातेन

शोणितप्रवाहमयाणि क्षतानि, कातरमार्तरवञ्च हृदयशोकहेतुम् । एषोऽहं तदैव प्रतिज्ञातवानस्मि—

येन मे पुत्रकस्याङ्गे कशाघातः प्रयोजितः ।
मया तस्य प्रमूढस्य वंशध्वंसः करिष्यते ॥

तत एवायमुत्कटः समारम्भः । कृतं दुष्कृतं, तस्य फलं नोपभोक्ष्यते ?

राजा—भद्र, रत्नाकर, अनुकम्पया मे क्षमां कर्तुमर्हसि ।

रत्ना—( हसित्वा ) मूढ, यः परेषु क्षमां प्रयुङ्क्ते, स एव क्षमां भिक्षितुमर्हति । त्वं पुनरात्मनो वृत्तशतं स्मरन्नपि क्षमां भिक्षमाणो न लज्जसे ? पश्य —

दुर्भिक्षेण निपीडितस्तव यदा दीनप्रजानां गणो
भृत्यैस्ते करसंग्रहाय विविधैर्मार्गैः पुरा पीडितः ।
तावत् किं क्षमया प्रजासु भवता कारुण्यमाविष्कृतं
किं वा वह्निमुखादरक्षि भवनं तासां मुहुः प्रार्थनैः ॥

राजा—भद्र, रत्नाकर, अहमपराद्धोऽस्मि, तत ममैव दण्डं धारयितुमर्हसि, को वाऽपराधः शैशवावस्थामनुभवतां कुमाराणाम् ? येन तेषु तादृशः कठोरदण्डः समनुष्ठीयते । भद्र, रत्नाकर, को नु खलु तेषामपराधः ?

रत्ना—आं तेषामपराधं पृच्छसि ? मूढ, त्वदीया अमी पुत्रका इत्येव तेषामपराधः। यद्यमी परस्य पुत्रा अभविष्यन् नैव तादृशं दण्डमन्वभविष्यन् ।

राजा—तथापि ते शिशवः ।

रत्ना—आं तेषां शैशवावस्थां स्मारयसि ? अद्य किल ते शिशवः, परं त एव कदाचित् शैशवमतिक्रम्य भवतः सम्बन्धदोषाद् भवन्तमेवानुकरिष्यन्ति, ततः साम्प्रतमेव कर्तव्यस्तत्प्रतीकारः ।

राजा—रत्नाकर, प्रसीद, विरम विरम कुमाराणां मे जीवनव्यापादनाध्यवसायात् । रत्नाकर, अलमेतावता नैष्ठुर्येण । अन्यथैव प्रतीकारं कुरु ।

रत्ना—विराम इति, भवतो वंशं समूलमनुच्छिद्य न विरमामि

राजा—रत्नाकर, एष ते पादयोः पतामि, प्रसीद, कुमारेषु प्रसीद, अलं तेषु दक्षिणाचारेषु निष्ठुराचारेण। प्रसीद।

रत्ना—मूढ, अपि तदा बाले दक्षिणाचारे कुसुमकोमले मदीये पुत्रे दर्शितस्त्वया स्वल्पोऽपि प्रसादः ? तदलमद्य व्यर्थनाक्रोशनेन।

राजा—रत्नाकर! वृथैव मे दीनप्रलापाः ?

रत्ना—तत्र किमद्यापि प्रष्टव्यमस्ति ?

राजा—रत्नाकर, कथमपि नानुकम्पसे ?

रत्ना—मूढ, अलमुत्तरोत्तरेण, रत्नाकरो नैतादृशस्य दयते।

राजा—हा हा पुत्रकाः! ममैव व्यसनिनः पितुर्दोषेण भवन्तो हताः स्थ। हा हा!

अङ्कुरोद्गममात्रेण निष्ठुरेण हतो द्रुमः।
छाया-पुष्प-फलाद्याशा समूलमिह नश्यति॥

हा हा पुत्रकाः!

कथं मे मन्दभाग्यस्य गेहे यूयं जनिं गताः।
राजश्रीरद्य युष्माकं मरणाय प्रकल्पते॥

हा हा देवि, मुषितासि, परिभूतासि मया मन्दभाग्येन स्वामिना। हा हा देवि,

दूरे स्थितः कल्पनया विपत्ते-
र्यस्या विमूढोऽस्मि कठोरशोकैः।
प्रत्यक्षमेतां बत वीक्षमाणा
प्राणैर्वियुक्ता भवितासि नूनम्॥

अहह! शून्यं सचराचरं जगत्! घूर्णते शिरः, कम्पते शरीरम्! अपसरतीव चरणतलात् पृथिवी! न स्थातुमर्हामि, हा हा पुत्रकाः! (मूर्च्छति)।

रत्ना—( उच्चैर्विहस्य ) हाः हाः हाः! प्रतिहिंसा! प्रतिहिंसा!! वयस्य, वीरबल, एष कामेश्वरो मूर्च्छितो वर्तते, तद् यावदेष संज्ञां लभते तावत् निवेद्यतां तातः।

वीर—किमिति ?

रत्ना—इदं निवेद्यताम्—

येनाधारि त्वयि कुमतिना दुर्नयः क्रूरबुद्ध्या
येनाकारि व्यसनशतकं सन्ततं लोकत्राह्मम् ।
यस्यादेशात् कति कति जना दुःखमन्तं प्रपन्नाः
सोऽयं कामेश्वरनरपशुः संयतोऽस्माभिरद्य ॥

अथवा एतदुच्यताम्—

यस्याज्ञा परिपश्यतस्तव तदा पौत्रे प्रिये साहसाद्
आत्रेये परुषं कशाहतिशतं व्यापारयत् पूर्वतः ।
येनात्रेयशरीरतः समवहद्रक्तं विषादाय ते
सोऽयं संयमितोऽत्र पौरुषभृतैः कामेश्वरो भूपतिः ॥

वीर—यथाज्ञापयति प्रियवयस्यः । ( निष्क्रान्तः )

रत्ना—भो भोः पुरुषाः ! अत्यारूढा रजनी, परिश्रान्ताश्च यूयं कृत्यशतैः, तदिदानीं गच्छत यूयं विश्रामाय, अहमेक एवात्र वीरवलमपेक्षे ।

पुरुषाः—यथाज्ञापयति स्वामी । ( निष्क्रान्ताः )

रत्ना—(स्वगतम्) अहो प्रमोदः ! पूर्णप्रायां प्रतिहिंसां पश्यामि । मूढ, कामेश्वर,

कृष्णसर्पः पदा स्पृष्टः फलं तस्य न भोक्ष्यते ?
स्वेच्छया ज्वलनज्वाला समाक्रान्ता विपत्तये ॥

अथवा तातो नाम विशेषतः साहसमस्माकमविज्ञानन्नपि पदे पदे संशयितः साहसमतिदोषस्थानमित्युपदिशति, प्रतिषेधति च कठोरव्यवसायं मे सनिर्बन्धम् । तन्न जाने कीदृशमद्य वृत्तेनानेन प्रतिपद्येत ?

( क्रमशः )

———

संस्कृत-साहित्य-परिषदो द्वाविंशवर्षस्य ( १३४४ वङ्गाब्दस्य )

आय-व्यय-निष्कर्षः

# (१) साधारण-कोषः

**आयः**

| | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| हस्ते ... | २४॥१५ |
| ष्ट्याम्प ... | १।= |
| वृत्तिरूपेण प्राप्तः | |
| ( कलिकातातः ) ... | ११७१॥।० |
| ( स्थानान्तरात् ) ... | ४२५) |
| सामयिक-दानरूपेण | |
| दातृभ्यः ... | १३७॥१० |
| गवर्नमेण्टसकाशात् ( १९३७-३८ ) | ६००) |
| कर्पोरेशन-सकाशात् पुस्तकालयार्थम् ( १९३६-३७ ) | ६५०) |
| चतुष्पाठीसाहाय्यरूपेण ( १९३६-३७ ) ... | २४०) |
| पुस्तकादि-विक्रयात् ... | ८१॥≡ |
| प्रावेशिक-रूपेण ... | १॥।० |
| विज्ञापनशुल्करूपेण ... | ५) |
| भि. पि. शुल्कपत्रात् ... | १६।/ |
| कुशीदरूपेण ... | १५४॥≡ |
| अन्यतः ... | १३॥।=१५ |
| न्यासात् ... | ३००) |
| ऋणात् ... | ८६२॥० |
| अग्रिमादि-प्रत्यर्पणात् ... | ८७।/ |
| ऋणात् (पुस्तकालय-कोषतः) | ३६॥।= |
| | ५११३॥० |

**व्ययः**

| | |
|---|---|
| पत्रिकार्थम् ... | ११११।/५ |
| पुस्तकालयार्थम् ... | ६८०॥≡५ |
| पुस्तकप्रकाशार्थम् ... | ६८/ |
| सभाभिनयाद्यर्थम् ... | २६६॥०५ |
| शिक्षाविभागार्थम् ... | १४२॥।=५ |
| गृहभाटकालोकाद्यर्थम् ... | ८४४॥।/ |
| वर्त्तनाद्यर्थम् ... | ४४३=१० |
| गृहोपकरणाद्यर्थम् ... | १३।=१० |
| पाथेयार्थम् ... | ६७॥।=१५ |
| पत्रादि-शुल्कपत्रार्थम् ... | १६॥/५ |
| परीक्षा-शुल्कार्थम् ... | १३) |
| सारस्वतपरीक्षार्थम् ... | २३।≡१० |
| भि. पि. शुल्कपत्रार्थम् ... | १५/१० |
| विविधविषयार्थम् ... | ३६॥/ |
| ऋण-प्रत्यर्पणार्थम् ... | ८६६॥० |
| अग्रिमादि-प्रत्यर्पणार्थम् ... | ११३॥० |
| | ५०८६॥० |
| उद्वृत्तः | |
| हस्ते | १७=१० |
| ष्ट्याम्प | ६॥।/१० |
| | ५११३॥० |

## (२) गृहकोषः

( १३४४ वङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

( १६४५-५५ ) ५%

गवर्नमेराट-लोनपत्रे ... १०००)

८६२॥० मूल्येन क्रीते क्याश-सार्टिफिकेट-पत्रे ... ८६२॥०

१८६२॥०

प्राप्तः ... ५)

१८६७॥०

ऋणरूपेण साधारण-कोषे प्रदत्तः ... ८६७॥०

उद्वृत्तः १००५)

उद्वृत्तस्य विवरणम्—

पूर्वोक्ते गवर्नमेराट-लोनपत्रे १०००)

हस्ते ... ५)

१००५)

## (३) ग्रन्थालय-कोषः

( १३४४ वङ्गाब्दे )

गतवर्षस्य प्रत्यर्पणावशेषितः ४७४)

१३४४ वङ्गाब्दे न्यासरूपेण प्राप्तः ८१)

५५५)

१३४४ वङ्गाब्दे प्रत्यर्पितः ४७)

उद्वृत्तः ५०८)

उद्वृत्तस्य विवरणम्—

गृहकोषे ऋणरूपेण दत्तम् १२२)

सेराट्राल व्याङ्कागारे ... १२०॥~१०

पोष्ट आफिसागारे ... ८)≡

हस्ते ... ८०)

साधारण-कोषे ऋणरूपेण दत्तम् ... १७७≡१०

५०८)

## परिषदः साधारण-कोषस्य

### ऋणम्

१३३३ वङ्गाब्दात् १३३६ वङ्गाब्दपर्यन्तं गृहकोषात् गृहीतम् ... ३३१६)

१३४३ वङ्गाब्दे उत्तमर्णसकाशात् गृहीतम् ५००)

३८१६)

१३४४ वङ्गाब्दे न्यासरूपेण गृहीतम् ... ३००)

क्याश-सार्टिफिकेट-पत्रविक्रयरूपेण गृहकोषात् ... ८६२॥०

अग्रिमादिरूपेण देयम्... १३०।१५

ग्रन्थालयकोषात् गृहीतम् १७७≡१०

५२८६)५

१३४४ वङ्गाब्दे उत्तमर्णाय प्रत्यर्पितम् ५००)

१३४४ वङ्गाब्दे न्यास-प्रत्यर्पणम् ३००)

८००) ८००)

४४८६)५

श्रीरामकृष्ण चक्रवर्त्ती, आय-व्यय-लिपि-रक्षकः। श्रीअमरेश्वर ठाकुरः, सम्पादकः

जे. सि. चक्रवर्त्ती, आय-व्यय-लिपि-परीक्षकः।

1938-39 Vol. XXI

१८६० शकाब्दे २१श-वर्षस्य

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

**महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री**

सहकारि-सम्पादकः—

**श्रीउपेन्द्रमोहन-सांख्यतीर्थः**

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)

# एकविंशवर्षीय-संस्कृत-साहित्य-परिषत्-पत्रिकास्थ-विषयानुक्रमणी

[ वर्णसमाम्नायानुसारिणी ]

# Sanskrit Sahitya Parishad Series.

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. As. 10, As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by Pt. Kalipada Tarkacharya. (Almost out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4, Re. 1. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Re. 1-4, Re. 1 (for members).

7. **Durgotsava-vivekah** of Sulapani—Edited by Pt. Satishchandra Siddhantabhushan. As. 8, As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt, Janakinath Sahityashastri As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D. As. 12, As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 7 As. 5 (for members).

11. **Prabhakara-vijayam** of Nandisvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4, Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As. 6, As. 5 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Pt. Chintaharan Chakravarti, M.A. As. 12, As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of Pt. Kalipada Tarkacharya. Re. 1 As. 4, Re 1 (for members).

15. **Prasastapada-bhashyam**—Edited by Pt. Kalipada Tarkacharya. Rs. 2, Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1, As. 12 (for members).

17. **Rik-pratisakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D. with the assistance of Pt. Chintaharan Chakravarti, M.A. Rs. 2 As 8, Rs. 2. (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Pt. Akshayakumar Shastri. Re. 1 As. 4, Re. 1 (for members).

19. **Chhandogyamantrabhashyam**—Ed. by Pt. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12, Rs. 3 (for members).

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by Pt. Kalipada Tarkacharya. Rs. 3. As. 8, Rs. 3 (for members.)

21 **Manodutam** of Vishnudasa—Ed. by Pt. Chintaharan Chakravarti, M.A. As. 10, As.8 (for members )

---

## Opinions on the 'Kalitantram'

(Sanskrit Sahitya Parishad Series No. 2)

**Amrita Bazar Patrika** (31. 10. 22)—We hail the appearance of a new book-let called Kali-Tantram published by the Sanskrit Sahitya Parishat, Shyambazar, Calcutta. It is annotated and translated by Pandit Satish Chandra Siddhantabhushan. We dare say that the work will prove to be a great help to those who care to make an attempt towards the realisation of the monistic philosophy contained in the *Tantras.* There is no doubt that it will at least serve the public in giving some inkling about the mode of worship enjoined by the Tantras and so help them from being duped by professional impostors. We hope that the presentment of such works will throw much light into the hitherto neglected Tantra literature. The get up of the book is good. It is priced at *8 as. for members* of the Sanskrit Sahitya Parishad and *10 as.* for the public.

---


Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

Reg. No. C. 1073

Vol. XXII, No. 1] [May, 1939

१८६१ शकीये वैशाखे २२श-वर्षस्य १म-संख्या

# संस्कृतसाहित्यपरिषत्

## संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

**महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री**

सहकारि-सम्पादकः—

**श्रीउपेन्द्रमोहन-सांख्यतीर्थः**

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,

Shyambazar, Calcutta.

## मासिक-सभा

संस्कृत-साहित्य-परिषद आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरज्यैष्ठस्य ३१श( एकत्रिंश )-दिवसे बुधवासरे सायं सप्तवादनतो भविष्यतीति तत्र सर्वेषां समुपस्थितिः प्रार्थनीया ।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—৩১শে জ্যৈষ্ঠ, ১৩৪৬, বুধবার, সন্ধ্যা ৭টার সময়ে হইবে। সর্ব্বসাধারণের উপস্থিতি একান্ত প্রার্থনীয়।

## পণ্ডিতগণের জীবনী-সংগ্রহ

বঙ্গদেশে এখনও প্রায় ১০০০ সুপ্রতিষ্ঠিত অধ্যাপক আছেন, তাঁহাদের এবং তাঁহাদের অধ্যাপক পণ্ডিতগণের জীবনী সংগ্রহ করিতে পারিলে একটা উল্লেখযোগ্য কার্য্য সম্পন্ন করা যাইতে পারে। তদুদ্দেশে প্রত্যেক অধ্যাপকের নিকট বিনীত অনুরোধ এই যে, তাঁহারা অনুগ্রহপূর্ব্বক নিজের এবং স্বপরিচিত পরলোকগত বা বর্ত্তমান অধ্যাপকগণের মধ্যে অন্ততঃ দুই জনের সম্বন্ধে নিম্নলিখিত সংবাদগুলি সংস্কৃত-সাহিত্য-পরিষৎ-সম্পাদকের নামে লিখিত-ভাবে জানাইবেন :—

নাম, পিতার নাম, উপাধি, কর্ম্মস্থল, জন্মস্থান (গ্রাম, পোঃ, জেলা), জন্মদিবস (বাংলা তারিখ, অন্ততঃ আনুমানিক সাল), বর্ত্তমান বয়স (পরলোকগত-স্থলে মৃত্যুদিবস—বাংলা তারিখ), তাঁহার অধ্যাপকের নাম, স্বরচিত কোন গ্রন্থাদি থাকিলে তাহার নাম (মুদ্রিত বা অমুদ্রিত জানা দরকার), নিজে টোলে মোট যত ছাত্র পড়াইয়াছেন তাহার আনুমানিক সংখ্যা, টোলের নাম ও ঠিকানা। সংবাদদাতার নাম ও ঠিকানা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

May, 1939 | १८६१-शकीये वैशाखे २२श-वर्षस्य १म-संख्या | Vol. XXII, No. 1


## वद विद्वन् कस्य दोषोऽयम् ?

[ निबन्धकः—पि. वि. वरदराजशर्मा ]

अहह दुर्दैवहतक कीदृशं मया दुरितमाचरितं यदित्थं कदर्थयसि। परिणयादद्य यावन्न मात्रयाऽप्यनुभूतमत्यल्पमप्यैहिकं सुखं यदुत्प्रेक्षन्त इतर आश्रमिणो द्वितीयाश्रमिणि। केनेदं प्रहसनं व्यरच्यत "तेषां गृहस्थो योनि-रप्रजननत्वादितरेषा"मिति। स परमेकः कविवरस्सत्यवाग् योऽभ्यधात "सङ्कटा बह्वपत्यानां* प्रत्यवायैर्गृहस्थते"ति।

सत्योऽसौ लोकवादः "ऋणानुबन्धरूपेण पशुपत्नीसुतादय" इति। धन्यास्ते निरीहा महात्मानः कन्था-कर्पर-सर्वस्वाः। अहो दुरितदुर्विपाकः, आः, आ केशप्रादुर्भावादभ्यस्यमानापि पाककला न ते स्वं रूपं प्रदर्शयति। हन्तामर्षी दैवहतकः यदसौ त्वां सहधर्मचारिणीं मे अतनिष्ट। कोऽस्या-वधिः। का मर्यादा। जीवितावधिरसौ मे दुर्ग्रहः, इत्येवमाद्यभद्रवचांसि प्रयुञ्जानोऽहं प्रायः प्रादर्शयं गालीप्रयोगपरिज्ञानमप्यविकलम्।

---

* कोपनानां हि ?

मूर्धानमारूढे सवितरि आतपप्लोषिताः कपोतशावका इव म्लानेन्द्रियग्रामाः सर्वेऽपि मे दारकाः क्षुधोपशमनव्यग्रास्तत्कालोचितचापलदुर्ललिताः केनापि कीलिता इव परित्यक्तचापलसर्वस्वा मामेव क्षणमीक्षणानां लक्ष्यमकार्षुः।

यावदहं समाप्य सान्ध्यं विधिमुपविशामि तावदेव पवित्रितं भुवस्तलं, आस्तृतं भोजनपात्रं, उपस्तृतमोदनम्। हस्ततलसुखच्छाद्ये कादले पात्रे विन्यस्तहस्तोऽहं कोष्णेन सघृतेन चान्नेन प्राणाग्निमेव हुत्वा क्षुधापिशाचिकायाः समाराधने प्रावर्तिषि। प्रथमं कवलं निगीर्य केनापि पाकदोषेणोपहतरसन उत्करीत्या प्रादर्शयं रसनादोषम्। अनाढ्यगेहसंवर्धितोऽहं को वाऽसौ पाकदोषो भवेदिति विभाव्यापि नावागच्छम्! मन्ये मान्यानां मादृशां मित्रमणीनां न भवेद्विसंवाद इति। द्वाभ्यां द्वाभ्यामेव हायनाभ्यामन्तरिताः सर्वेऽपि मे दारकाः परुषं भाषमाणं मामवलोक्य स्ववयोऽनुगुणं कलमपि भावविशेषमवचनमाविरकार्षुः। प्रथमा पुनर्दुहिता दशहायना "कथमसौ तातः पृथग्जनवदवद्यमननुरूपं व्याहरति" इति कथयन्तीव मयि जुगुप्सां मातरि चानुकम्पानुतापं समं वदने प्रादुर्भवता वर्णभेदेन प्रादर्शयत। अपरस्तनयः शिरसोऽवनमनेन, उल्बणां मे दृष्टिं परिहरता मातुरसक्रुपणां दृष्टिमनुबध्नता साकूतविलोकितेन, अन्यश्च स्फुरता ओष्ठपुटेन कपोलतलं मलिनयता बाष्पवर्षेण च तं तं भावमाविरकुरुताम्।

कुटुम्बिन्यास्तु वदने, सचकितावनता दृष्टिः, सुदीर्घो निश्वासः, पादाङ्गुष्ठं स्नपयन्ती बहलाऽश्रुधारा, ईषदुन्नीयमानो भ्रुवोस्संकोचश्चाहमहमिकया चिरमायोधनमारचय्य कोपि कमपि नात्यवर्तत।

तस्याश्च जोषम्भावो दुर्मुखं मां नितरां मुखरयतिस्म। किन्त्वयोपालब्धया, पितरौ नाम ते कस्याप्यनुपादेयामहृदयङ्गमां च त्वामेवं "शूलानुरूपः श्रेष्ठीति" ममैव शिरसि निपात्य, मामपीदृशे दुस्तरे निरये अपातयताम्। उताहो किं तयोरवाच्यवादेन। पित्रोरसौ निसर्गः यत्कस्यापि गले कन्या निबद्धव्येति। यदि नाम कोऽपि यथाजातस्समासाद्यते तयोः फलितं सुकृतेन।

न गणनीया वरदक्षिणा, न यौतकं, न षाण्मासिकः सत्कारविशेषः, न निषेकावसरेऽप्यभ्यर्हिता समर्हणा, न सीमन्तोत्सवे सीमातिलङ्घिनी सम्भावना, येषु नाम घट्टेषु जामातृसुहृदः स्वैरं शुल्कमाददाना निश्शेषयन्ति कन्यापितुः कोशजातम्। न शीलं, न रूपशोभासम्पत्तिः, अनभिरूपोऽभिजनः। सुदूरव्यवहितो विद्यासंस्कारः, सति चैवं किमिति वा पितरौ मेऽनवेक्ष्य कौटुम्बनिर्वहणक्षमतां पाणिं ते अग्राहयताम्। अवधीर्य मित्रोपदेशं, अनामन्त्र्य गुरुजनं, अनादृत्य सूनोर्मे आशयं, अविचिन्त्यान्तरायसन्ततिं, अविगणय्य मानस्याननुमतिं, खिलीकृत्य कुलस्यालंप्रत्ययाभावं, यैरहं पाणिन्ते ग्राहितस्ते नाम भवन्तु पर्याप्ततृप्तिभाजः।

नन्वनल्पस्येदं फलं सुकृतस्य यदनुकूलं कलत्रं नाम। विपरीतमपि विपरीतस्य। किमन्यद्दुष्कृतस्य फलं यत्परिणीय त्वां न स्वादु भोक्तव्यमपि। को वा भुङ्क्तां त्वदीयं पाकम्। न शुनेऽपि रोचेत। उषित्वाऽपीमान् द्वादश हायनानस्मद्गेहे न जानीषे भर्तुरसमीहितम्। किमितोऽपि मे ईहितं नाम। कृतं गार्हस्थ्येन। कामं स भवतु गृहस्थः यो हि नाम मनसोऽनुरूपां कार्यकुशलां गृहिणीं विन्देत, इति द्वितीयोऽपि निन्दाध्यायः सकृदधीतः।

ननु ते नाम दाराः येषां मनांसि परुषैरपि भर्तुर्वचनोपक्रमैर्न विप्रकृतानि भवन्ति, नवा प्रतिवचनोन्मुखानि भवन्ति, न पुनर्यं दारयन्ति भ्रातॄन् तैस्तैरूपांशुवचनोपक्रमैः, इति महनीयतामतिः ब्राह्मण्यां मे प्रतिक्षणं समैधत, यत्सर्वमेतत्परीवादं शृण्वतोऽपि मे गृहजनस्य मुखान्न किमपि निरगाद्वचः। यथा यथा पुनर्गृहजनो जोषमास्त तथा तथाऽवर्धत मे मन्युः। चिरस्य क्षुरिणं दृष्टवतो मे सर्वाङ्गीणो रोमोद्गमः स्वेदोद्गमानुगृहीतः काममपि पीडामुदपादयत। अभद्राकृतस्य मे शिरः अकुशलमेवाऽऽस्त। तन्मातरं पितरं मातृवंश्यान् पितृवंश्यांश्च यथावगतं परुषैरक्षरैरादूष्य, अपर्याप्त्या परं भाषायाः न पुनस्तितिक्षया क्षमया वा, उपसंहृत्य अवर्णवादाध्यायं, कथञ्चिदवसाय्याभ्यवहारं यावत्पश्यामि तावदेव सर्वेऽपि दारका भुक्तिं निर्वर्त्य पाठशालां प्रतिष्ठमाना अदृश्यन्त।

ननु मयापि शाला गन्तव्या। गगनमध्यमुपसर्पति सहस्ररश्मिः। न विश्रामावकाशः। न परीवादावसरोऽसौ। अतिवर्तते कार्यकाल इति महत्या त्वरया कञ्चुकधारिण्याः कञ्चुकमादायोन्मुच्य सत्वरं प्रातिष्ठे। तावदेव मन्दमागत्य कवाटमालम्ब्य तिष्ठतो गृहजनस्य "दिनावसाने शालायाः प्रत्यागमनवेलायां यदि नाम सुकरं भवेत, यदि चास्ति द्रविणानुमतिः, लवणं क्रीत्वा आगच्छ" इति वचनं सर्वस्यापि मे कोपोपालम्भस्य प्रतिवचनमिव कर्णे कुर्वन, चिरादवागच्छं लवणाभावादेष पाकदोषो न पुनर्गृहजनस्य नापि तत्पित्रोर्मत्पित्रोर्वेति।

प्रियपाठकाः, स च दोषः कस्येति स्वयं स्वैरमसम्भ्रान्तश्च पर्यालोच्य कथयत ॥ इति ॥*

---

## प्रभात-वर्णनम्

[ निबन्धकः-- श्रीदुर्गादास-गोस्वामी ]

अथ हतमतिरीषद्व्यक्तचित्राङ्गलक्ष्मी-
र्युवतिरिव धरित्री मूर्च्छिता जोषमास्ते।
विलसदुडुवरैकाद् वेणुवीथ्याश्च पश्चात्
पतति नभस इन्दुः क्षीणभूयिष्ठरश्मिः ॥१॥

स्तिमितनयनतारा भास्वतः प्राग् विबुद्धा
स्मितलसितमुखेन व्यञ्जयन्ती स्वरागम्।
तरल-तिमिर-वासोगुण्ठिता भुक्तमुक्ताद्
व्रजति लघु निकुञ्जात प्राच्यतः सा नवोषा ॥२॥

---

* सकृत्सज्जातेऽप्यनवधान एवं पित्रन्तोऽपवादोऽतिवाद एवेति दोषोऽयं लेखस्य न गृहजनस्य न वा पत्युर्नापि तत्पित्रोरिति प्रतीमः। प० सं०

नवविरहपरीता पाण्डुकान्तिर्नलिन्याः
सरसि कुमुदिनी सा मत्सरेणेव जाता।
अपि पतति समन्तादाकुलः षट्पदौघो
विकचकुसुमपुञ्जे गुञ्जनस्पन्दिताशः ॥३॥

प्रचलति खलु नैशं सन्ततं ध्वान्तमेतद्
विजहति सुखशय्यां हन्त लोकाः कथञ्चित।
विभुगुणमहिमानं कीर्त्तयन्ति स्वनीडे-
ष्वपि च कलमिदानीमण्डजाः काकलीभिः ॥४॥

सुविहित-लय-ताल-श्लक्ष्ण-मन्दाक्षराभिः
श्रवणपथगताभिर्नन्दयन् गीतिकाभिः।
रहसि ललित-तल्पे सुप्तिबोधान्तरस्थान
पथि चलति सकान्तान रागिणः कोऽपि पान्थः ॥५॥

अटति शकटमेकं वक्रसङ्कीर्णमार्गे
परुष-परुष-शब्दैश्चक्रयोर्वर्त्तनोत्थैः।
विदधदिव मनुष्यान स्वप्नयाने निषण्णान्
भृशमुपचितखेदान् मन्दवेगं कदाचित ॥६॥

सपदि नयति धेनूः साम्प्रतं गोष्ठभूमिं
तरुण-वयस एते गोपकास्तोत्रहस्ताः।
अपि च विहितकृत्याः स्वेषु तावन्मनुष्याः
कथमपि मलिनाक्षाः कर्मसु व्याप्रियन्ते ॥७॥

गलति शिशिरबिन्दुः शाखिनां पल्लवेभ्यः
स्फुरति मधुरगन्धो नूतनानां तृणानाम्।
पठति च सुरसद्मद्वारमुन्मुच्य कल्यं
स्फुट-ललित-वचोभिः सेवकः स्तोत्रमेकः ॥८॥

उषसि विहिततोयोन्मज्जनाः श्रद्दधानाः
प्रतिवनमवचित्य श्लाघ्यपुष्पाणि तावत् ।
सुरगुरुपरिपूजां कुर्वते भक्तिनम्राः
सुख-भर-जडबाह्याभ्यन्तराः सोपचारम् ॥९॥
सरति लघु-घनौघः स्फीततूलोपमः खे
धरति सुरवराशा सान्द्रसिन्दूररागम् ।
चरति खलु गभीरं मङ्गलो वाद्यनादो
हरति च मृदुवायुर्हव्यगन्धं दिशासु ॥१०॥
प्रथमकिरणपातोन्निद्रपद्मेषु चञ्चद्-
भ्रमरकलमकस्मान्मूकयन् वीचिभङ्गैः ।
पुनरिव नरलोकं जीवयन् मातरिश्वा
वहति शिशिरसिक्तस्निग्धगन्धेन विष्वक् ॥११॥
घनतिमिरमुदस्यन् पद्मिनीजीवितेशो
धुरि विकलमनूरुं स्थापयन्नेकचक्रे ।
नभसि भुवनसाक्षी स्यन्दने स्वे स्थितोऽसौ
प्रसभमुदयशैलादुत्थितः सप्तसप्तिः ॥१२॥

---

# आश्रमधर्मः

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः एम्. ए ]

शास्त्रोक्ताचारविशेष आश्रमः, आश्रयन्ति स्वं स्वं तपश्चरन्त्यत्रेति ऽयुत्पत्तेः। स च ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-पारिव्राज्यभेदाच्चतुर्विधः। तथाच "ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजक इति" बौधायनसूत्रम्। तच्च "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद् वनी भूत्वा प्रव्रजेद् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वा ; यदहरेव विरजेत तदहरेव प्रव्रजेदित्यादिश्रुतिमूलकम्।

मनुना युगभेदेन पुरुषाणां जीवनकालं निरूप्याश्रमकालोऽप्यभिहितः। तत्र जीवनकालो यथा—

अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः॥ इति।

ततश्च शतायुर्वै पुरुष इत्यादि वाक्यं चतुर्थं कलियुगमधिकृत्यैवेति ज्ञेयम्। यत्तु कलावपि कृतादियुगानुरूपमायुः केषाञ्चित् तपस्विनां परिलक्ष्यते, तद् योगबलादेवेति मन्तव्यम्।

ननु पुरुषाणां शतवर्षं आयुषः काले निरूपिते कथमकाले मृत्युर्जायत इति चेत् मनुनैव तत्कारणं निर्द्दिष्टं यथा—

अनभ्यासेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति॥ इति।

'आचारस्ये'ति शास्त्रविहितस्य सन्ध्यावन्दनादिरूपस्य स्वजात्युक्तस्य। 'आलस्यादि'ति, आलस्यं नाम सत्यपि सामर्थ्येऽवश्यकर्त्तव्ये कर्मणि वीतरागत्वं, तस्मात्। 'अन्नदोषादि'ति, अन्नदोषश्च खाद्यपेयादिषु पर्युसितादिदोषदुष्टेषु शास्त्रनिषिद्ध-लशुन-गृञ्जनादिषु हीनजातिप्रस्तुतान्नादिष्वप्याग्रहः तस्मात्।

'विप्रानि'त्युक्तेर्वर्णान्तराणान्तु सततमेवैतेष्वासक्तिसम्भवात् कैमुतिकन्यायोऽभिहितः। आश्रमकालोऽप्यभिहितो मनुना यथा—

चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत॥ इति।

एवमन्यत्राह यथा—

एवं गृहाश्रमे स्थित्वा विधिवत् स्नातको द्विजः।
वने वसेत्तु नियतो यथावद् विजितेन्द्रियः॥ इति।

वानप्रस्थधर्मं निरूप्य पुनः स एवाह यथा—

वनेषु तु विहृत्यैवं तृतीयं भागमायुषः।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान परिव्रजेत्॥ इति।

न चात्र वर्षशतायुष्कालस्य भागचतुष्टयनिरूपणेन प्रत्याश्रमं पञ्चविंशतिवर्षाण्यवधार्याणि। तथा सति—

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥ इति।

अनेन मनुवचनेन ब्राह्मणस्य गर्भाष्टम उपनयनविधानेन, पुनः

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥

इत्यनेन च ब्रह्मचर्यस्य षट्त्रिंशदष्टादश-नववर्षान्यतम-वैकल्पिकविधानात् कल्पितसिद्धान्तविरोधः स्यात ब्रह्मचर्याश्रमस्य पञ्चविंशतिवर्षेभ्यो न्यूनाधिककालपरिमाणसम्भवात। तेन

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत॥ इति।

मनुवचनानुगतानाम् एकद्वित्रिवेदाध्यायिनां ग्रहणशक्त्यनुसारेण ब्रह्मचर्यकालविभागो विधेयः। 'ग्रहणान्तिकमेव वे'त्यनेन च ब्रह्मचर्याश्रमकालस्यानियतत्वमुक्तम्। यतोऽत्र यावद् वेदग्रहणं भवेत तावदेव ब्रह्मचर्यमनुष्ठेयमित्यर्थोऽभिहितः। तेन छान्दोग्योपनिषत्सु षष्ठप्रपाठके "स ह द्वादश-

वर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य" इत्यादिश्रुतौ श्वेतकेतोर्द्वादशवर्षाण्यध्ययनकालो निर्दिष्टः। द्वितीयमायुषो भागं कृतदारो गृहे वसे"-दित्यनेनापि नायुषो द्वितीयभागस्य निर्दिष्टः कालोऽभिहितः—

गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥

इति वचनेन तस्य नियतकालनिर्देशात्। वार्द्धक्यप्रारम्भ एव वनमाश्रयितव्यमित्येतदेवास्य वचनस्य तात्पर्यम्।

अत एव वानप्रस्थाश्रमस्यापि न नियतः कालो मन्तव्यः। "सप्तत्या ऊर्द्ध्वं संन्यासमुपदिशन्ति। वानप्रस्थस्य वा कर्मविरामे" इत्यनेन सूत्रद्वयेन वानप्रस्थस्य पञ्चसप्ततिवर्षात्मकनियतकालस्य बौधायनेन निरासात्। एतेन

आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः।
भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्द्धते॥

इत्यनेन वचनेन मनुबौधायनाभ्याम् आश्रमक्रमोऽभिहितः। तेनाश्रम-चतुष्कक्रमपरिहारेण स्वेच्छया यस्य कस्यचिदाश्रमस्य परिग्रहस्तु निषिद्ध एवेति ज्ञेयम्। परन्तु यस्मात् कस्माच्चिदाश्रमात् प्रव्रज्याश्रमो ग्रहीतुं शक्य एव विरक्तेन, "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा; यदहरेव विरजेत् तदहरेव प्रव्रजे" दिति श्रुतेः।

तत्र चत्वार आश्रमा ब्राह्मणस्यैव, क्षत्रियादीनां पारिव्रज्याश्रमनिषेधात्। तथा च लघुविष्णुः

आश्रमास्तु त्रयः प्रोक्ता वैश्य-राजन्ययोस्तथा।
पारिव्राज्याश्रमप्राप्तिर्ब्राह्मणस्यैव चोदिता॥ इति।

श्रुतिश्चात्र यथा—"ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यञ्चरन्तीति।" भिक्षाचर्यञ्चरन्तीति संन्यासमवलम्बेरन्नित्यर्थः। पुराणेऽपि

मुखजानामयं धर्मो यद् विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥ इति ।

अत एव श्रीमद्भगवद्गीतासु "कर्मणैव हि संसिद्धिमास्थिता जनकादय" इत्युपदिष्टं भगवताऽर्जुनाय । अत्र पूर्वाश्रमत्रयस्यानुष्ठानरूपत्वात् प्रव्रज्यायाः पुनः कर्मत्यागरूपत्वादेवैतादृगुपदेशः । एतेन क्षत्रियस्य पूर्वाश्रमत्रयविहित-कर्मानुष्ठानेनैव चतुर्थाश्रमग्रहणफलसिद्धिरिति व्यवस्थितम् । तथा च तत्रैव—

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ इति ।

परं मोक्षम् । वैश्यानान्तु "आश्रमास्तु त्रयः प्रोक्ता वैश्य-राजन्ययोस्तथे"-त्यादिलघुविष्णुवचनात् त्रयो निर्दिष्टाः । बौधायनेन पुनः "चत्वार आश्रमा ब्राह्मणस्य, त्रयो राजन्यस्य, द्वौ वैश्यस्ये"त्यादिसूत्रेण तथा योगियाज्ञ-वल्क्येन च—

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिदेशिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्य-शूद्रयोः ॥

इति वचनेन च तस्याऽऽश्रमद्वयं विहितम् । पौराणिका अपि,

चत्वार आश्रमाश्चैव ब्राह्मणस्य प्रकीर्त्तिताः ।
गार्हस्थ्यं ब्रह्मचर्यञ्च वानप्रस्थञ्च भिक्षुकम् ॥
गार्हस्थ्यं ब्रह्मचर्यञ्च वाणप्रस्थं त्रयो मताः ।
क्षत्रियस्यापि कथिता आश्रमास्त्रय एव हि ॥
ब्रह्मचर्यञ्च गार्हस्थ्यम् आश्रमद्वितयं विशः ।
गार्हस्थ्यमुचितन्त्वेकं शूद्रस्य क्षणमाचरेत् ॥

इत्येतैर्वचनैर्वैश्यस्याश्रमद्वयमेवाभिहितवन्तः । तेन वैश्यस्याश्रमस्य द्वित्वे त्रित्वे वेच्छाविकल्प एव साधीयान् । शूद्रस्योपनयनसंस्काराभावाद् ब्रह्मचर्य-वानप्रस्थयोः पुनरग्निवेदमात्रसाध्यत्वान्निरग्निकगार्हस्थ्याश्रम एक एव विहितः । प्रव्रज्याश्रमे त्वस्य कैमुतिकन्यायेन नैवाधिकार इति ध्येयम् । कलौ तु—

यज्ञाधानं गवालम्भं संन्यासं पलपैत्रिकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति पराशरवचनेन ब्राह्मणानामपि चतुर्थाश्रमाभाव एव निर्णीतः तत्रापि यदि कश्चिदत्यन्तविरक्ततया प्रभूतकष्टसाध्यमपि संन्यासमवलम्बेत न तत्र निषेधावकाशः शङ्करभगवत्पाद-पद्मपादादिषु तथा दर्शनात् । अत एव विशेषमाह देवलो यथा—

यावद् वर्णविभागोऽस्ति यावद् वेदः प्रवर्त्तते ।
संन्यासश्चाग्निहोत्रञ्च तावत् कुर्यात् कलौ युगे ॥ इति ।

निषेधस्तूपासनापरायणानां कर्मवतामेव, तेनैव तेषां परमार्थसिद्धेः । संन्यासाश्रमस्यातिकृच्छ्रसाध्यत्वात्, कलौ पुनर्ब्राह्मणानामपि सहज-दौर्बल्याच्चेति ज्ञेयम् । त्यागधर्मस्तु गृहस्थब्रह्मचारिणामपि सम्भवात् सर्व-युगसर्व-वर्णसाधारणः तेन कलौ लिङ्गधारणस्यैव निषेध इति ध्येयम् ।

आश्रमहीनानां निन्दां प्रायश्चित्तार्हताञ्चाह दक्षो यथा—

अनाश्रमी न तिष्ठेच्च क्षणमात्रमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥
जपे होमे तथा दाने स्वाध्याये च रतः सदा ।
नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः ॥ इति ।

आश्रमिणां तटस्थलक्षणमाह स एव यथा—

मेखलाजिनदण्डैश्च ब्रह्मचारीति लक्ष्यते ।
गृहस्थो वेद-यज्ञाद्यैर्नख-लोमैर्वनाश्रमी ॥
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक् ।
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ॥ इति ।

गृहस्थस्तु पुत्रदारादिभिरेव नाश्रमी भवेत् परन्त्वाश्रमोचिताचारपालनादेव । तथा चाह दक्ष एव यथा—

गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत् ।
तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितः ॥ इति ।

वृद्धहारीतोऽप्याह यथा—

गृहस्थो वा वनस्थो वा यतिर्वापि भवेद् द्विजः ।
अनाश्रमी न तिष्ठेत यावज्जीवं द्विजोत्तमः ॥ इति ।

अथ चेत् साग्निकस्य गृहस्थस्य पत्नी म्रियेत तदा कुशमयीं पत्नीं प्रतिनिधित्वेन परिकल्प्य स्वाश्रमविहितकर्माणि कुर्यात् । तथा चाह स एव यथा—

दग्धव्या साऽग्निहोत्रेण भर्तुः पूर्वं मृता तु या ।
स्वांशमग्निं समादाय भर्ता पूर्ववदाचरेत् ॥
कृत्वा कुशमयीं पत्नीं यावज्जीवमतन्द्रितः ।
जुहुयादग्निहोत्रन्तु पञ्चयज्ञादिकं तथा ॥ इति ।

अत्र तु "सस्त्रीको धर्ममाचरेदि"ति विधानमेव कुशमयपत्नीप्रतिनिधिकरणे प्रमाणम् । अतः परमेव "अथ च प्रव्रजेद् विद्वान् कन्यां वापि समुद्वहे"दित्युक्तेः ।

गोभिलश्चाह यथा—

दाहयित्वाऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम् ।
पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः ॥ इति ।

अत्राग्निभिरिति बहुवचनात् 'साग्निको गार्हपत्यादिभिरि'त्यर्थो लभ्यते । यदि भार्याया अलाभः स्यात् तदा तत्प्रतिनिधिनापि स्वकर्मानुतिष्ठेदित्याह स एव यथा—

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनापि तत् कर्म यावज्जीवं समाचरेत् ॥ इति ।

उपाधिना प्रतिनिधिना । अत्रोपाधित्वे निदर्शनमाह गोभिल एव यथा—

रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् ।
ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरर्चितैः ॥ इति ।

अथ ब्रह्मचारिधर्मः ।

ब्रह्मचर्यन्तु व्रताचरणम् । ब्रह्म वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म,

तच्चरतीति ब्रह्मचारीति निर्वचनात्। तथाच "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः। तच्च व्रतमुपनयनसंस्कारमपेक्षते ततः प्राग् वेदव्रतादीनामनधिकारात्। तथाच दक्षः—

जातमात्रः शिशुस्तावद् यावदष्टौ समा वयः।
स हि गर्भसमो ज्ञेयो जातिमात्रप्रदर्शकः॥
भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथाऽनृते।
अस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते॥
उपनीते तु दोषोऽस्ति क्रियमाणैर्विगर्हितैः।
अप्राप्तव्यवहारोऽसौ बालः षोडशवार्षिकः॥
स्वीकरोति यदा वेदं धत्ते वेदव्रतानि च।
ब्रह्मचारी भवेत्तावदूर्द्ध्वं स्नातो गृही भवेत्॥ इति।

उपनयनकालश्च मुख्यगौणभेदाद् द्विविधम्। तथाच मनुः—

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥

(क्रमशः)

---

# श्रीश्रीअद्वैतचरितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीहरदासवसुः भक्तिसागरः ]

[ यौवन-लीला ]

श्रीअद्वैतः कैशोरे शान्तिपुरं रुचिरमधिष्ठानमकरोत्। तत्र नानाशास्त्र-पारंगमो भूत्वा श्रीनवद्वीप-सारदापीठे विद्यामठप्रतिष्ठानमेकं प्रकटयाञ्चकार। अधुना तस्य शुभपरिणयोऽनुष्ठीयते स्म। स द्वयोर्ब्राह्मणकन्यकयोः पाणिग्रहणं चकार। प्रथमा भार्या नाम्ना सीता, द्वितीया च नाम्ना श्रीः।

महीयसः पुत्रस्य मङ्गलसुखदेन महिम्ना मधुरिम्णा च चिरमाप्यायितौ मातापितरौ परिणते वयसि एकैकश उपरेमाते। मातापित्रोः स्वर्गतयो-रद्वैतः स्वगृहस्याध्यक्षोऽभूत्। इदानीं स सस्त्रीकः कदाचिद् नवद्वीपे कदाचिद्वा शान्तिपुरे वसन्नुभे धामनी पादस्पर्शदानेन पवित्रयति। एवमुभयत्र सरस्वतीविनोदनेन भगवद्भक्तिप्रचारेण च जनसमाजं जागरयति। जीवानामीदृशं भागधेयं तस्य सङ्गप्रभावेण प्रथममेव सूचितम्। अधुना स वेदपञ्चाननमहाशयो नवीनोऽपि प्रवीणोऽध्यापक इति सर्वत्र ख्यातो गण्यते मान्यते च। "हरिणा अद्वैतात्"—यो हरेर्न पृथक् स कीदृक्? मानुषमूर्तौ स वा कीदृगिति सर्वे चिन्तयन्तु, विभाव्य निश्चिन्वन्तु च। जीवानां सौभाग्यलक्ष्मीर्नेदीयसी। अद्वैतचन्द्रस्य सुधामुचा वक्त्रेन्दुना धामद्वयमालोकितमिव इदानीं शोभते, तस्य चरणस्पर्शेन सोल्लासं नृत्यति, तस्य अमृतदृष्ट्या स्निग्धीभूय हसति। तस्मिन् पूर्वताऽपि अधिकतरं तरुलतासु मुकुलानि उद्गम्य पुष्प्यन्ति।

मानुषरूप एष उत्तमो मानुषो वैष्णवो वा विज्ञायते। किन्तु तत्त्वतः शक्तितश्च स सर्वमेव कर्तुं समर्थ इति देवीप्रणामप्रसङ्गेन प्रमाण्यते स्म।

सर्वमेव य ईष्टे स ईश्वरः, प्रभवतीति प्रभुरित्यनेन अस्य नररूपधारिणो देवस्य प्रभुत्वं प्रतिपाद्यते। अत एव एष प्रभुरेव। श्रीमदद्वैतप्रभौ मणिकाञ्चनयोर्योगः सम्यग् दृश्यते—नारायणतो ब्रह्मा, ब्रह्मणोऽङ्गिराः तस्माद्देवगुरुर्बृहस्पतिः, ततो गोत्रप्रवर्तको भरद्वाजस्तस्माद् द्रोणो जातः। एवं तस्मिन नारायणवंशे अद्वैतप्रभोराविर्भावः सिद्धः। अतः स गोत्रतस्तत्त्वत उभयतो नारायणतोऽभिन्नः—वंशपरम्परया यथा स नारायणवंशोद्भवः परमार्थतोऽपि स नारायणसम्प्रदायी—नारायणस्य शिष्यो ब्रह्मा, ब्रह्मणः शिष्यो नारदः, नारदस्य शिष्यो व्यासः, व्यासस्य शिष्यः शुकदेवः। अनेन शिष्यानुक्रमेण लक्ष्मीपतिरागतः। तस्य शिष्यः प्रेममयः श्रीमाधवेन्द्रपुरी। तस्य शिष्यः श्रीप्रभुरद्वैतचन्द्रः। भगवत्प्रेमणः परिपूर्णधारा धरायां याऽपतत् सा भारतवर्षे कुण्डं निर्माय विद्यमानासीत्। श्रीपुरीमाधवेन्द्र एव स साक्षात् कुण्डः। श्रीअद्वैताविर्भावेन सह तस्य कुण्डस्य उद्वेलताऽभूदित्यनुमीयते। अतः स उद्वेलतया पथि पथि कृपादृष्टिवृष्टिं कुर्वन्नवशेषे वङ्गदेशं प्रत्यभियानमकरोत्। अद्वैतचन्द्रस्य भक्तिसुधाबीजं स्वतः सिद्धमपि पुरीश्रीमाधवेन्द्रो निजप्रेमामृतफुत्कारवारिणाभ्यसिञ्चत्। लोकशिक्षार्थं गुरूकरणरूपां मुद्रामभिनयन पुरीमहाशयोऽद्वैतप्रभावे प्रेमसम्बन्धमाधुर्यं प्रतिपेदे। शिवो नारायणेन दीक्षित इव प्रतिभाति। शीतांशोरपि शीतलः शिवपुरुषः शुभ्रोऽपि प्रेमरसेन कनकाब्जकान्तकान्तिः शान्तिपुराधीश्वरः सीतानाथः स्वयं वैष्णवशिरोमणिरिति वैष्णवगोष्ठ्या नेतृत्वं प्राप।

[ वैष्णवसभा-संघटनम् ]

श्रीवास-हरिदास-मुकुन्द-मुरारि-श्रीरामरत्नगर्भप्रभृतिभिर्वैष्णवैर्मिलित्वा श्रीनवद्वीपे श्रीअद्वैतप्रभुः शुभेऽहनि एकां धर्मसमितिं प्रतिष्ठापयामास। तत्र तैः प्रत्यहं भक्तिशास्त्राणां संलापश्चर्चा च क्रियेते। कियता कालेन अयमद्वैतप्रतिष्ठितः सभा-सरोवरः श्रीवासाङ्गनक्षेत्रमाप्राव्य समुद्रमूर्तिं दधन्नरीनृत्यते स्म। श्रीनवद्वीपस्तदानीं सरस्वती-पीठस्थली भूत्वा सुन्दरं बभौ। परन्तु पराविद्यावल्लर्याः पुष्पमधु या भक्तिस्तस्या अमृतफलं यः

प्रेमा तयोस्तत्र गन्धलेशोऽपि नाविद्यत। मधुहीनं विकसितकमलं यथा तादृशी तदानीं नवद्वीपस्य विद्या-शोभा—केवलं नेत्रानन्दिनी न तु प्राणोन्मादिनी। अस्ति प्रभा, नास्ति मधुरिमा—वदनमण्डलमतिसुन्दरं परन्तु स्मितज्योत्स्ना-शून्यम्। विद्या-धेनुर्न सूते, न दुग्धदा। तदानीं नवद्वीपे रूपगुणवती विद्या-जननी बहून् सुपुत्रान् असूयत, किन्तु तस्यास्तनयोर्दुग्धं न चक्षार।

मणिद्युतिर्नेत्रे शीतलयति, विद्युद्द्युतिस्ते दहति। कलिदोषेण विद्या विद्युल्लतासदृशी पण्डितानपि अन्धयति, तथाविधा विद्या-व्रतती वन्ध्या सती फलपुष्पादीनि, नोत्पादयति परं विभवगौरवगर्वकीटदष्टा सती विषाक्तगन्धमुद्गीर्य तत्रत्यं मानवसमाजम् अप्रकृतिस्थं विदधाति। फलवत्या विद्याश्रियो दीप्तिः स्फटिकमणिकिरणवत् स्निग्धशीतला। अद्वैतचन्द्रस्य विद्यामठी मणिदीप्तिं विकिरन् आस्ते। विद्युत्स्फुरणेन सह घनघोरगर्जनं घटते। किन्तु मणिकिरणो निभृतं स्फुरति—न शब्दायते न कलकलायते च। तत्र मठे भक्तिचर्चा गुप्तं जयति। "अहं विद्यानिति" प्रचारयितुं तेषामद्वैतादीनां कतमोऽपि नेहते। अद्वैतगोष्ठ्याः क्रियाकलापेऽभिनवत्वं प्रत्यक्षेणावलोक्य पण्डितम्मन्याः सर्वे नगरवासिनः कुतुकिनः कौतूहलमपनेतुमुद्ग्रीवाः। ते मुदा पविषदं पृच्छन्ति उपहसन्ति च।

भक्तिः कीदृशं वस्तु?—सा भगवत्पादपद्मस्य मधु। एतेन मधुना अभिषिक्ता या चित्तवृत्तिः सापि भक्तिरुच्यते। अत एव भक्तजनो भगवत्स्मरणेन प्रसीदन्ति। स मणिवत् शीतलं दीप्यति। तं सहसा सर्वे परिचेतुं न पारयन्ति। वैष्णवपरिषदं भङ्क्तुकामा "एते पारिषदा मूर्खा" इति मन्यमानास्तेषां सौभाग्यमसहमाना अपरे ज्ञानदृप्ताः पण्डिता यथावकाशं तान् बहुना प्रकारेण पीडयितुमारेभिरे। पीडितास्ते किं करिष्यन्ति?—"बालकानां रोदनमेव वलम्"। करुणं ते रुदन्ति, श्रीभगवच्चरणे दुःखं विज्ञापयन्ति। गङ्गावक्षसि विलासिजनानां नौविहारः केवलं क्षेपणीभिः प्रहाराय। केवलं तलेन प्रहारम् अर्द्धचन्द्रदानञ्च विना

सर्वमेव तैः पण्डितम्मन्यैर्ब्राह्मणैरधायि। श्रीअद्वैतः सर्वैः पण्डितशिरोमणिभिर्मानुषधिया अवज्ञायते स्म। ईदृशी धर्मस्य ग्लानिरभूत्।

यदि हरेर्नाम अन्तरात्मना गीयते, यदि हरिः प्राणकोटरादाहूयते, स तद्विज्ञप्तिमङ्गीकरोति। परमदयालुः परमेश्वर आर्त्तजनानामार्त्तिपूर्णं निवेदनं शृणोति। परैः पीडिता जना आर्त्तिं लभन्ते। अतः पीडनं पात्रस्य कल्याणाय कल्पते। खिन्ननिर्विण्णचित्ताद् भगवत्प्रपन्नता सम्यक् स्फुरति। भगवत्करुणालक्षणमिति यत् दुर्नीतजनगणघनात् दुर्निवार-दुराचरण-वज्रवृष्टिरद्वैतशिरसि पतति। समग्रस्य देशस्य लोकाः कलिकलुषिता भगवद्भावविहीनाः शुष्कनीरसा दारुणदारुणाश्च। श्रीअद्वैतप्रभुर्जीवदुःखदर्शनाद् दयार्द्रोऽभूत्। तस्य करुणासञ्चारेण अथ जीवकल्याणकल्पवीजः करम्बितोऽभूत्। तदङ्कुरात् परमो वृक्षोऽजायत। स बहुलतिको बहुशाखश्च भारतभूमेरुपरि विशालं चन्द्रातपं विरचय्य आस्ते।

यः शङ्करः पुरा काञ्चनमपिधाय काचं ददौ, अर्थाद् भक्तिमाच्छाद्य केवलं मायावादं प्रचारयामास, अधुना स एव पुनर्मायावादरूपं काचं विनिन्द्य भक्तिकाञ्चनस्य द्रवरसं प्रदातुमुत्सहते। भगवतो लीलाया अन्तं गन्तुं कः समर्थः! भगवतश्चिन्मयविग्रहं यो न स्वीचकार स इदानीं पुनरद्वैतमूर्तिं धृत्वा तस्य चिन्मयविग्रहस्य स्वरूपं निर्णीय तदुपरि परमभागवतधर्मस्य चिन्मणिमयीं प्रतिमां प्रतिष्ठापयितुं पर्याप्तं दीव्यति अत्र श्रीनवद्वीपे।

वैष्णवपरिषद् रोदनपरा सततमाक्षिपति। एकदा वैष्णवाः सर्वे निर्विण्णमनसः श्रीअद्वैतमवदन्, "भोः प्रभो! अस्माकमत्र न स्थातव्यम्। वहिरङ्गसङ्गः परिहातुं साम्प्रतम्। विशेषतो लोका अत्र परमेश्वरं निन्दन्तीति वयं सोढुं न शक्नुमः"। तदाकर्ण्य अद्वैतेनाभ्यधायि— "हे बन्धुगण! मा भैषीः, कियन्तं कालमित्थं नय,—अपेक्षस्व। अस्माकं दुःखं दूरीकर्त्तुं पतितानां जीवानां दयितुं करुणादाने अकृपणः कृष्णोऽवश्य-

मेवागमिष्यति। धर्मस्य ग्लानिः कर्मणां म्लानिश्च तस्य आसनं चालयति। तदा स लम्बित्वा श्रीपदस्पर्शदानेन धरणीं पुनाति, नेत्राम्बुजमधुना तां स्नपयित्वा आनन्दं मथ्नाति, स्मितज्योत्स्नया पाप-तमोराशिमपनयति। आर्तजनबन्धुं करुणासिन्धुं तम् अवतारयितुं यदि नाहं शक्नुयाम् तदा 'अद्वैत' इत्यभिधानं हि परित्यक्ष्यामि। अतो निश्चिन्तम् अवतिष्ठन्तु। भवन्तः सर्व एवं प्रार्थयन्तां चाहर्निशम्। अवश्यमेव कृष्णो दयिष्यते। चित्तवैक्लव्येन उत्साहभङ्गं मम मा कार्षुः। सर्वे प्रफुल्लचित्तास्तिष्ठन्तु। अचिरेणैव जगतः पुञ्जीभूतो दुःखराशिर्भस्मीभविष्यति" इति।

तदुदीरितां मधुराम् आश्वासगिरं निशम्य ते पारिषदा ऊचुः—"प्रभोः श्रीमुखान्निःसृता वाणी अवश्यमेव न वितथीभविष्यतीति"। ते प्रत्येकं स्वं स्वं चित्तं प्रबोध्य सभां कृत्वा पुनः शास्त्रालापरसनिमग्ना अभवन्। एवं कुर्वद्भिस्तैः कति दिनानि नीयन्ते। अद्वैतप्रभावमजानद्भिः कैश्चिदपरैस्ते परिहस्यन्ते च।

## ( प्रौढलीला )

अधुना सीतानाथः श्रीअद्वैतप्रभुः प्रौढावस्थः। तस्य सागरगम्भीरं हृदयं न लक्ष्यभ्रष्टम्। स यथोक्तं करिष्यति। किमिति ?—ततः प्रभृति प्रभुर्न भोजनचेष्टामपि करोति, केवलं भूतले लुठति, अश्रूणि वर्षति। केनापि पृष्टोऽपि मूकवत् तूष्णीं समन्तादीक्षते। प्रगे प्राह्णे सायञ्चोत्थाय श्रीभगवन्तमुद्दिश्य बद्धाञ्जलिर्निवेदयति दुःखदूनं हृदयम्। जीवदुःखाद्वैष्णवानां हाहाकारस्तस्य चेतसि लग्नस्तस्य प्रभोर्भावोद्वेलतां वितनुते। बन्धूनां हाहाकारं स्मारं स्मारं स विषीदति। हाहाकारजातव्यथस्य तस्य हुङ्कार ओङ्कारं भित्त्वा गोलोकमभि उत्तिष्ठति। तस्य हुङ्कारशब्देन जगत् कम्पते, वियत् स्फुटति सुरलोकः पुलकं वितनुते।

अद्वैतः समुद्र इव। समुद्रे शङ्खा वसन्ति, रत्नानि च। नादः

शङ्खस्य एकनमो गुणोऽस्ति। स तस्मात् ओङ्कार-शङ्खात हुङ्कारेण उद्-गच्छति। भावकमलखण्डं रत्नवत् तस्मिन जलनिधौ प्लवमानं भासते। नेत्रद्वयं सूर्याचन्द्रमसाविव विभाति। अन्तर्योगवशादेकदा प्रभोरोङ्कारात चैतन्यविग्रहं क्रोडीकृत्य अनन्तदेवः प्रकाशमानोऽभूत्। श्रीअद्वैतप्रभु-र्मुहुर्मुहुर्व्योमपतत्। विपुलपुलकाञ्चितं वपुस्तस्य तदा भृशमकम्पत। शतशः स्वेदधारा अवहत्। सा अलिन्दकुट्टिममधावत्। प्रभोरेतल्लीलालास्यं वीक्ष्य विमुग्धाः प्रतिवेशिनः पारिषदाश्च सर्वे सुखिता अद्यप्रभृति ईश्वरधिया तं सम्पूजयन्ति। किन्तु विद्यामदेन ये वल्गन्ति ते न तथा कुर्वन्ति वरं तस्य चेष्टादिकम् उपहासेनाभिनयन्ति। एष स्वप्नः फलिष्यति न किम् ?

अनन्तरं प्रभुः संज्ञां लब्ध्वा भक्तिरसेन विगलितचित्तस्ततः प्रभृति प्रतिदिनमेव गङ्गोदकतुलसीदलदानेन विष्णुदैवतं पूजयति। गद्गदिकया रुद्धकण्ठोऽपि विष्णुं सजलनेत्रः स्तौति। जीवानां भक्तिराहित्यजनितां दुर्गतिं तस्मै निवेदयति च।

महाविष्णुः स श्रीअद्वैतचन्द्रः एवं प्रतिज्ञामकरोत—"दुःखनिमज्जिते अस्मिन जगति विशुद्धप्रेमरसोर्मिवलितां भक्तिगङ्गां प्रवाह्य जीवसङ्घरूपं सगरवंशमुद्धरिष्यामि। मरुमूर्तौ मर्त्यभारते मन्दाकिनीधारामवतार्य निर्मल-सुखं विधास्यामि" इति। उपायः कोऽत्रावलम्ब्यते इति च तेन प्रभुणा विचिन्तितम्—स्वयं श्रीभगवान् कृष्णचन्द्रो यथा अवतरेत तथानुष्ठेयमत्र विषये। सोऽवतीर्य सङ्कीर्तनविधानेन नर्तित्वा भारतभूमिं निजपदधूलि-मयीं करिष्यति। भारतरजांसि प्रत्येकं सत्यधर्मस्य मधुकिरणच्छटां विकीर्य भारतवक्ष उज्ज्वलीकरिष्यति। तण्डुलकदलीसन्देशनैवेद्यदानेन देवता न तुष्यति, वस्तुतो भक्तितस्तुष्यति। "भक्तिमिच्छन्ति देवताः"। अन्तरात्मना आहूतः स आगच्छति। स भक्तिवश्यो भक्तवत्सल इत्येवं निश्चित्य शिवपुरुषः सोऽद्वैतचन्द्रो विशुद्धभावोज्ज्वलां पूजापद्धतिं जनसमाजे प्रचारयितुकामो गङ्गातुलस्योर्भक्तिं निवेश्य तां कृष्णचरणयोरर्पयति। तथैवार्चितः कृष्णः करुणारसेन विगलितोऽभूत।

नैमिषारण्यपरिशोभिसभाभङ्गात् परं नवद्वीपस्येयं वैष्णवी सभा परमम् आयोजिता। अस्याः सभायाः सभ्या हरिदासमुरारिमुकुन्द-प्रभृतयो जगद्वरेण्या कृष्णदासाः। शान्तिपुरनाथः श्रीअद्वैतप्रभुस्तस्याः पतिः। अहो, तस्यां परिषदि श्रीकृष्णः साक्षाद्विराजति न किम् ?

---

# दैवाष्टकम्

[ निबन्धकः—श्रीदीनेशचन्द्र-शास्त्री ]

यच्चक्रनेमिपरिवर्त्तनभीतिभीताः
श्रीमत्सुरेन्द्र-सुनरेन्द्रसदिन्द्रचन्द्राः ।
सञ्चिन्तयन्त्यविरतं सुखमप्यवाप्य
दैवाय तद् भगवतेऽस्तु नमः सदैव ॥ १ ॥

यत्पारवश्यकलनात्सकलेश्वरोऽपि
विश्वम्भरोऽपि न सुखं समुपैति सम्यक् ।
तल्पप्रकल्पनधियाऽऽश्रयदेष शेषं
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ २ ॥

यस्य प्रभावबलतः किल शंकरोऽपि
मृत्युञ्जयोऽपि विकरालकपालमेव ।
बिभ्रत्तमोगुणवशेन लयं करोति
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ ३ ॥

यस्यानुशासनमुपेत्य भयातुरोऽसौ
ब्रह्माऽपि सर्जनविधौ विनियोजितात्मा ।
रात्रिन्दिवं नहि मनागपि शान्तिमेति
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ ४ ॥

यच्छासनादनिशमेव समाकुलत्व-
माप्त्वा न याति विरतिङ्गतिसन्निविष्टः ।
भास्वानुदेति समयेऽस्तमुपैति चैवं
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ ५ ॥

शोकापनोदकतमोऽपि विनोदकोऽपि
चन्द्रः क्षयार्त्तिमलिनोऽपि तमो निहन्ति।
यन्नीतिभीतिवशतो न विरोद्धुमीष्टे
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ ६ ॥

यस्यानुकूल्यविरहादतिमानवोऽपि
देवान्तराणि मघवत्प्रमुखाण्युपास्य ।
साध्यान्तमेव यतते लभते न चेष्टं
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ ७ ॥

शत्रूञ्जयन् सुखमुपेतमुपैति मित्रं
पुत्रं कलत्रमितराणि च साधनानि ।
आप्नोति यत्प्रबलतामुपगत्य लोको
दैवाय तद्भगवतेऽस्तु नमः सदैव ॥ ८ ॥

———

# प्रशान्तरत्नाकरम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

व्यापारेण। तदिमं निगडितकरचरणमस्मिन्नेव मद्भवनसन्निहिते न्यग्रोधपादपे बधान, परिश्रान्ता यूयं, अवसिता च मे प्रायेणाद्यतनी निद्रा, तद् यावदहं स्वयमेव निशावसानं यावत् एनं प्रतिपालयामि। अवसितायाश्च निशायाम् अस्यैव सन्तप्तेन कण्ठशोणितेन रक्तचन्दनीकृतेन प्रोद्यतः सूर्यस्य अर्घ्यं कल्पयित्वा सुतरां तृप्तो भविष्यामि।

रत्ना—अहो सुतरामनुगृहीतोऽस्मि तातेन। तद् वयस्य, वीरबल, अलमद्यापि कालक्षेपेण, एहि यावदकालहीनं तातादेशमनुतिष्ठावः। तद् गृह्यतामयम्। अहमनुपदमागच्छामि।

वीर—एवमस्तु ( राजानं विसंज्ञं गृहीत्वा निष्क्रान्तः )।

रत्ना—अहो सुतरां प्रवृद्धा रजनी ! तथाहि—

यामात् परं समुदितो विधुरम्बरस्य
मध्यं गतः किरति चारुकरोपहारम्।
निस्तब्धतामिह भुवो विहगाः कदाचिद्
भिन्दन्ति हिंस्रपशवोऽपि रुतैः समन्तात्॥

( ततः प्रविशति गायन्ती सुमतिः )

गीतम्

एहि दयित भवनं निजमेहि दयित सत्वरम्
दूरे वद विहरिष्यसि विकलः कतिवासरम्।
तिमिरात् परमेष नभसि रुचिमञ्चति चन्द्रमाः
तव कथमिव हृदयं नहि सुविमलरुचिभास्वरम्॥

परिहर परवासकलुषमेहि निजनिकेतनम्
शून्यं प्रिय समलङ्कुरु रुचिरं निजमन्दिरम् ।

( निष्क्रान्ता )

रत्ना—अहो हृदयस्पर्शि सङ्गीतम् ! स्ववासमपहाय परवासे कलुषमग्नं प्रत्युपदेशः । तत् का नु खल्वेषा ? को वासौ प्रोषितो नाम ? अथवा किं ममानेन अप्रस्तुतेन, यावदिदानीं प्रकृतं पश्यामि ( निष्क्रान्तः ) ।

———

## अष्टमाङ्कः

( ततः प्रविशति पादपस्कन्धे रज्जुबद्धः कामेश्वरः )

कामेश्वरः—( स्वगतम् ) हा कष्टम् ।

योऽहं पुरा नरपतिः शतशः सदोषान्
सम्प्रापयं गुरुकदण्डशतं क्षणेन ।
सोऽहं दुरुत्तरकृतान्तवशात् प्रपन्नो
बन्धं कृतान्तवदनं परिलोकयामि ।

अहो दुरन्तशीलस्य रत्नाकरस्य कृत्यसीमा !

लीलावतीं कुसुमकोमलकायकान्तिं
मुक्तिं सपादपतनं बत भिक्षमाणाम् ।
क्रूरो जघान यदसौ परिपश्यतो मे
तत्तीक्ष्णशल्यसदृशं रुजमातनोति ॥

हा प्रिये, लीलावति, नाहं तावद्भिः सप्रहरणैः सैनिकैः सहितः परिपश्यन्नपि ते तथाविधां विपत्तिं प्रतिकर्त्तुं समर्थोऽस्मि । हा हा ! मृताः सर्व एव ते सैनिकाः परिजनाश्च तस्यैव क्रूरकर्मणो निष्ठुर-व्यवसायेन । अहह !

प्राणैः परैः प्रभुहिताय कृतप्रयत्ना
हन्तासुरेण निहताः स्वजना मदीयाः ।

एतावतैव न हि निर्वृतिरस्य जाता
पुत्रादिकेष्वपि महद् विषमं कृतं यत् ॥

हा पुत्रकाः ! हा प्रधानामात्य, हा सेनापते, दूषिताः स्थ परिभूताः स्थ कामेश्वरहतकेन । तथाहि—

मत्सम्बन्धवशादेव भवतामेव संक्षयः ।
अन्यस्यामपि जातौ मा मत्सम्बन्धमुपैष्यथ ॥

हा वत्स देवरात, हा प्रवरकुमार, हा मदङ्कदुर्ललित, हा राजकुलप्रधानालम्ब, न जाने एतावत्या रजन्या कीदृशीमवस्थां प्रापितोऽसि । हा हा !

दष्टोऽसि किं भुजगभावमुपागतेन
मूलेन शत्रुनिहितेन निशि प्रसुप्तः ।
मां दुर्भगं स्मरसि किं प्रतिकारहेतो-
र्वत्स प्रयाम्ययमहं क्षणमेधि शान्तः ॥

( गन्तुमुद्यतः स्वीयबन्धनमनुभवन् ) अहह ! बद्धोऽस्मि, वैरिणा रत्नाकरेण कठोरं बद्धोऽस्मि । हा वत्स, देवरात, क्वासि, देहि मे प्रतिवचनम् ( मूर्च्छति ) ।

( ततः प्रविशति सशङ्कमितस्ततः पर्यवेक्षमाणश्च्यवनः )

च्यवनः—निःशेषं प्रसुप्तं रत्नपुरम् । तथाहि—

कोलाहलः शान्तिमगाज्जनाना-
मन्योन्यमालापकृतां क्रमेण ।
न सारमेयोऽपि दधाति रावं
झिल्लीरवाः केवलमुच्चरन्ति ॥

( समीपे सारमेयरावं श्रुत्वा ) अये एष समीपे सारमेयः क्रोशति ! तत् किमनेन कश्चिदागच्छन्नवलोकितः ? हा हा व्याहतक्रियोऽस्मि ! ( अपसृत्य निपुणं दृष्ट्वा ) आः ! समुज्जीवितोऽस्मि । एष सारमेयः काननान्तर-निष्क्रान्तं प्रकाशे चरन्तं शृगालमवलोक्य क्रोशति ! अहो शीघ्रचेतनता सारमेयाणाम् ! तथाहि—

श्वानः क्षणेन निद्रान्ति प्रबुध्यन्ते क्षणेन च ।
नृणान्तु मोहसुप्तानां प्रबोधो न चिरादपि ॥

अत एवाहं प्रियपुत्रस्य रत्नाकरस्य मोहनिबन्धनां दुरन्तवृत्तिमन्यथाकर्तुकामः कामेश्वरसंरक्षणव्याजेन स्वेच्छया स्वजीवनघातं कर्तुं व्यवसितोऽस्मि । वत्स रत्नाकर, वञ्चितोऽसि पितरि दाक्षिण्येन । यतः कामेश्वरसंरक्षण-भारो मयैव गृह्यत इति वचनार्थो न त्वया गृहीतः । हा वत्स, रत्नाकर, चिरात् प्रभृत्येव त्वदीयां दुरन्तवृत्तिं समाशङ्कमानः सुदुःसहेन तापेन ज्वलितः कियद् वा न त्वामुपदिष्टवानस्मि । तावदुपदेशानन्तरमपि अद्य त्वां तादृशे लोकोत्तरे दुर्नये प्रवृत्तमुपलभ्य शतधा छिन्नानि मे मर्माणि । ज्वालामयः प्रतिभाति सकलः संसारः । दुर्वहः प्रतीयते जीवनभारः ! यावदेव चिन्तयामि तावदेव प्रवर्द्धते तीव्रः सन्तापः । तन्नास्ति मम जीवनान्तं विना गतिरन्या । अहह ! सर्वं परिहाय गच्छामि, पुत्रं रत्नाकरं त्वां वत्सलं पौत्रमात्रेयं, आशैशवादभिन्नहृदयां पतिव्रतां पत्नीं प्रियतमां कन्यामिव स्नुषां, स्वेच्छया परिहाय क्वापि गच्छामि । अथवा गन्तव्यम् अवश्यं गन्तव्यम्, आत्मनो जीवनघातेन पुत्रस्य चरित्रं शोधयितव्यम् !

यदि स्नेहान्न मुञ्चेयं जीवनं बन्धुवत्सलः ।
पापेन क्रमवृद्धेन पुत्ररूपः स्वयं हतः ॥

तदनेनात्मनो विनाशेन पुत्ररूपमात्मानं परित्रास्ये । कृतं विलम्बेन । यावत् पादपसमीपं गत्वा कामेश्वरं बन्धनाद् विमोच्य तदीयपाशेनैव वृक्ष-शाखायामात्मानमुद्बध्य व्यापादयेयम् । ( पदान्तरं परिक्रम्य ) अथ रत्नाकरः कथं जानीयाद् यदहं तस्यैव दुरन्तेन शीलेन विदूनो मरणं वृणोमि, नैव कारणान्तरेणेति । हा धिक् सर्वथा व्याहतप्रयोजनो मे संकल्पः ! तत् केनाभ्युपायेन वेदयामि, केन वेदयामि ? ( विचिन्त्य ) आं दृष्टम् ! सर्वमिदं पत्रारूढं कृत्वा स्वसमीहितं साधयामि । क्व नु खलु लेखोपकरणान्यासादयेयम् । ( इतस्ततो दृष्ट्वा ) एष दृश्यते सन्निहिततालीवृक्षान्नातिचिरपतितः पत्रप्रतानसहितः शाखादण्डः, अस्मादेव पत्रमादाय तत्र लिखामि । एतन्-

पत्रान्तरालवर्तिनी शलाकैव लेखनी भविष्यति। अथ क्व नु खलु मसी-मासादयामि, धिक् कष्टम्! सर्वोपकरणसम्भृतस्यापि मसीं विना कृत्य-व्याकोपः! तत् किमिदानीं करिष्ये? (विचिन्त्य) आं दृष्टम्! सुष्ठु दृष्टम्!!

कण्टकेन विनिःसार्य शोणितं स्वशरीरतः।
तेन पत्रं लिखाम्यद्य तनयस्य विशुद्धये॥

तदविलम्बितमेव स्वसमीहितं साधयामि। (पत्रमाहृत्य कण्टकमादाय) एष गृहीतः कण्टकः। इह वृक्षपत्रान्धकारेण समाच्छन्नो भूभागः। तन्नेह शक्यते लेखः। तत् किञ्चिदपसृत्य निर्मलचन्द्रालोके भूमिभागे समुपविश्य लिखामि। (किञ्चित् परिक्रम्य) एष निर्मलचन्द्रकिरणोज्ज्वलो भूभागः, तदिहैव समुपविश्य क्वचित् पत्रे शरीरात् शोणितं निःसार्य धारयामि। (तथा कृत्वा) इदं पत्रे सन्धारितं रक्तम्। तदिदानीं सत्वरं लिखामि। (तथा कृत्वा) एतत् समाप्तं पत्रम्। क्व नु खलु स्थापयामि? (विचिन्त्य) आं दृष्टम्! वस्त्रकोणे ग्रन्थिगतं करोमि। अन्यत्र स्थापितमिदं नीहारस्नप-नादिना नष्टलेखं स्यात् रत्नाकरस्य दृष्टिवाह्यतां वा अश्नुवीत। (तथा कृत्वा) एतत् समाप्तं पूर्वकृत्यम्। अथेदानीं कामेश्वरसमीपमुपसृत्य शेष-मनुतिष्ठामि।

(इतस्ततः पश्यन् सशङ्कमुपसृत्य पेचकरावं श्रुत्वा)

अये अदूरे शब्दः! तत् को नु खल्वेषः? (पुनः श्रुत्वा) आम् एष कौशिकः क्रोशति। (पुनः पक्षिशब्दमाकर्ण्य) अये एष कातरो बालकण्ठः सत्वरं मामभिद्रवति! हा धिक् कष्टं! नूनमेष आत्रेयो मे वत्सः शयने मामसमीक्ष्य विदितमत्सङ्कल्पः समावर्तते। हा धिक् व्यर्थः सर्व एव मे समारम्भः। यद् भवतु तद् भवतु, इह वृक्षान्तरितगात्रः प्रतिपालयामि। (पुनः शब्दमाकर्ण्य) आम् एष विहङ्गमविशेषो बालकण्ठमनुकुर्वन् शब्द-धारां सृजति। अहो धिक्!

पदे पदे काम्यविघातकल्पना स्वबान्धवेभ्यो भयमातनोति मे।
भयेन हीनाः कथमेव तस्कराः परालयं हन्त विशन्ति सम्पदे॥

कामे—अहह! कठिनहृदयोऽस्मि, यदद्यापि जीवामि। हा वत्स, देवरात, क्वासि?

च्यवनः—अये एष कामेश्वरः स्वजनं स्मरन् रोदिति! तदचिरमुपसर्पामि। (उपसृत्य) राजन् कामेश्वर।

कामे—अहो अद्यापि स एव परिहासः! भद्र रत्नाकर, अलमद्यापि राजशब्देन। क्षते क्षारप्रक्षेपः किलैषः। रत्नाकर, अलमलं विलम्बेन, सत्वरं जहि माम्। पश्य—

प्रतिक्षणं पुत्रगताशिवं स्मरन्नुज्ज्वलामि दावानलतेजसाऽक्षमः।
विनाश्य मे जीवनमद्य सत्वरं विधेहि मुक्तिं महतः प्रपीडनात्॥

च्यवनः—अये! राजा कामेश्वरो रत्नाकर इति मामवैति, भवत्वेवं तावत्। (उपसृत्य) राजन् कामेश्वर, मा उच्चैर्भण। नाहं रत्नाकरः, अहं च्यवनोऽस्मि।

कामे—आर्य च्यवन, सुष्ठु रक्षितोऽस्मि। तत् कियान् विलम्बः सूर्योदयस्य?

च्यवनः—अलं सूर्योदयेन।

कामे—तत् किं सूर्योदयात् प्रागेव मां मारयिष्यसि, एवं कुरु, एवं कुरु, एवं किल काम्यते। आर्य च्यवन, प्रसीद, नातः परमपि आत्मानं सन्धारयितुमर्हामि।

च्यवनः—हा धिक् शनैः शनैर्मन्त्रयस्व।

कामे—कथमिव?

च्यवनः—मुक्तिं लप्स्यसे।

कामे—मुक्तिरिति?

च्यवनः—अथकिम्। तदलं वाङ्मयेन, यद् ब्रवीमि तथा क्रियताम्।

कामे—कथयतु आर्यः।

च्यवनः—तिष्ठ । (इतस्ततो दृष्ट्वा कामेश्वरं मोचयित्वा) राजन् कामेश्वर, एष मया मोचितोऽसि, अत्र क्षणमपि मा विलम्बेथाः । एतां दक्षिणां दिशमनुप्रवृत्तां वनलेखामाक्रम्य समीहितं देशं प्रति प्रतिष्ठेथाः । एषा प्रभातप्राया विभावरी । क्षणादूर्ध्वं सोत्साहा रत्नाकरवीरवलप्रमुखास्तस्कराः साहसिकाः समागमिष्यन्ति, एवं किल सुदूरापेता तव मुक्तिर्भविष्यति । तदलं विलम्बेन, शीघ्रं प्रतिष्ठस्व, स्वजीवनाय प्रतिष्ठस्व ।

कामे—अहो व्रीडितोऽस्मि । ईदृशो महात्मा मया दुर्बुद्धिना तदा निगृहीतः ? आर्य च्यवन, एष भवता मोचितो गच्छामि । अभिवन्दे, अनुकम्पया अपराधिनं मां क्षन्तुमर्हसि । एष ते प्रणामाञ्जलिः ।

च्यवनः—अलं विलम्बेन, शीघ्रं गच्छ । विशुद्धेन चारित्र्येण भगवति परमेश्वरे श्रद्धां धारयेथाः ।

कामे—आर्यादेशाद् एवं करिष्यामि । तदेष गच्छामि ।

च्यवनः—गच्छ शीघ्रं, शिवास्ते सन्तु पन्थानः ।

कामे—एष ते भगवन् पादौ शिरसा धारयन्नहम् ।

व्रजामि विपदा मुक्तः पुत्रेभ्यः स्वस्ति दिश्यताम् ॥ (निष्क्रान्तः)

च्यवनः—एवमस्तु देवताप्रसादात् । (नेपथ्याभिमुखं दृष्ट्वा) एष कामेश्वरो द्रवति, एष द्रवति, एष वनलेखां प्रविष्टः, एष दृश्यते, एष दृश्यते, एष न दृश्यते, आः निर्वृतोऽस्मि लब्धजीवितस्तपस्वी निराबाधं गत्वा स्वजनमुखानि पश्यतु । अपि नाम समारम्भेणानेन वृत्तपरिवृत्तिरस्य सम्भाव्येत ? यद्येवं कृतस्तर्हि एकेनैव प्रक्रमेण कृत्यद्वयसम्पादः । यद् भवतु तद् भवतु, अद्यापि महत् कृत्यमवशिष्यते, तदविलम्बितं सम्पाद्य स्वमनोरथं साधयामि । एष पादपः, एषा च बन्धनरज्जुः । तदलं विलम्बेन । यावदमुं वृक्षमारुह्य अनया एव रज्ज्वा कण्ठं बद्ध्वा शेषकृत्यं सम्पादयामि । अये, कथमारोहामि ? (दृष्ट्वा) आम् एषा भूतलपर्यन्तलम्बिनी महती शाखा, एनामाक्रम्य आरोहामि । (तथा कृत्वा) अहो पादपमारूढोऽस्मि । नास्ति पुनरतः परं कृत्यव्याघातभयम् । प्रभातप्राया विभावरी । तथाहि—

सुप्तोत्थितानां बालानां मातृस्तन्यमभीप्सताम् ।
श्रूयते क्रन्दनं वृक्षे विहङ्गानामपि ध्वनिः ॥

तदीदृश्येव काले प्रत्यहमात्रेयो मे मातृशय्यामपहाय मामभिवर्तते । तत् किमद्यापि आयास्यति, अथवा नूनमायास्यति, अथ यद्यसौ दृष्टः स्यात् सर्वं मे हृदयतत्त्वमभिष्यन्देत । तदलं विलम्ब्य, च्यवन, सत्वरं स्वसमीहितं सम्पादयस्व । ( कण्ठं बध्नाति ) नमः सर्वविप्लवकारिणे पुत्रस्नेहाय, नमो भगवते दैवाय ( पतति ) ।

( ततः प्रविशति वीरबलेनानुगम्यमानो रत्नाकरः )

रत्ना—वयस्य, वीरबल, अद्य प्रशान्त इव मे अन्तरात्मा, येन निर्यातितप्रायः पितृशत्रुः । तथाहि—

क्षणात् परं शत्रुशरीररक्तं तृप्तिं पितुर्मे हृदये विदध्यात् ।
जीवन्तमालोक्य पितुः सपत्नं वृथैव सञ्जीवति हीनपुत्रः ।

वीर—( उपसृत्य दृष्ट्वा ) वयस्य, शून्यमिव न्यग्रोधस्कन्धं पश्यामि, यत्र कामेश्वरहतको बद्धः, तत् किन्तु खल्विदम् ?

रत्ना—( विस्मयं रूपयित्वा ) वयस्य, किं कथयसि ? शीघ्रं पश्य, निपुणं पश्य ( सर्वत्र पश्यति ) ।

वीर—वयस्य, न दृश्यते । वयस्य, किन्तु खल्विदम्, इह तातमपि न पश्यामि । तत् किं निशाप्रजागरखिन्नस्तातः सुप्तः स्यात्, तच्चावसरमुपलभ्य शत्रुरपक्रान्तः !

रत्ना—वीरबल, आहूयन्तां शीघ्रं विशालाक्षप्रमुखाः प्रधानपुरुषाः, बलोदग्राः सप्रहरणास्ते सत्वरमिह राशीक्रियन्ताम् । अपक्रान्तः शत्रुः, करतलगतोऽपि हन्त अपक्रान्तः शत्रुः । लज्जया भूमिविवरं प्रवेष्टुमिच्छामि, वीरबल, परिभूताः स्मः, वञ्चिताः स्मः !

( क्रमशः )

---

# ग्रन्थनिकषः

**मञ्जूषा**—संस्कृत-मासिकपत्रिका। श्रीयुक्त-क्षितीश-चन्द्र-चट्टोपाध्याय-शास्त्रि, एम. ए.-सम्पादिता। ८१ नं० श्यामबाजार ष्ट्रीट्, कलिकाता इत्यतः प्रकाशिता। वार्षिकं मूल्यं रूप्यकमात्रम्।

विदितपूर्वा एव मञ्जूषा च तत्-सम्पादकाश्च परिषत्पत्रिकापाठकानामिति तेषां परिचयो नात्यावश्यकः। सैषा मञ्जूषा वर्षद्वयं प्रतिरुद्ध-प्रचारा कुहूरजन्यामिव लुप्तदर्शना शशिलेखा केषां न वा मानसमदूनयत् सहृदयानाम्। एतत्सम्पादकाश्च श्रीमन्तश्चट्टोपाध्यायमहोदया इतः पूर्वं बहून् वत्सरान् परिषत्पत्रिकायाः सम्पादक-पदमलमकुर्वन्नित्यपि नूनं स्मृति-पथमासीदति प्रवृत्तिः प्रियपाठकमहाभागानाम्।

तामिमां मञ्जूषां प्रतिपच्चन्द्रलेखामिव पूर्वतोऽपि सुन्दरतरया सुसमृद्ध्या च परिपाट्या प्रकाशमानामालोक्य परममेव सन्तोषमनुभवामः। प्रति-मासं यथाकालमाविर्भवन्त्यामस्यां पत्रिकायां विविधान्युपदेशरत्नानि, तत्तद्देशानामाभाणकाः, भासकवेः सूक्तिव्याख्या, पाश्चात्त्यानाञ्च कवीनां सुभाषितस्य संस्कृतेनानुवादः, कालिदासादीनां काव्यस्य पाठविचारः, विशेषेण मानसमावर्जयन्ती कृशकाया कथाश्रेणी, इत्येवमादयो विविधा विषयाः सुष्ठु सन्निवेशिताः पाठकानां मानसं तर्पयन्ति। प्रतिमासञ्च आङ्गलभाषामयं लेखं संस्कृतेन परिणमयद्भ्यः पुरस्कारा वितीर्यन्ते। सुन्दरतमे पत्रे नूतनसीसकाक्षरेण मुद्रितायाः पत्रिकाया वार्षिकं मूल्यं मुद्रामात्रमिति लवीय एवेत्यत्र नास्ति संशयः। अनुनयामो वयमस्या-ग्राहकपदग्रहणाय प्रत्येकं संस्कृतपाठार्थिनः संस्कृतरसिकांश्चेति शम्।

श्रीउपेन्द्रमोहन साङ्ख्यतीर्थः

**मोहमुद्गर-मोहकुठारौ**—श्रीमच्छङ्कराचार्य-विरचितौ कविभूषण-श्रीयुक्त पूर्णचन्द्र-दे-काव्यरत्नोद्भटसागर, बि. ए.-महोदयेन संगृह्यानूदितौ। तौ पुनः कलिकातान्तः पाति-त्रिंशत्-संख्यक-कर्णओयालिश्-वर्त्मस्थ-"संस्कृत प्रेस डिपोजिटारी" नामकभवनात् श्रीइन्दुनाथ मुखोपाध्यायेन प्रकाशितौ। मूल्यम्—आणकचतुष्टयम्।

अयि भोः सहृदयाः परिषत्पारिषद्याः! मोह-सागर ब्रुडमानमानसानामालम्बनमिव नातिचिरं लब्धप्रकाशा श्रीमद्भगवच्छङ्करपादविरचिता मोहमुद्गर-मोहकुठाराभिधाना पुस्तकद्वयीति विज्ञापयन्तः प्रमोदविशेषं वो वितरामः। मोहमुद्गरो नाम वङ्गेष्वपि बहोः कालात् प्रभृति प्रचरद्रूपः परिलक्षितः, मोहकुठारः पुनर्दाक्षिणात्यप्रदेशेष्वेव। भावभाषादिसारल्येन श्रुतिमाधुर्येण मोक्षविषयकोपदेशादिभिश्च द्वयमेवैतत् पुस्तकयोः सुधीसमाजे सुपरिचितमिति नूतनतया तयोः परिचय-प्रदानस्य पिष्टपेषणरूपत्वेऽपि "श्रेयसि केन तृप्यते" इत्यनया दिशा इदमत्रावश्यमुद्घोषणीयं यत्—पुस्तकद्वयमिदमल्पकायमपि मोक्षविषयोपदेशेनापातरम्येषु स्रक्चन्दनवनितादिविषयसुखेष्वतिमात्रं निमज्जतामविवेकिनां मोहमहीरुहस्य विचूर्णकतया विच्छेदकतया च कार्यतोऽपि मुद्गर-कुठारधर्मवेति तस्यैतस्य सम्पादनादिकं प्रभूतमङ्गलायैव समपद्यत जनगणस्येति।

सम्पादकेन पुस्तकयोरनयोर्वङ्गभाषामयं भावानुवादं तथा परिशिष्टांशे पुस्तकविरचनेतिवृत्तं श्रीमच्छङ्करभगवत्पादानां जीवनचरितञ्च संक्षेपतो विदधता महानुपकारः संसाधितः पाठकसमाजस्यापि। मन्यामहे गुणैकपक्षपातिनः सहृदयाः सुधियश्चेत् सादरं संकृपश्चेदमालोकयेयुस्तदैवास्य परिश्रमः सार्थक इति शिवम्।

श्रीरामधन-भट्टाचार्यःकाव्यव्याकरणपुराणतीर्थः

---

# সংস্কৃত-সাহিত্য-পরিষদ্-গ্রন্থাবলী-সম্বন্ধে

অভিমত ( আনন্দবাজার পত্রিকা, ১৬।১০।৪৪ )

৫। **কারকোল্লাস**—ভরত মল্লিক প্রণীত ; শ্রীজানকীনাথ সাহিত্য-শাস্ত্রী সম্পাদিত ; মূল্য ৵০ ; সংস্কৃত-ব্যাকরণের কারক-সম্বন্ধীয় বিখ্যাত গ্রন্থ।

৬। **গ্রহযাগতত্ত্বম্**—রঘুনন্দন ভট্টাচার্য্য ; শ্রীসতীশচন্দ্র সিদ্ধান্ত-ভূষণ সম্পাদিত ; মূল্য ।৵০ ; গ্রহকোপ শান্তি করিবার পদ্ধতি। বৈদিক গ্রহযাগের দুইটী সম্প্রদায় আছে, একটী রঘুনন্দন-মতানুযায়ী, অপর রামকৃষ্ণ-মতানুযায়ী। ইহা প্রথম সম্প্রদায়ের গ্রন্থ।

৭। **প্রভাকর-বিজয়ম্**—নন্দীশ্বর ; সম্পাদক পণ্ডিত অনন্তকৃষ্ণ শাস্ত্রী ও রামনাথ শাস্ত্রী ; মূল্য ১৷০। মীমাংসা দর্শন-সম্বন্ধীয় গ্রন্থ। পূর্ব্ব-মীমাংসা মতের দুইটী সম্প্রদায় আছে—একটী কুমারিল ভট্টের মতানুসারী সম্প্রদায়, দ্বিতীয়টী প্রভাকর গুরুর মতানুসারী সম্প্রদায়। বর্ত্তমান গ্রন্থ প্রভাকর-মতানুযায়ী মীমাংসা গ্রন্থ। ইহাতে উক্ত মতবাদ সুব্যাখ্যাত হইয়াছে এবং উহার সম্বন্ধে অনেকগুলি প্রচলিত ভ্রান্ত ধারণা খণ্ডিত হইয়াছে।

৮। **তীর্থতত্ত্বম্**—রঘুনন্দন ভট্টাচার্য্য ; শ্রীবামাচরণ কাব্যতীর্থ সম্পাদিত, মূল্য ।৵০ ; তীর্থযাত্রা হিন্দু জীবনের একটী প্রধান ও অবশ্য-কর্ত্তব্য কর্ম্ম। তীর্থযাত্রা-সম্বন্ধে বহু নিবন্ধ রচিত হইয়াছে। এই নিবন্ধকার-গণের মধ্যে রঘুনন্দন শ্রেষ্ঠ। ইহাতে গয়া, কাশী ও প্রয়াগের পদ্ধতি দেওয়া হইয়াছে।

৯। **পবনদূতম্**—ধোয়ী কবি প্রণীত ; শ্রীচিন্তাহরণ চক্রবর্ত্তী সম্পাদিত, মূল্য ৸০ ; লক্ষ্মণ সেনের অন্যতম সভা-কবি বলিয়া বিখ্যাত ধোয়ী কবির পবনদূত প্রসিদ্ধ গ্রন্থ। ভূমিকা ও সম্পাদনাও উৎকৃষ্ট হইয়াছে।

১০। **নল-দময়ন্তীয়ম্**—পণ্ডিত শ্রীকালীপদ তর্কাচার্য্য প্রণীত, মূল্য ১৷০ ; দার্শনিক, অধ্যাপক এবং কবি বলিয়া গ্রন্থকারের খ্যাতি সুপ্রতিষ্ঠিত। গ্রন্থখানি সংস্কৃত নাটক হিসাবে প্রথম শ্রেণীর এবং শ্রেষ্ঠ। রচনার উৎকর্ষ স্থলে স্থলে কালিদাসের রচনা স্মরণ করাইয়া দেয়। ইহা উল্লেখযোগ্য মৌলিক সংস্কৃত নাটক রচনা।

১১। **প্রশস্তপাদভাষ্যম্**—পণ্ডিত শ্রীকালীপদ তর্কাচার্য্য সম্পাদিত ; মূল্য ২৲। কণাদের বৈশেষিক দর্শন-সম্বন্ধে প্রশস্তপাদভাষ্য সুপরিচিত। ইহাকে ভাষ্য না বলিয়া স্বতন্ত্র দার্শনিক গ্রন্থ বলাই উচিত। এই ভাষ্যসম্বন্ধে জগদীশ তর্কালঙ্কারের সূক্তিও বিখ্যাত। বর্ত্তমান গ্রন্থে ভাষ্য, সূক্তি, সূক্তিদীপিকা ( সংস্কৃতে ) এবং বাংলায় ব্যাখ্যা প্রদত্ত হইয়াছে।

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

Reg. No. C 1073

[June, 1939

Vol. XXII, No. 2 ]

[redacted]

१८६१ शकीये ज्येष्ठे

२२श-वर्षस्य २य-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

June, 1939. | १८६१-शकीये ज्यैष्ठे २२श-वर्षस्य २य-संख्या | Vol. XXII, No. 2


## किं स्वतन्त्रा आहो अनाथाः

[ निबन्धकः—पि. वि. वरदराज-शर्मा ]

"मातुल, मातुल, जागृहि जागृहि, ये केऽपि निशीथ आगत्य निशाचरा इव मां तर्जयन्ति। एकाकिन्यहमबला किं कुर्याम्। कवाटं किल भेत्स्याम इति भीषयन्ति। अयि प्रातिवेशिकाः, किं कर्णौ कुरुध्वे। कियन्तं काल-महं कुररीव रोदिमि। किं नाम बाधिर्यमभिनयथ, मिथ्यास्वापं वा ?" इतीम-मार्तस्वरमाकर्ण्य सहसोत्थितोऽहम् इतस्ततः प्रेर्यमाणलोचनोऽपि किमप्य-नवलोकयन्निव, अप्रबुद्ध इव, केनापि गृहीत इव किमप्यजानानः सममिदं सममेव मे मनसा भ्राम्यदद्राक्षम्।

पुनरप्यवष्टभ्याऽऽत्मानं पुरस्तात्पार्श्वयोः पृष्ठतश्चेति चतस्रोऽपि दिशो विलोकयन्नवालोकयं काञ्चिदप्सरोरत्नमिव दिवश्च्युतं गवाक्षपरिसरदेश-मलङ्कुर्वाणां पुलिन्दवित्रासितामिव हरिणीं चटुलगतिं, दर्शनीयां सुन्दरीम्। सा चोभाभ्यां तन्वङ्गीभ्यामन्वीयमानाऽदृश्यत। तयोरन्यतरा षोडशवर्ष-देशीया, परा च द्वित्रैरेव वयोभिर्यवीयसी। कामं सर्वा एव वामाक्ष्यः कामस्य जीवातवः।

अतिवेलमुद्भ्रान्तलावण्यशोभा, सुकुमारा, अकुमारहृदयसर्वङ्कषा च सा युवतिरवधूयाबलासुलभं कातरभावम्, आज्ञाप्यातिधीरभावं किमपि नीचैर्व्याहरन्त्यवर्तत। अधस्तादपि परुषदर्शनाः पुरुषाः परुषा मधुरेतरैर्भाषितैर्भीषयन्तो योषितमेनां वीथ्यामेवावातिष्ठन्त। नन्वगारमिदमतिनागरोचितमभिनवशिल्पसरण्या निकषभूतमवर्ततेति वचनमत्युक्तिवर्जितम् अतिशयोक्त्यनाघ्रातम्। सर्वैर्नव्योपकरणैरविनाभूतम्। रसिकजनहृद्यमनासाद्यमसंस्तुतानाम्। अनतिविपुलो विविधवीरुधुद्योतितः पुरस्तादारामः। अनुच्छिन्नकृत्रिमनिर्झरासिच्यमानभूभागः अलिन्दसीमा सीमातिलङ्घिनमानन्दमालोकयितृणमुद्वेलयन्नवर्तत। अत्युरस्केन प्राकारेणावेष्टितमिदं वेश्म सद्मेव पद्मालयाया नूनं विरक्तस्यापि संसारं सारवदवभासयेत।

सहजेनौत्सुक्येन, आर्तरावश्रवणजनितया चानुकम्पया प्रेर्यमाणोऽहं नापारयमास्तरणमनुज्झितुम्।

क्षणार्धेनैवोत्थायाद्राक्षं मित्रमणिं कैरप्यालपन्तम्। निभृतं तत्समीपमुपसृत्य मन्दमन्दमप्राक्षं "किमिदं? कोऽसौ कलकल आकुलोभावस्सम्मर्दश्च" इति।

आभाषणासक्तोऽसौ मे मित्रमणिरविगणय्य मां "तूष्णीमास्व रे" इत्येवाभिधायानुपदमेवोच्चावचं जल्पतामनल्पगात्राणां वीथीमधितिष्ठतां परुषाणां सान्त्वनमेव तत्कालोचितं मन्यमानस्तदर्थमेवायतिष्ट। अतनिष्ट चातिकृपणमधोनिर्दिश्यमानमावेदनम्। "भद्रमुखाः, किमर्थमिदं कुक्कुटमोटने कुलिशग्रहणम्। सा हि तथ्यमेव ब्रवीति "न कोऽपि गेहे सन्निहितः कामं युष्मास्वन्यतम आगत्य मृगयताम्। किमहं कबले कूष्माण्डमन्तरयामी"ति। त्यजतैनां कीशमुष्टिम्। तपस्विन्येषा बिभेति युष्मदिति। एतदाकर्ण्य कश्चिदतिश्यामः पीवा युवा पीवरोष्णीषः सकोपमागत्य "किं यूयं जानीथ आसां साहसम्। पुरन्ध्रीणां परिचयादित्थं चिन्तयथ। सत्यमुच्यते "नवनीतं हृदयं ब्राह्मणस्ये"ति। किमेता अस्मानवलोक्य तत्त्वतो भीताः। एताः किल गर्भदास्यो दुर्भगाः पिशाचिका इवानशनाः सहस्रं विषयिणो युगपदावर्जयन्ति। अप-

वर्जयन्ति कामिजनसर्वस्वम्। नासां त्रपा नतरां भीतिः। कति नाम न भवेयुर्जङ्घा वारयोषितां नीवी-बन्धेषु। नैता युष्मदीयमादरमनुतापं वार्हन्ति। यथागतं व्रजत। किमनेन भवताम्। वयमेतासां कुचरितावगमे नियुक्ता राजपुरुषा" इत्यभिधाय सोपहासं, परावृत्य गवाक्षोन्मुखः पुनरपि गालीप्रदानैकतानः प्रववृते।

"रण्डे, अपावृणु कवाटम्। किमस्मास्वेवेदं प्रहसनं प्रयुङ्क्षे ? नियच्छ ते पण्यजातविस्तारम्। कृतं गोपवाटे तक्रविक्रयणोपक्रमेण। अरे गर्भदासि, किमस्मानपि प्रतारयसि ? जानीमो वयं ते जातिधर्मम्। दास्याः पुत्रि, यदि नोद्घाटयसि, अरे रे मायाण्टि, आरोह भित्तिम्। वरण्डालाबूपातं पातयैनां पातकिनीं प्रासादतलात्। केशपाशमस्या गृहाण रे। मा तावद्दयस्वास्याः कृतकाश्रुपातेने"त्यादि चान्यच्चोच्चावचं वदन्नसौ यावद्विरिरंसति तावदेव सा तपस्विनी तदीयेनेव हृदयेन भृशं फुरफुरायमाणेन दोषेनागत्यापावृणोत्पक्षद्वारम्।

"अन्यतमः प्रविशतु। अरे मायाण्डि, त्वमेव तावत्प्रविश। निपुणं निर्वर्णय भित्तिगर्तम्। अन्वेषय जारपुरुषं, गवेषय कन्थाग्रन्थिषु। कुसूले विचिनु। शय्यासनादिकमुद्वर्त्यावेक्षस्व। कोणेषु काणवन्मागाः। काणेलीकन्या नामैताः कुलपांसन्यः सन्तमसन्तमसन्तमपि सन्तं प्रदर्शयेयुः। अलाबूस्तन्याऽनया विप्रलब्धो मा तावत् निवर्तस्वे"त्युपदिशत्येव साहससम्राजि तस्मिन्, अन्यतमः साहसाध्वर्युः प्रविश्याभ्यन्तरमचिरादेव निर्गत्य "मन्ये स्वैरिण्या तादृशे संरम्भे निर्यापितश्शय्यासोदरोऽद्वारेणे"ति वदन् सर्वानेवानुयायिन आदाय निर्जगाम।

सर्वमेतदध्यक्षयन्नहं प्रकरणार्थमजानानो मित्रमन्वयुञ्जि "मित्र किमिदम् ? किमर्थमेते निशीथ आगत्यानाथा अशरणाश्चाबला उपरुन्धते" इति। "मित्रानेन वृत्तेन मर्मसु विद्ध इव प्रतिभासि। किं तवानेन। मम वा। न ह्यासां शोकेन भवानपि शोचितुमर्हति। "न हि जानपदं शोकमेकः शोचितुमर्हति। एता हि तिस्रोऽप्यपरिणीताः केनाप्यानीयात्र गेहे स्थापिताः।

केनेत्येतदपि न स्फुटं विज्ञायते। का न्वासां जातिः, कोऽभिजनः, किं गोत्रं, कौ वा पितरौ, किमासामस्ति सुहृद् यो नाम हितमन्विच्छेदित्येतत्सर्वं तावदेवाहमवगच्छामि यावद्भवानवगच्छति। न केवलमहं यावत्सर्वेऽपि वीथीवास्तव्या जानन्ति प्रावीण्यमासां गान्धर्वकलासु, न ह्यासां गानं शृण्वतस्तृप्तिर्भवेत्कर्णयोः। न नेत्रयोः पश्यतोरासां सौन्दर्यलहरीमलंप्रत्ययः। श्रूयते च यथैताः सङ्खापिप्रेक्षणके अभिनेतुं कृतव्यसना इति। कथमपि च ताः स्वतन्त्राः विना दीनगाथां विनोन्मुखालपनं कालं सुखं नयन्ति। न श्वशुरावुपचरणीयौ। न देवरा आराधनीयाः। नानुवर्तनीयं पत्युर्दौश्शील्यम्। अनल्पा आकल्पकल्पना। अनवरतं शय्यासोदराणां सादरालापः। स्वैरमाहारः। अनियन्त्रितो विहारः। सत्यमेवाभिरासादितं स्वर्गसुखमुर्वीतले। यस्मै स्पृहयन्ति बहवः। अभ्यसूयन्त्यन्ये। मह्यं पुना रोचत एवैतासामत्युज्ज्वला रीतिरेषा। वृत्तशेषमधिकृत्यैतदपि ननु वक्तव्यमवशिष्टम्। एतासां रूपादिसम्पत्तिमुद्वीक्ष्योत्पन्नमनसिजव्यथाः कदर्थिताः केचन द्रोग्धुमेताः शङ्के पालकेभ्यो निवेदयामासुर्यदेता रूपमेवाजीवं कल्पयन्तीति। ते च सर्वे राजपुरुषास्तत्त्वार्थमवगन्तुमेवायतन्त। मिथ्यावादं विज्ञाय परावर्तन्त। एष प्रकरणार्थ इति।

मित्रमणेः सादरप्रशंसां स्वातन्त्र्यशब्दार्थनिर्धारणञ्चाधिकृत्य विस्मयमानचेता अपृच्छं "मित्र अध्यक्षयन्नप्यासामचिरानुभूतामवस्थां कथं मन्यते भवानेताः स्वतन्त्राः। किमेताः स्वतन्त्रा उताहो अनाथाः! भ्रातरः, यूयमेव निर्धार्य ब्रूत, को वा शब्दः पुष्कलार्थो भवेदासु प्रयुज्यमानः। इति।

---

# विमर्श-विचार-सिद्धान्त-तिमिरभास्करः

[ निबन्धकः—श्रीचण्डीचरण-तर्कतीर्थः ]

विगतपञ्चचत्वारिंशदधिकत्रयोदशशतसंवत्सरे तत्पूर्वतनसंवत्सरे च आश्विनशुक्लाष्टम्याः षष्टिदण्डात्मकत्वेन परदिने तिथेर्निर्गमे सप्तमीपूजादिनावधिकचतुर्थदिने नवमीपूजाप्राप्त्यनुरोधेन तत्परदिने ( पञ्चमदिने ) श्रीश्रीदुर्गादेव्या विसर्जनं भवतीति गुप्तप्रेशादिदिनपञ्जिकासु तत्रभवतां श्रीरघुनन्दनभट्टाचार्याणां तिथितत्त्वसन्दर्भस्वारस्यमनुसरद्भिर्विद्वद्भिर्व्यवस्थापितमिति सर्वेषां विदितचरमेव।

परन्तु उक्तसंवत्सरद्वये चतुर्थदिने मुहूर्तान्न्यूनपूर्वाह्णदशमीतिथिलाभात सप्तमीपूजादिनावधिकचतुर्थदिन एव नवमीपूजानन्तरं पूर्वाह्णदशम्यां देवीविसर्जनं कर्तुमुचितमिति स्मार्तभट्टाचार्यैरुद्धृतानाम् ऋषिवचनानां पर्यालोचनेनाधिगच्छता, तत्कर्तव्यताप्रतिपत्तिप्रकारास्तत्र देवीविसर्जनव्यवस्थाविमर्शशीर्षकप्रबन्धे मया दर्शिताः।

तस्य च व्यवस्थाविमर्शस्य प्रतिवादरूपाः केचन प्रबन्धाः संस्कृतसाहित्य-परिषत्-पत्रिकायामेकविंशवर्षीयदशमसंख्यायां मुद्रिताः।

पण्डितसमाजपरम्परया समादृतायाः स्मार्तभट्टाचार्योक्तेरुपरि प्रदर्शितस्य दोषस्य सम्यङ् निरसनं भवतु, इत्ययं मनोरथो ममास्य सन्दर्भप्रकाशनस्यान्तरङ्ग आसीत्, परन्तु एतेषां विमर्श-विचार-सिद्धान्तनामधेयानां निबन्धानामवलोकनेन तथा सन्तोषमलभमानः पाठकेभ्यः पुनरिमं लेखमुपहरामि। गुणदोषविवेकिनः सुधियोऽत्र प्रमाणतामर्हन्ति।

प्रथमम् एतेषां विमर्शविचारसिद्धान्तानां प्रकृते कीदृशमुपयोगित्वमिति आलोचनीयम्। तत्र तावदिदं प्राप्तं विचारपूर्वाङ्गसंशयोत्थापिका विप्रतिपत्तिरत्र, आश्विनशुक्लाष्टम्याः षष्टिदण्डात्मकत्वस्थले चतुर्थपञ्चमोभयदिने

कर्मयोग्यदशमीलाभे चतुर्थदिने विसर्जनं वैधं न वा इत्याकारिका, स्मार्त-भट्टाचार्योक्तदिनपरित्यागेन विसर्जनकर्तव्यता सम्भवति नवेत्याकारिका वा, अथवा स्मार्तभट्टाचार्योद्धृतप्रमाणलब्धविसर्जनकर्तव्यत्वमुक्तस्थले चतुर्थदिने अस्ति न वा इत्याकारिका ग्राह्या। यद्यत्र प्रथमोक्तविप्रतिपत्तिराश्रीयते तदा अभावकोटिः प्रतिवादकर्तृभिर्ग्रहीतव्या। तथा चोक्तस्थले चतुर्थदिने देवीविसर्जनं वैधत्वाभाववदित्यनुमितिस्तैरुन्नेया। तत्र प्रथमनिबन्धस्य प्राथमिक्या "स्मार्तभट्टाचार्यस्यैतन्मतमित्येतावतैव पर्याप्तं स्यादि"त्युक्त्यात्र स्मार्तभट्टाचार्योक्तिविरुद्धत्वादिति हेतुर्ग्राह्यः। तादृशहेतोश्च प्रकृतसाध्यानु-मापकत्वं स्मार्तभट्टाचार्यस्याप्तत्वनिश्चयं विना न सम्भवति। तद्-निश्चये च दर्शितरीत्या चतुर्थदिने देवीविसर्जनस्य मुनिवचनप्रति-पाद्यतया आप्तोक्तत्वहेतुनात्र चतुर्थदिने विसर्जनस्य वैधत्वनिश्चये पुन-स्तदभावानुमितिरशक्यैव। वैधत्वाभावसाधकेन स्मार्तभट्टाचार्योक्तिविरुद्धत्व-हेतुनात्र सत्प्रतिपक्ष इत्यपि न वाच्यम्, उभयोस्तुल्यबलत्वाभावात्।

अपरञ्च प्रथमनिबन्धकप्रदर्शितक्रियायोगसंवादीयप्रातरावाहयेद्देवीमित्या-दिवचनस्थप्रातःपदव्याख्यानमहिम्ना परदिवसीयपूर्वाह्णकर्तव्यताकत्वादिति-हेतुर्लभ्यते, सोऽप्यसमीचीन एव। परदिवसीय-पूर्वाह्णकर्तव्यत्वमत्र यस्य कस्यचिदुत विसर्जनस्य। विसर्जनस्यैव तत्कर्तव्यताकत्वे तदपि विसर्जन-त्वावच्छेदेन तत्सामानाधिकरण्येन वा ग्राह्यम्। विसर्जनत्वावच्छेदेन पर-दिनपूर्वाह्णकर्तव्यतोक्तौ दशमीतिथिक्षयवशाद् यत्र तृतीयदिने नवमीपूजा विसर्जनञ्च, तद्विसर्जने नवमीपूजापरदिनकर्तव्यताया असत्त्वेन हेत्व-प्रसिद्धिरेव स्यात्। विसर्जनत्वसामानाधिकरण्येन परदिनकर्तव्यत्वपरिग्रहे च पक्षे अनिश्चिततया तद् गमकं न स्यात्। एवं विचारनिबन्धकस्यापि हेतुः विमर्शनिबन्धकोक्तद्वितीयहेतुसदृश इति तत्रापि उक्तहेतुदोषदुष्टता अस्ति अतस्तदुक्तमप्याकिञ्चित्करमेव। अत एव द्वितीय-तृतीयविप्रतिपत्तिग्रहणेऽपि नेष्टसिद्धिः स्मार्तभट्टाचार्योक्तप्रमाणैरेव दर्शितस्थले चतुर्थदिने देवीविसर्जनस्य साधितत्वात्। तत्साधनरीतिश्च विसर्जनव्यवस्थाविमर्शे प्रदर्शिता।

सिद्धान्ताख्यतृतीयनिबन्धलेखकेनात्र प्रमाणबाहुल्यबलात् पञ्चमदिने विसर्जनं भवतीति दर्शितम्। तत्र निबन्धकेन स्वपक्षे पञ्च वचनानि उद्धृतानि, तेषु च वचनेषु—

"सप्तमी वाष्टमी वापि नवमी षष्टिदण्डिका।
निःसरेदपरे घस्रे तदोत्सर्गस्तु पञ्चमे।
यदि कश्चित् प्रमादेन नवम्यक्ते विसर्जयेत्।
तस्य हानिर्भवत्यब्दे तस्मिस्तत् परिवर्ज्येत्"॥

इत्येवं वचनद्वयमस्ति। एतद्वचनद्वयस्य तथाविधस्वार्थे प्रामाण्यस्वीकारे प्रमाणबाहुल्याश्रयणं विनैव केवलं तद्वचनद्वयबलात् पञ्चमदिने विसर्जनं सिध्यति। वचनप्रमाणकानां सर्वेषामेव तावता तत्पक्षाश्रयणमुचितमिव प्रतिभाति, परन्तु नवम्याः षष्टिदण्डात्मकत्वस्थले चतुर्थदिने देवीविसर्जनं प्रतिपादयतां तत्रभवतां रघुनन्दनभट्टाचार्याणां "यत्र नवमी षष्टिदण्डात्मिका तत्परदिने नवमी तत्परदिने दशमी तत्रोदयानुरोधेनाधिकत्वप्रसक्तौ च निषेधकत्वमिति" तिथितत्त्वोक्तेः तद्वचनद्वयेन विरोधः स्यात् इति तत्-परिहारोपायः स्मार्तप्रवरैर्निबन्धकैरवश्यमुद्भावनीयः। उद्भाव्यमानश्च परीहारोपायः अस्माकं पक्षमप्यनुग्रहीष्यति इति तुल्ययोगक्षेमोऽस्माकं पक्षस्तैः सहातस्तद्वचनमपि पञ्चमदिने विसर्जनं साधयितुं नालमित्यवधेयम्।

वस्तुतस्तु तृतीयविप्रतिपत्त्यनुगृहीत एवास्माकं सन्दर्भः। अतोऽत्र स्मार्तभट्टाचार्यैरनुद्धृत-तदुक्तिविरुद्धवचनद्वारा अस्मत्पक्षखण्डनप्रयासोऽप्रा-सङ्गिक एवेति विभावनीयम्।

इदानीं निबन्धेषु प्रदर्शिता दोषा निराक्रियन्ते। विसर्जनव्यवस्थाविमर्शे विमर्श-निबन्धकस्यायं प्रथमो विमर्शः—"लिङ्गपुराणीयनिषेधस्य सर्वतो बल-वत्त्वमुक्तं तन्न समीचीनं, भविष्यपुराणीय—द्वाभ्यां चतुरहोभिर्वा इत्यादिवचनेन तस्यापि बाधात्" इति। निबन्धकेन प्रबन्धस्य सम्यगालोचनं विनैवायमाक्षेपः कृतः। वचनानां बलाबलनिर्देशावसरे "निषेधस्य सर्वतो बलवत्त्वम्" इत्युक्त्वा तदुपसंहारे "परन्तु विधेर्निर्विषयतायां निषेधस्यापि क्वचित् सङ्कोचः

स्यात्" इत्युक्तमस्माभिः। द्वाभ्यां चतुरहोभिर्वा इति वचनस्य निर्विषयत्व-परीहाराय न्यूनाधिकं न कर्तव्यमिति निषेधस्य सङ्कोचोऽपि दर्शित एव। एतत् सर्वमालोच्यते चेत् सर्वं समाहितं भविष्यति किमत्राधिकेनेति।

"यदप्युक्तम् अत्र पूजानुरोधाभावादिति तदपि न मनोरमं, वक्ष्यमाण-पूजानुरोधस्यात्रापि सत्त्वात्" इति प्रथमनिबन्धकस्य द्वितीयो विमर्शः। अयमपि विमर्शः पदार्थतत्त्वाननुधावननिमित्त एव। न तु पदार्थपर्या-लोचनया। क्रियायोगसंवादोक्त "प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत्। प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत्" इति वचनस्य, तत्रत्य-रघुनन्दन-भट्टाचार्य-सन्दर्भमनुसृत्य महापूजाविशिष्टपूर्वाह्णाधिकरणदिनोत्तरदिनपूर्वाह्ण-कर्त्तव्यतारूपोऽर्थो निबन्धकेन उक्तः। [स एवात्र पूजानुरोधपदार्थश्च इत्यप्युक्तम्। यद्येतद्वचनस्य उक्तरूपार्थमङ्गीकृत्य तस्यात्र पूजानुरोध-पदार्थता स्वीक्रियते तदा वृश्चिकभयात् पलायमानस्य आशीविष-मुखे पतनमिव तद्भवति। तिथिक्षयवशात् सप्तमीपूजादिनावधिक-तृतीयदिने नवमीपूजाविसर्जनस्थले एतद्वचनार्थस्यासम्बद्धतया बाधितार्थ-त्वेन अस्य वचनस्याप्रामाण्यापत्तेः। तदनुरोधेनास्य प्रायिकत्वोप-गमे च अष्टम्याः षष्टिदण्डात्मकत्वस्थलेऽपि चतुर्थदिने मुहूर्त्तान्यूनपूर्वाह्ण-दशमीलाभे न्यूनाधिकदिननिषेधशास्त्रात् चतुर्थ दिने (नवमीपूजादिने) अपि विसर्जनं सम्भवदुक्तिकं भवत्येव बाधकाभावात्।

अपि च यत्र सप्तमीपूजावधिकतृतीयचतुर्थदिनयोः मुहूर्त्तान्यूनपूर्वाह्ण-दशमीतिथिलाभः, तत्र तृतीयदिने श्रवणनक्षत्रलाभेऽलाभे च चतुर्थदिन एव विसर्जनमिति सर्वेषामभिमतम्। अत्र हि नवमीपूजापरदिनपूर्वाह्ण-कर्त्तव्यतारूपस्य उक्तवचनार्थपूजानुरोधस्य नियामकतयैव चतुर्थदिने विसर्जनस्य प्राप्त्या तृतीयदिने विसर्जनाप्रसक्तेः त्र्यहपूजने कृतेऽपि पूर्वाह्ण-दशम्यां श्रवणलाभे न्यूनत्वप्रसक्तौ... निषेधकत्वात्" इतीयं स्मार्तभट्टाचार्यस्य "न्यूनाधिकं न कर्त्तव्यम्" इति-वचनप्रयुक्तनिषेधोक्तिरसङ्गता स्यात्। अप्राप्तस्य निषेधायोगात्।

"यदप्युक्तमव्यवहितानन्तर्यलाभादिति, तन्न विचारसहम् अत्र क्त्वाप्रत्ययस्यानन्तर्यमात्रार्थकतायाः सकारणमेव प्रतिपाद्यमानत्वात्" इति निबन्धकस्य तृतीयो विमर्शः। अयन्तु विमर्शो विमर्ष एव। निबन्धकेन हि प्रातरावाहयेद्देवीमित्यादिवचनस्थप्रातःपदेन नवमीपूजादिनपरदिवसीयपूर्वाह्णपर्यन्तार्थस्य ग्राह्यत्वमुक्तम् ; तच्च नवमीपूजाधिकरणदिनध्वंसाधिकरणदिनध्वंसानधिकरणत्व-विशिष्ट-नवमीपूजाधिकरणदिन-ध्वंसाधिकरणदिनपूर्वाह्णत्वरूपमेवेत्यस्मदुक्ताव्यवहितोत्तरत्वापेक्षया गुरुशरीरम्। तादृशस्य चात्र प्रातःपदार्थत्वे एव कोऽयं गुणविशेषः येन एतादृशं गौरवमपि सोढव्यं भवति। अस्तु वा तथा, तथापि प्रातःपदस्य तादृशार्थकत्वे सम्पूज्येति क्त्वाप्रत्ययस्य निरर्थकतात्र दुर्वारणीयैव।

अपि च प्रातः-पदस्य परदिवसीयपूर्वाह्णपरत्वं लक्षणयैव भवति, सा च प्रातः प्रातश्च सम्पूज्येति वीप्सास्थले क्वचित् प्रातःपदेन स्वीक्रियमाणापि न सर्वत्र स्वीकार्या। अतएव प्रातःपदं पूर्वाह्णपरमिति स्मार्त्तभट्टाचार्यैरुक्तम्।

एवञ्च वचनान्नरैकवाक्यतयात्र प्रातः-पदस्य पूर्वाह्णपरत्वमात्रमङ्गीकृत्य क्त्वाप्रत्ययस्यैवानन्तर्यार्थो वाच्यः। तदानन्तर्यमपि अस्माभिः प्रदर्शिताव्यवहितोत्तरत्वरूपमेव—नवमीपूजादिन-तत्परदिनसाधारणम् अनुगतं ग्राह्यम्। तृतीयदिने नवमीपूजाविसर्जनयोः कर्त्तव्यतास्थले विसर्जनस्य नवमीपूजोत्तरत्वसम्पत्त्यर्थं तथैव वक्तुमुचितत्वात्। अन्यथा उक्तस्थले विसर्जनस्य नवमीपूजापरदिवसीयपूर्वाह्णानुष्ठितत्वाभावादर्थबाधेन तद्वचनाप्रामाण्यं स्यात्। विसर्जनस्य क्वचित् क्त्वा-प्रत्ययार्थानन्तर्यनियन्त्रितकर्त्तव्यता, क्वचिच्च प्रातःपदार्थनियन्त्रितकर्त्तव्यता, इत्युक्तौ च वाक्यभेदापत्तिः।

एतेन एकशास्त्रनिरूपितबाध्यत्वबाधकत्वयोरेकत्रानिष्टयोः प्रसक्तिकथनस्य यत् खण्डनं कृतं तदपि निरस्तम्। तत्साधिकायाः प्रातःपदस्य परदिनपूर्वाह्णपरताया एव निबन्धकोक्ताया निरसितत्वात्।

इदन्तावदत्रावधातव्यम् क्रियायोगसंवादोक्तप्रातरावाहयेद्देवीमित्यादिवचनप्रतिपाद्यत्वेन निबन्धकाभिमत-नवमीपूजापरदिनपूर्वाह्णत्वस्य विसर्जन-

नियामकतास्वीकारे "न्यूनाधिकं न कर्त्तव्यम्" इत्यस्य निषेधस्य कुत्र विषयता अङ्गीकर्त्तव्या, स्मार्त्तभट्टाचार्यप्रदर्शितस्थलद्वय एव प्रातःपदार्थपरदिन-कर्त्तव्यताद्वारेण यथोक्त-चतुर्थ-पञ्चमदिनयोर्विसर्जनस्य प्राप्तेः दिनान्तरे अप्रसक्तया तत्र तन्निनिषेधायोगात्।

इदानीं द्वितीयनिबन्धस्य चर्चा क्रियते।

विचाराख्यनिबन्धे "पूजानुरोधात्" इति स्मार्त्तभट्टाचार्यपङ्क्तेः कश्चन शाब्दबोधप्रकारः प्रदर्शितः। स चाश्रुतपूर्व एव। "स्मार्त्तमते पूजानुरोधश्च—कर्त्तव्यताप्रकारकनिश्चयरूपः। पूजानुरोधादिति षष्ठी-समासेन पूजासम्बन्धी कर्त्तव्यताप्रकारकनिश्चय इत्यवगम्यते। पञ्चम्यर्थः प्रयोज्यत्वम्। तथा च पूजासम्बन्ध्यभिन्नकर्त्तव्यताप्रकारकनिश्चयप्रयुक्तमिति तस्यार्थः। निश्चये पूजासम्बन्धश्च स्वाव्यवहितोत्तरदिनवृत्तिविषयता-निरूपकत्वम्। नवमीपूजाव्यवहितोत्तरदिनवृत्ति-देवीविसर्जनविषयकनिश्चये स्वाव्यवहितोत्तरदिनवृत्तिविषयतानिरूपकत्वसम्बन्धेन पूजाविशिष्टकर्त्तव्यता प्रकारकनिश्चयस्य विषयतासम्बन्धेन विसर्जने वृत्तित्वमस्ति" इति विचाराख्य-द्वितीयनिबन्धस्य निबन्धकाभिप्रेतार्थप्रतिपादकोऽंशविशेषः।

अत्र नवमीपूजाव्यवहितोत्तरदिनवृत्ति-देवीविसर्जनविषयकनिश्चये इति सप्तम्यन्तस्य अग्रिम-विसर्जने इति सप्तम्यन्तस्य च कीदृशान्वयबोधः स च पाठकैरेव विवेचनीयः।

अत्र "पूजानुरोधादिति षष्ठीसमासेन पूजासम्बन्धी कर्त्तव्यताप्रकारक-निश्चय इत्यवगम्यते पूजासम्बन्धश्च स्वाव्यवहितोत्तरदिनवृत्तिविषयतानिरूप-कत्वं" इति यदुक्तं तत्रेदं जिज्ञास्यते, पूजानुरोधादिति षष्ठीसमासेन उक्तरूपपूजासम्बन्धस्य कथं लाभः। निश्चयार्थकानुरोधस्य विषयतारूपमेव कर्मत्वं तत्र कर्मणि षष्ठ्या बोध्यते। अव्यवहितोत्तरदिनवृत्तिविषयता-निरूपकत्वरूपसम्बन्धस्योपस्थापकोऽत्र कश्चिदपूर्वविशेषोऽस्तीति तन्त्रदृष्ट्या न प्रतीयते। अयञ्च प्रकारो निबन्धकस्य स्वकपोलकल्पित एव।

राजपुरुष इत्यादौ राजपदस्येवात्र पूजापदस्य तत्सम्बन्धिनि लक्षणायाः

# श्रीश्रीअद्वैतचरितम्

( पूर्वानुवृत्तम् )

[ श्रीगौरगोविन्दाविर्भाव-लीला ]

[ निवन्धकः—श्रीकालोहरदासवसुः भक्तिसागरः ]

परं हुङ्कारोत्था ताडितवार्त्ता मथुरापुर्यां श्रीयोगपीठे "टन टन" इति वाद्यते स्म ।

भक्तचित्तं विमलसरसस्तुल्यम् । तत्‌कृताह्वानं मृणालवत् स्फुरति । तस्य शिरसि परमधाम कमलवत् प्रकाशते । तस्य कमलस्य कर्णिकाकोटराद् मकरन्दधाराद्वयं प्रवहति । तद्धाराद्वयम् एकीभूय धरां पवित्रयति । सीतानाथः कृष्णविचिन्तननिमग्नः कदाचिदुपवसति क्वचिद् वा दिवसस्य सकृदन्नं भुङ्क्ते । रात्र्यां निद्रां न याति, विनिद्रो वाहुद्वयमुत्तोल्य "हा कृष्ण हा कृष्ण" इति कृष्णमाह्वयति, क्वचित् क्वचित् मूर्च्छति च ।

श्रीवृन्दावने कृष्णचन्द्रो राधाभावद्युतिसुवलितो भूत्वा निजवाञ्छात्रयं पूरयितुं मनश्चक्रे । समकालमेव नामप्रेमप्रचारेण जगति युगधर्ममङ्गलं विस्तारयितुं विष्णुः कृष्णाङ्गं प्राविशत् । इन्द्रनीलमणिप्रभः प्रभुः कालवित् श्रीकृष्णः परिपूर्णभावसिन्धोरिन्दुर्नवद्वीपनभसि समुदितः ।

श्रीअद्वैतचन्द्रः सगद्गदं सदैव गदति—"प्रभो ! अस्मान् मा पीडय । हे दुःखार्त्तिहारिन् ! जीवदुःखानि दवय । सत्वरमागच्छ । प्राणवायोर्वहिर्गमनतः प्रागेव दर्शनं प्रदाय प्रतिविधानं कुरु । मम प्रतिज्ञा त्वयावश्यमेव ज्ञाता । अन्धजीवानां मध्ये कोऽपि न हरिनाम करोति, भक्तिं न याचते । कोऽपि ममोपदेशं न मनुते । तवागमनमेव जीवाघं नाशयित्वा अमोघप्रेमफलं दास्यति" इत्यभिधाय तूष्णीं तथा देवादिदेवो दीनार्त्तिहारी हरिरायातीति विश्वसन्नास्ते ।

आकाशस्थः चन्द्रः सुधावृष्टिं कृत्वा शस्यानि उत्पादयन् भूतपुष्टिं साधयति। शान्तिपुराधीश्वरः प्रेमसुधाया अशोषम् अनादिनिर्झरमानीय तेन प्रेमवृष्टिं जीवानां प्राणतुष्टिं कारयिष्यति ! अद्वैतस्य तुल्यो जीवबन्धुः को जातो जगति ? महाकारुणिकः स व्रजयुगलमानीय वङ्गरङ्गमञ्चे अदृष्ट-चरलीलाभिनयं दर्शयिष्यति। स्वयमपि स तेन सह मङ्गलं गास्यति, नर्त्तिष्यति, हाहाकारं दूरीकृत्य हीहीकारस्य जयघोषणां करिष्यति। स्वर्ण-पाञ्चालिकाया अपूर्वममृतनिस्यन्दि नृत्यं दर्शयिष्यति ! जगज्जीवगणः प्रेमामृतरसं पास्यति। जीवजगत् तत्पानानन्दरसविह्वलं सद् विद्यामद-गौरवं विस्मृत्य भगवत्परायणं भविष्यति। भक्तिं विना विद्याकुल-धनैः किम्।

श्रीहट्टस्य ढाकादक्षिणे "उपेन्द्रमिश्र" इत्येको वैदिको ब्राह्मण आसीत्। तस्य तृतीयपुत्रः श्रीजगन्नाथमिश्रो विद्यार्थी नवद्वीपमधि-वसन्नासीत्। प्रतिभाबलेन स परमविद्वान् सन् "पुरन्दर" इत्युपाधिं लेभे। श्रीहट्टतरपपरगणाया "जयपुर" इति ग्रामस्थो ज्योतिर्विद्याविशारदो नीलाम्बरचक्रवर्त्ती जन्मभूम्या नानोत्पातग्रस्तत्वात् सस्त्रीकः स्वदेशं परित्यज्य "विल्वपुष्करिणी" नाम ग्रामे स्थायिगृहं निर्माय वासं करोति। कियति काले गच्छति स प्रथमकन्यां शचीदेवीं श्रीजगन्नाथकरे समर्पितवान्। जगन्नाथो विवाहं कृत्वा नवद्वीपमायापुरे स्थायिनिवासमकरोत्। स्वदेशं न प्रतिययौ।

गच्छता कालेन शचीदेव्याः क्रमेण अष्टकन्या मृता जाता ( जाता मृताश्च वा )। नवमगर्भे तस्याः प्रथमपुत्रो विश्वरूप आविरभूत्। एषोऽनन्त-विग्रहः परमसुलक्षणयुतो जगन्नाथप्राङ्गणे नृत्यति खेलति हसति आनन्दं विदधाति च। एवं दशसु वर्षेषु गतेषु शचीमाता पुनरन्तर्वत्नी बभूव। १४०६ शकस्य माघावसाने तस्याः श्रीअङ्गे भगवत्-प्रकाशस्य शुभलक्षणानि विकसन्ति स्म। १४०७ शकस्य मार्गशीर्षे मासि गर्भस्य दशमो मासः पूर्णोऽभूत्।

श्रीअद्वैतप्रभुः शचीदेव्या एकैकशः अष्ट गर्भान् प्रणनाम। तस्य प्रणाममसहमानास्ते नष्टा अभवन्। किन्तु नवमो गर्भस्तस्य प्रणाममसहत, सुपुत्रो भूत्वा अजायत च। जीवन् स विश्वरूपाभिधः सानन्दं विराजते आनन्दं वितनुते च। अत्र दशमे वारे च स प्रभुः शान्तिपुरान्नवद्वीपमागत्य प्रेमपुलकितचित्तस्तां शचीदेवीं प्रदक्षिणीकृत्य तस्या दशमं गर्भं सगन्धपुष्पैः सम्पूज्य शान्तिपुरं प्रतिययौ। श्रीशची श्रीजगन्नाथश्च रहस्यमबुद्ध्वा दुःखमकुरुताम्। अस्मिन्नेव वारे गर्भस्य जयोऽभूत्।

सम्भावनया "गौर-आना-गोसाञि" इत्युपाधिभूषणेन तं भूषयन्तो भक्ताः परमां निर्वृतिं यान्ति। एष नवोपाधिस्तस्य च प्रीतिं जनयति। भक्तानां प्राणान् अपि तर्पयति। शिवायों नमः।

वैवस्वतमन्वन्तरस्य अष्टाविंशतिचतुर्युगान्त्यकलौ १४०७ शकीय-फाल्गुनस्य द्वाविंशे दिवसे शनिवारे फाल्गुनपूर्णिमायां तिथौ पूर्वफल्गुनी-नक्षत्रे सिंहराशौ सिंहलग्ने पञ्चाशत्पलाधिकाष्टाविंशे दण्डे शुभचन्द्रग्रहण-काले अद्वैतेन मथितस्य प्रेम-क्षीराब्धेरुत्थितः परमरसामृतेन्दुश्चतुराणां भक्तचकोराणां प्राणप्रियस्तैः परिगीयमाणस्तैः पीयमानो जगत्प्राणो नदीया नभसि उदीयमानोऽभूत्।

स्वतःसिद्ध-भक्तेन श्रीअद्वैतेन इतः पूर्वं यद् भणितं तत् सत्यमेव फलितम्। तस्य प्रतिज्ञा सफलीकृता। अद्य आनन्दस्यावधिर्नास्ति। सीमानमतिक्रम्य आनन्दसिन्धुरुद्वेलोऽभूत्। गङ्गायास्तीरे तीरे सर्वे नदीया-वासिनः श्रेणीभूय भावावेशेन सताण्डवं हरिनामानुकीर्तनं कुर्वन्ति। मृदङ्ग-करतालानां मुदिरमधुरध्वनिना श्रीनवद्वीपो मुखरितो दीपैरालोकितश्च। श्रीनदीया श्रीभगवन्तं सुतं प्राप्य सानन्दमागत्य गङ्गायां स्नातीति प्रतिभाति। आकाशस्य पूर्णचन्द्रो विस्मितः उपरागमिषेण अन्तर्धत्ते। पृथिव्याः शोभादर्शनेन स्वर्मलिनीभूय "किमेतत् किमेतत्" इति सविस्मयं वक्तीव। अद्य प्रभृति पृथिवी स्वर्गादपि गरीयसी। शचीगृहे स्वर्णवर्ण एकः सुन्दरो मधुमूर्तिः शशिशिशुः सद्यो जातः। स्त्रीभिः पञ्चशो हुलु-

ध्वनिः क्रियते। पञ्चषा योषितः सूतिकाशौचादिकं सम्पादयन्ति, क्षणं क्षणं कुमारस्य चन्द्रनिन्दि रूपं पिबन्ति। माता अन्तरात्मस्थमानन्दं वक्षसि प्राप्यामुह्यत्।

परं शान्तिपुरनाथः शान्तिपुरं पुनरधिष्ठाय शान्तिम् अनुभवन्नास्ते। तस्य उपवासोऽनिद्रा हाम्बाकारो हुहुङ्कारः पूजा जपस्तपः अर्चा ध्यानमाराधना प्रार्थना च सद्योऽमृतफलं सूतेस्म। सर्वे जीवाः समस्वरेण श्रीअद्वैत-गुणश्रियं सहर्षं मुक्तकण्ठं कीर्तयन्तु। सर्वे भक्तिपूर्वकं तस्य गुणप्रभावादिकं संस्मृत्य तस्य चरणवन्दनां विदधतु। "गौर-आना"-गोस्वामिनः कृपा-कुसुमस्य द्वे फले गौर-नित्यानन्दौ। शतकोटिवारांस्तं वन्देऽहम्। दयतां मे देवः श्रीअद्वैतप्रभुरित्यहं नत्वा नत्वा प्रार्थये।

( साफल्यम् )

सोदक-तुलसीदलमात्रमूल्येन करुणामयः श्रीभगवान् अमूल्यमात्मानं विक्रीणीतेस्म। हुङ्काराकृष्टः कृष्णचन्द्रो गौडे गौरीस्तनपायी मोहनदेवो भूत्वा प्रकटोऽभूत्। अन्तःसलिला नदीव प्रभोराविर्भावशिलातो लीला सुगुप्तं प्रवहति। वहिरङ्गजनानां का कथा, वैष्णवगोष्ठ्याः कोऽपि अद्यापि नाबुध्यत।

पूजाडम्बरादिभिः किं ? किन्तु यो भक्तिहीनः स हि मन्दभाग्यः। स "पाषण्ड" उच्यते। पाषाणसदृशः कठिनचित्तो जनः पाषण्डः। गङ्गा-जलतुलसीदलैर्देवता न तुष्यति, भक्तिरेव केवलं देवतां तोषयति। श्रीअद्वैतप्रभोरपारभक्तिरेव कृष्णप्रीतिं साधयति स्म। तस्य भक्तिः कृष्णमवतारयति स्म। ईदृशी भक्तिर्जीवे असम्भवा।

ये भक्तिं बाधन्ते ते पाषण्डाः। तेषां पाषण्डानामेकेनैकदा अवादि— "अस्य ब्राह्मणस्य गृहादिकमुत्तोल्य जलसात् करिष्यामि, अस्माद् ग्रामादेनं द्रवयिष्यामी"ति श्रीवासो भीतो विपन्नश्च। श्रीअद्वैत एव एकमात्रं बल-माश्रयश्च। स प्रभुरतिक्रुद्धो दिगम्बरो भूत्वाऽवोचत्—

"हे श्रीवास, हे गङ्गादास, हे शुक्लाम्बर, सर्वे यूयं शृणुत। कृष्णं

सर्वेषां नयनगोचरीभूतं करिष्यामि। कृष्णोऽवतीर्य स्वयं सर्वेषामुद्धारं करिष्यति। युष्माभिर्मिलित्वाहं कृष्णभक्तिं व्याख्यास्यामि। यदि तथा कर्तुं न शक्नुयाम् तर्हि प्रकाशं चतुर्भुजः सन् चक्रं ग्रहीष्ये। तेन पाषाण्डानां शिरश्छेदं करिष्ये। तेन कृष्णो मम प्रभुरहं तस्य दास इति ज्ञास्यथ।

प्रभोर्दास्यमतिसौभाग्येन फलति। "अहं भगवद्दास" इति धिया यो दृप्यति स हि महाबलो विक्रान्तश्च। भक्तितुल्यं बलं नास्ति। भक्तिश्चित्तं प्रसारयति आनन्दयति च। गौरमानेता भक्तिं दाता श्रीअद्वैत-प्रभुरस्माकं हृदि स्फुरतु।

श्रीनवद्वीपधाम्नि अद्वैतप्रभोश्चतुष्पाठी विद्यते। भक्ताः सर्वे तत्र समवेता भक्तिशास्त्रमनुशीलयन्ति। भक्तिविधिज्ञः कृतविद्यो विश्वरूपश्च सर्वदा सोत्सुकस्तत्र गच्छति। "कृष्ण कृष्ण" इति रवेण सर्वे पारिषदा मुदा रुवन्ति यथाकालं यथायथं गच्छन्ति च। पण्डितस्मन्यानां विरुद्धानां जिह्वाः प्राक्तन-कर्मतो जडीभवन्ति स्म। तस्मात्तेन हरेर्नामोच्चारयितुम् अशक्ताः। आशैशवात्ते एवं सन्ति। चक्षुष्मन्तोऽपि ते अन्धा इव भक्तिमकरन्दं नानुसन्दधते। जगदानन्दमयमिति अभक्तेन नानुभूयते। शून्यमेव तस्य जगत् प्रतिभाति। भक्तिरानन्ददायिनी अमोघफला च। भक्तिरेव जीवानां जीवनम्। भगवतो भाव एव भक्तिः। भगवतोऽभावो मृत्युरेव। मानवानां जीवन्मृतत्वं पश्यन् प्रभुः श्रीअद्वैतः भूयसा क्लेशेन कृष्णमानेतुं शक्नोतिस्म। किन्तु विरुद्धाः पण्डितास्तेन कृतं कल्याणपरम्परागर्भमुपकारं नानुभवन्ति तस्मान्न स्वीकुर्वन्ति च।

श्रीगौराङ्ग आजन्मनो "निमाइ" इति नाम्ना स्त्रीभिराहूयते। मातामहेन श्रीनीलाम्बरचक्रवर्तिना अन्नप्राशनकाले शचीनन्दनस्य श्रीगौराङ्गस्य नाम "विश्वम्भर" इत्यधायि। भगवत्कथारसरसिकः श्रीविश्वरूपो मध्याह्ने आसन्नेऽपि प्रत्यहं भोजनचेष्टां विस्मरति। तस्मान्माता स्नेहवती भोक्तुं वेलातीता इति विश्वरूपाय विश्वम्भरद्वारा ज्ञापयति। विश्वम्भरो मात्रा

प्रेरितः परिषदं गत्वा "दादा दादा" इति सम्बोध्य विश्वरूपमाह्वयति, चतुष्पाठीं प्रविश्य तस्य वसनं धृत्वा आकर्षति मधुरं कथयति च—"भो भोजनवेला अतिक्रामति। सत्वरमागच्छतु। माता उद्विग्ना आह्वयति" विश्वम्भरस्य तात्कालिकीं रूपमाधुरीं दिव्यभावसमूहञ्च कोमलश्रीके तदङ्गे प्रस्फुटन्तमवलोक्य श्रीअद्वैतप्रभृतयो विमुग्धा अपूर्वभावस्रोतसि मज्जन्ति, परस्परमस्फुटमालपन्ति च।

पितृवियोगात् परं श्रीनिमाइ गङ्गादासपण्डितस्यान्तिके साहित्यं व्याकरञ्च, विष्णुमिश्रस्यान्तिके स्मृतिं ज्योतिःशास्त्रञ्च, सुदर्शनपण्डितस्यान्तिके दर्शनशास्त्राणि एकैकशः क्वचित् समकालञ्चाधीते। किन्तु भूरिशास्त्रपाठेनापि विश्वम्भरस्य चित्ते तृप्तिर्न जायते। अवशेषे श्रीनिमाइ-पण्डितः अद्वैतस्य शान्तिपुरभवनं गत्वा तदन्तिके वेदान् श्रीमद्भागवतञ्चाधीते। वर्षद्वयेन एतेषां शास्त्राणां पाठं समाप्य श्रीनिमाइ विद्यासागर इत्युपाधिं लेभे। अतः स अद्वैतप्रभोश्छात्रस्तथापि वैष्णवमायामुग्धः श्रीअद्वैतस्तस्य परिचयं न गतः। एषा भगवल्लीलाभङ्गी। दिव्येन चक्षुषा क्वचिद्भगवान् परमेश्वरो दृष्टोऽपि स स्वमायया भक्तस्य बुद्धिमावृणोति।

"कृष्णो निजभक्तोद्धरणाय एति एतीति" ब्रुवाणः प्रभुः कुबेरनन्दनो न जानाति स कायानः कदा वा करुणया आत्मप्रकाशं करिष्यति। साक्षात्तं पश्यति न पश्यति—तमवबोद्धुं धर्त्तुञ्चासमर्थः।

———

# सहस्रनाम सर्वनाम उताहो अनाम

[ निबन्धकः—पि. वि. वरदराजशर्मा ]

ननु सन्त्यज्ञा अल्पज्ञाश्च भूयांसः सर्वज्ञोऽपि कश्चित्। परं नास्ति कोऽपि आस्तिकः यो नाम नाश्रृणोत्सहस्रनाम किमपि। विमर्शक-चक्षुषा पश्यन्तो भारतान्तर्गतं सहस्रनामस्तोत्रमादिमं मन्यन्ते। स्तोत्राणामीदृशां तत्तत्पुराणान्तर्गतत्वमस्ति न वेत्यनल्पा विकल्पा अवकाशाल्पत्वान्नात्रोल्लिख्यन्ते। भारतम् इतिहासपुराणेषु भगवतो वेदव्यासस्यापत्यमपश्चिममाकलयन्ति प्रतीच्या विपश्चितः। इतराणि पुनः पुराणान्यपि पञ्चमस्याम्नायस्यानुजनिभाञ्जि येषु परःशतं सहस्रनामस्तोत्राण्युपलभ्यन्ते।

एवञ्च सहस्रनामस्तोत्राणां सर्वेषां पुराणान्वयजनिभाजां वयसा ज्यायो विष्णुसहस्रनामस्तोत्रम्।

नन्वेतदपि विचारणीयं यदेतेषां ग्रन्थानामभिरूपमभिधानं किन्नाम भवेदभिसमीहितमिति। आपाततस्तावत् "विष्णोर्नामसहस्रं मे श्रृणु पापभयापहम्" "नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम्" इत्यादिवचनभङ्ग्या "नामसहस्रस्तोत्रमि"त्येवानुरूपमाख्यानमिति प्रतीयते। परमद्य व्यवह्रियमाणं तु नाम "सहस्रनामस्तोत्रमि"त्येव न 'नामसहस्रस्तोत्रमि'ति। सहस्रं नामानि यस्य सः सहस्रनामा, विष्णुश्चासौ सहस्रनामा च, तस्य स्तोत्रमिति व्याख्याने शब्दार्थः कथञ्चिदुपपद्येत।

एवन्तर्हि 'को धर्मः सर्वधर्माणां धर्मोऽधिकतमो मतः। किञ्जपन् मुच्यते जन्तुः' इत्यादि-ग्रन्थ-सन्दर्भेण पृष्टस्य प्रश्नद्वयस्य न प्रतिवचनमाञ्जस्येनाभिहितं भवेत्। 'स्तुवन्नाम सहस्रेणे'ति चान्तेऽभिधानात् किञ्जपन्नित्यस्य प्रश्नो यद्यपि समाहितः तथापि "को धर्म", इत्यसौ प्रश्नः अप्रशान्ताकाङ्क्षः सन्नसकृन्निरीक्षत एव तच्छामकमर्थविशेषम्।

कोऽसावर्थस्तदुपशामक इति वितर्कयन्मन्येऽहं तदेव यत्सहस्रनाम, सर्वनाम, आहोस्विदनाम। उपक्रम एव तावदुपलभामहे 'विश्वमि'ति। किमसौ शब्दः कस्याप्येकस्याख्या, न, विश्वस्मै नम इति भाष्यकारवचनात्सर्वनामा। कथं पुनरस्य सर्वात्मकत्वं ? विष्णुत्वात्। सर्वव्यापनशीलो हि सर्वात्मेत्युच्यते 'सर्वव्यापी सर्वभूतान्तरात्मा' इति। कथमस्य सर्वव्यापित्वमत आह भगवान् वषट्कार इति। स च शब्दसामान्यमुपचारादभिधत्ते। तदात्मकत्वञ्चास्य नामात्मकत्वादुपपद्येत।

अत एव च युज्यतेऽस्य न तत्त्वतः सहस्रनामत्वं सर्वनामत्वं वेत्यनामत्वम्। अस्ति चेयं परिभाषा दार्शनिकसमये यथा त्रिलिङ्गयोरपि युष्मदस्मदो "रलिङ्गे युष्मदस्मदी, इति। यथा च त्रैकालिकस्याभावस्यानवच्छिन्नत्वम्। ग्रन्थकारोऽपि स्वयं ब्रूते 'विश्वमूर्तिरमूर्तिमान' इति। विश्वमूर्तित्वे अमूर्तित्वमिवोपपद्येत सहस्रनामत्वेऽप्यनामत्वम्।

ईदृशस्यार्थस्य ग्रन्थादस्मादवगमस्तु विश्वमित्युपक्रमात्तत्र तत्र तत्तल्लिङ्गानामपि शब्दानां प्रयोगदर्शनात्। कदाचिन्नपुंसकत्वमलिङ्गत्वं वा विशेष्यस्याभिमतं भवेदित्यप्यस्त्युत्प्रेक्षावसरः। बहुत्र च कोशेषु "सहस्रनाम सम्पूर्णम्" इत्येव ग्रन्थान्तगद्यभागदर्शनात्सहस्रनाम किमप्यधिकृत्य कृतोऽसौ ग्रन्थ इति स्वैरं निःसरन्नर्थोऽपि पूर्वोक्तमुपस्तम्भयति इति व्याख्यानेन सङ्गच्छेत।

यच्चेदं सहस्रनाम, सर्वनाम, अनाम, च तस्यैव प्रतिपादनं प्रतिपत्तृवैचित्र्यादुक्ति-वैचित्र्यमाश्रित्य प्रतिपाद्यते। त्रयी हि विधौपनिषदानामीदृशार्थप्रतिपादने दृश्यते, 'यतो वा इमानि भूतानी'त्यादिवाक्य इव जगज्जन्मादिभङ्गान्ताधिष्ठानत्वेन 'न सत्तन्नासदुच्यत' इत्यादाविव परस्परविरुद्धार्थप्रतिपादनेनानिर्वचनीयत्वापादकविधया, 'अस्थूलमनण्वि'त्येवमादाविव सर्वबाधाधिष्ठानत्वबोधकविधया च।

तत्राद्या विधा "करणं कारणं कर्ता विकर्ता गहनो गुहः" इत्यादिषु पद्येषु स्पष्टं निरूप्यते। अनेन हि पद्येन जन्मादिभङ्गान्ताधिष्ठानत्वमस्य

प्रतिपाद्य गहनेत्युपक्रम्य तुर्यं किमपि प्रतिपाद्यते । "अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महानित्या"दि वाक्यजातं परस्परविरुद्धार्थप्रतिपादनेनानुपपत्तिमुद्भावयदुभयविलक्षणं किञ्चिदावेदयति । अमूर्तिमान् निर्गुण इत्यादिकं तु 'अस्थूलमनणु, अथात आदेशो नेति नेती'त्यनया सरण्या सर्वबाधावधित्वेन किमपि कथञ्चिदवगमयति ।

तदेवं समग्रोऽसौ ग्रन्थः किमप्यनाम प्रतिपादयितुं प्रवृत्तः, यथेतरत्सहस्रनाम । तत्राप्ययमेव प्रकारस्समादृतः । सन्ति च सुबहूनि समानान्यभिन्नानि पदानि । शिवसहस्रनामत्वेनोच्यमाने ग्रन्थे तावत् 'कामदेवः कामपालः' 'स्तव्यः स्तवप्रियः' 'दुर्लभो दुर्गमो दुर्गो', 'भ्राजिष्णुर्भोजनं भोक्ता' इत्यादीनि । एवमेव गणेशसहस्रनाम्ना प्रतीतेऽपि 'स प्रमोदः प्रमोदनः, यज्ञो-यज्ञपतिः, अणुर्महान्', इत्यादीन्यभिन्नपदानि वाक्यानि च निध्यानमात्रेण लोचनसरणिमनुपतन्ति लब्ध्वावेदयन्ति यन्नाम्नां बहुत्वेऽपि तदेकमेव यत्प्रतिपादनार्थं सर्वे इमे ग्रन्थाः प्रवृत्ताः । न पुनः कस्यापीदृशस्य ग्रन्थस्यार्थस्तादृशः कोऽपि भवितुमर्हति, यः परिच्छिन्नेन शरीरेण परिच्छिन्नाभिर्विभूतिभिः परिच्छिन्नैः पार्षदैः परिवृतः परिच्छिन्नं देशमधिवसेत् । न गरुडः नाहिराट् न वृषो न मूषकः न नीलकण्ठः न चापि केसरी तमर्थं वोढुमीशीत ।

न चैतत्सहस्रनाम सर्वनाम अनाम वा पीतमम्बरं परिधत्ते, न दिशः, नैतच्चतुर्भिश्चतुरैर्दोर्दण्डैर्मण्डितं, नापि त्रिभिरीक्षणैः, न तत्तमालश्यामलं न वा भूतिभासुरं, न जटामण्डलपरिवृतं न मकुटोज्ज्वलं, न मालिङ्गितं नाप्युमालङ्कृतं, न तदगधरं न च गङ्गाधरं, न नन्दिसेवितं न दन्तावलाननं न चेन्दिरामन्दिरम् ।

तस्य चार्थस्य प्रतिपादने 'को धर्म' इति प्रश्नः समाहितो भवति । स हि धर्मो 'योऽस्य जगतो विधारकः' 'एष सेतुर्विधरणः एषां लोकानामसम्भेदाये'ति श्रुतिविषयः । तच्च ब्रह्मैव भवितुमर्हति । ब्रह्म, इति च स्वयं ब्रूते । उपासकचित्तानुसारेण रूपकल्पनं पुनर्नातीव दुष्यतीति नासावेव परमोऽर्थः ।

'तदिष्टं ग्राह्यं नः सगुणमपि तद् ब्रह्म भजतामि'ति च यायजूकपयोमुचा-मुच्चैःस्तनितम्।

सहस्रनामत्वानामत्वादीनाम् उपपत्तिवर्णने लब्धवर्णाः प्रमाणम्। किम-वस्थाभेदेनान्येन वा पथेति स्वयं प्रज्ञाचक्षुषो विभावयन्तु।

---

# प्रशान्तरत्नाकरम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

तच्छीघ्रमिदानीं—

मार्गे पर्वतगह्वरे तरुलतागुल्मान्तराले तथा
नद्याः स्रोतसि सैकते भवति वा यत्रान्यतः संशयः ।
तत्तद्देशमुपेत्य शत्रुहतको वीरैः समन्विष्यतां
लज्जाया विनिवर्तनाय सहसा शत्रोर्गतिर्ज्ञायताम् ॥

वीर—यथाज्ञापयति वयस्यः । कः कोऽत्र ?

प्रविश्य पुरुषः—आज्ञापयतु स्वामी ।

वीर—शीघ्रं विशालाक्षप्रमुखान् प्रधानपुरुषान् विज्ञापय ;—एष स्वामी क्षणमात्रेकेण न्यग्रोधपादपतले भवतः सर्वान् द्रष्टुमिच्छतीति । शीघ्रं गच्छ ।

पुरुषः—यथाज्ञापयति स्वामी । ( निष्क्रान्तः ) ।

रत्ना—वयस्य, वीरबल, क्षणोऽपि साम्प्रतं युगवत् प्रतिभाति । प्रज्वलन्तीव मे शिरांसि । अहो धिक् ! मोहात्तदा कृतं माध्यस्थ्यं शत्रुहतके । हा धिक् कष्टं, मुषितोऽस्मि वञ्चितोऽस्मि । किं करोमि, क गच्छामि ।

वीर—वयस्य, अलं विक्षोभातिशयेन, क नु खलु शत्रुर्गमिष्यति, एष साम्प्रतमेव गृह्यते । तत् स्थैर्यमवलम्बस्व ।

( ततः प्रविशन्ति विशालाक्षप्रमुखाः पुरुषाः )

विशालाक्षः—जयति जयति स्वामी ।

रत्ना—वीराः ! नायं जयघोषणायाः समयः ।

विशा—कथमिव ?

रत्ना—अपक्रान्तः शत्रुः। तदलं कालहरणेन, शीघ्रमिदानीं—

मार्गे पर्वतगह्वरे तरुलतागुल्मान्तराले तथा
नद्याः स्रोतसि सैकते भवति वा यत्रान्यतः संशयः।
तत्तद्देशमुपेत्य शत्रुहतको वीरैः समन्विष्यतां
लज्जाया विनिवर्तनाय सहसा शत्रोर्गतिर्ज्ञायताम् ॥

एष किल ममाज्ञाशेषः—

यूयं शत्रुमगृह्णन्तो मा मां द्रष्टुमभीप्सत।
अन्यथा नामशेषं मां मन्यध्वं त्रपयानया ॥

विशा—स्वामिन्, अलं विषादेन, एष क्षणेन गृह्यते शत्रुः।

सर्वे—जयति जयति स्वामी, जयति जयति रत्नाकरः! हा रे रे रे रे रे! ( निष्क्रान्ताः )।

रत्ना—वयस्य, वीरबल, समुच्चमिमं न्यग्रोधपादपमारुह्य पश्य, शत्रोर्गतिर्ज्ञायते न वेति। मम पुनस्तातं प्रति सभयमन्तःकरणं, तदहं तातं पश्यामि। ( परिक्रामति )।

वीर—तथा—( न्यग्रोधपादपमारुह्य ) वयस्य, अत्याहितम्! शीघ्रमेहि।

रत्ना—( प्रतिनिवृत्य ) किमिव ?

वीर—इह तातो वृक्षशाखायां लम्बितस्तिष्ठति, शीघ्रमागच्छ।

रत्ना—वीरबल, किं कथयसि ? सत्यमेष तातः ?

वीर—अथ किम्। स एव।

रत्ना—हा तात!

वीर—नायं रोदनस्य कालः। शीघ्रमेहि।

रत्ना—अपि जीवनं लक्षयसि ?

वीर—न खलु।

रत्ना—हा तात! क्वासि ? देहि मे प्रतिवचनम्।

वीर—वयस्य, अस्ति भावी भूयानेव ते समयो रोदनाय। अलमिदानीं रोदनेन।

रत्ना—किन्नु खलु करिष्यामि ?

वीर—एहि यावत्तातम् अवतारयावः।

रत्ना—एवमस्तु। ( वृक्षमारुह्य वीरबलेन सह पितृदेहं भूमौ अवतारयति ) अये सैषा रज्जुः, यया पादपस्कन्धे शत्रुर्बद्धः। वीरबल, कथमिदं सम्भावयसि ?

वीर—नूनं शत्रुहतकः कथमपि बन्धनादात्मानमुन्मोच्य तयैव रज्ज्वा स्थविरं तातं वृक्षशाखायां लम्बयित्वा गूढमपक्रान्तः।

रत्ना—वयस्य, अप्येवं सम्भाव्यते ? अथवा मूढाः खलु वयं तातसामर्थ्ये विश्वस्ताः सुखं निद्रिताः। हा तात, अस्माकं मूर्खाणामेव मोहविजृम्भितेन भवान् पञ्चत्वमाप्तः। हा हा ! तात, मूढेन पुत्रपशुना स्वेच्छयैव मारितोऽसि। हा तात ?

वीर—वयस्य, तातस्य वसनप्रान्ते किमपि ग्रन्थिगतं दृश्यते।

रत्ना—शीघ्रमुन्मोचय। पश्यामि।

वीर—( उन्मोच्य ) वयस्य, एतत् किमपि तालीपत्रलिखितं पत्रं नूनमेतेनैव रहस्यमपावृतं स्यात्।

रत्ना—शीघ्रं वाचय।

वीर—एष वाचयामि। अये इह सम्यक् नाक्षरं लक्ष्यते, तत् प्रकाशे गत्वा वाचयामि। ( पत्रं वाचयति ) स्वस्ति च्यवनो नाम पुत्रं रत्नाकरमसंख्याभिराशीर्भिरभिनन्द्य विज्ञापयति,—वत्स, रत्नाकर, लेखोपकरणमनासाद्य कण्टकेन शरीरतो निःसारितेन रक्तेन पत्रं लिखामि, वत्स, बहोः कालात् प्रभृति साहसिकेषु कर्मसु प्रवृत्तं त्वां प्रति संशयानस्य मे नास्ति लेशतोऽपि शान्तिः। पुनः पुनरेव मया प्रतिषिध्यमानस्यापि ते विरतिं विना तत्र दृढां प्रवृत्तिमेव परिलक्षयामि। अद्य तु सविशेषमेव निर्णयं गतोऽस्मि। तदद्य कामेश्वरस्य प्राणरक्षामुपक्रम्य मदीयजीवनव्ययेनापि निर्विण्णस्य यदि

ते सुमतिः प्रादुर्भवेदिति स्वयमुद्बन्धनेन प्राणानतिप्रियानपि विसर्जयामि। अहं परलोकमधिष्ठाय तव शीलशुद्ध्या सुखी भवितुमिच्छामि। यदि परलोकं गतस्य पितुः शान्तिं कामयसे, तदा सत्पथे चित्तं प्रवर्तयेथाः, अलमतः परमपि साहसानुबन्धेन। वत्स, रत्नाकर, न लघुना सन्तापेन प्राणाधिकं त्वां पौत्रमात्रेयं तथा सर्वानपरान् परिजनान् स्वेच्छया विहाय जीवनं मुञ्चामि। तथापि—

तव सत्पथलाभाय राज्ञः संरक्षणाय च।
आत्मघातमहापापमङ्गीकृत्य व्रजाम्यहम्। इति।

रत्ना—हा तात, हा आत्रेयप्रिय, हा मदर्थपरित्यक्तजीवित, कथमेवं गतोऽसि? हा हा!

शून्यं जगत्तमसि मज्जति दुर्विगाहे
ज्वाला हुताशनमयी शिरसि प्रकीर्णा।
प्राणा विभान्ति बत दुःसहशल्यतुल्या
भ्रष्टं समग्रमिह मे मुषितोऽस्मि धात्रा॥

अहह! आशैशवादविगणय्य सुदुःसहानि
दुःखानि येन परिपोषित एष मूढः।
हा क्षीरपोषितभुजङ्गसमः कृतघ्न-
स्तस्यैव जीवनहरोऽस्मि गुरोरकाले॥

अहह! किं करोमि? क्व गच्छामि? अशरणोऽस्मि। तात, एष ते पादयोः पतामि, कथं चिरमिव न मां सम्भाषसे? प्रसीद, तात, प्रसीद—

प्रत्युत्तरं विसृज तात सुते कृपालो
दोषैः शतैरपि न मां परिहातुमर्हः।
अश्रूणि मे नयनयोः परिमार्जयाशु
प्रोत्तिष्ठ भूमिशयनात् परिसान्त्वयास्मान्॥

अथवा कोऽस्मानतः परमपि सान्त्वयिष्यति ? हा हा नास्ति, नास्ति तातो मे जीवितोऽद्यापि। मूढ रत्नाकर, अपध्वस्तोऽसि !

स्वकृत्यदोषाद् विनिहत्य तातं
कृत्वा विपन्नां जननीमनाथाम्।
अलौकिके वर्त्मनि सम्प्रविष्टो
लोकोपहास्यः किमु जीवसि त्वम्॥

वीर—वयस्य, रत्नाकर, अलं शोकावेगेन, तातः स्वकर्मचितं लोकं परिप्राप्तः। तत्तदीयमुदीच्यं कृत्यं परिचिन्तय। न हि साम्प्रतम् ईदृशस्तव युज्यते शोकः।

रत्ना—वयस्य वीरबल, ममैव शोकं प्रतिषेधसि ? यद्यहमेव पितुः स्मरणेन शोकं न कुर्यां, क्व तर्हि शोको वासमश्नुवीत ? पश्य—

येन विध्वंसितस्तातो माता च विधवा कृता।
स चेन्न वृणुते शोकं शोकस्तर्हि निरास्पदः॥

( नेपथ्ये 'हा आर्यपुत्र, हा तात, हा पितामह !' )

रत्ना—वीरबल, अयमसौ प्रज्वलिते ज्वलने हविर्धारासन्निपातः। एषा जननी, प्रिया पत्नी, पुत्रश्च आत्रेयस्तातं मे समुद्दिशन्त इत एवाभिवर्तन्ते। तत् कथमेतानहं निर्लज्जो मुखं दर्शयिष्यामि ? वयस्य, वीरबल, न स्थातुमर्हामि। अवलम्बस्व माम्। ( मोहमुपगतः )

वीर—वयस्य, समाश्वसिहि समाश्वसिहि। धैर्यमवलम्बस्व।

रत्ना—( समाश्वस्य ) वयस्य, वीरबल, किमुच्यते धैर्यमिति ?

दृष्ट्वा तातं त्यक्तजीवं मदर्थे
स्वेच्छासृष्टोद्बन्धनं वृक्षलग्नम्।
यन्मे प्राणा देहमुक्ता न जाताः
किं तस्मान्मे धैर्यमाशास्यमन्यत्॥

( ततः प्रविशन्ति शोकविकला रत्नाकरस्य जननी पत्नी पुत्रश्च )

र-जननी—हा आर्यपुत्र, क्वासि ? देहि मे प्रतिवचनम्।

र पत्नी—हा तात, क्वासि ? देहि मे प्रतिवचनम् ।

आत्रेयः—हा पितामह, क्वासि ? देहि मे प्रतिवचनम् ।

रत्ना—वयस्य, वीरबल, न शक्यमतः परं सोढुम् ।

वीर—वयस्य, पतितं सोढव्यमिति विदितमेवैतद् भवतः । तत्र का गतिः ?

रत्ना—वयस्य, वीरबल, जानामि, तथापि—

आ शैशवात् पितृकृतं स्मरतो ममाद्य
शोकानलो ज्वलति चेतसि दावतुल्यः ।
मातुः सुतस्य सविषादवचश्च पत्न्या
हन्तेन्धनीभवति नास्ति बत प्रशान्तिः ॥

तद् यदि शक्नोषि, मातरं वयस्यपत्नीमात्रेयञ्च मे वत्सं परिसान्त्वय येन कथमप्यात्मानं सन्धारयितुमर्हामि ।

र-माता—हा आर्यपुत्र, कथमेवं गतोऽसि ? हा आर्यपुत्र, कदापि नाहमपराद्धास्मि ते चरणयोः, तत् कस्मै कुपितोऽसि ।

रत्ना—मातः ! मातः !

कुपितो मह्यमत्यर्थं मम तातो दिवं गतः ।
अहमद्यापि जीवामि सुखितो राक्षसाधमः ॥

र-माता—कथमिव ?

रत्ना—मातः मातः ! किमतः परमपि श्रवणेन । अथवा श्रूयताम्—

तावत्कालं क्षीरसारप्रयोगैः
पुष्टो गेहे तीक्ष्णदंष्ट्रो भुजङ्गः ।
यद्दौर्वृत्त्यादद्य तातप्रणाशो
युष्मान् सर्वान् नामशेषान् विधत्ते ॥

र-माता—किमिति नावगच्छामि ।

वीर—मातः किमवगन्तव्यम् ? ( कर्णे कथयति ) एवमेवम् ।

र-माता—हा आर्यपुत्र, मूढाहं तदा त्वया कथितेऽपि अस्मिन् महावैशसे न प्रत्ययं गतास्मि। तदहमेव ते विपदो मूलभूता अभूवम्। हा हा कथमिदं श्रुत्वापि न मया रत्नाकरो ज्ञापितः। हा आर्यपुत्र, अभिमानेन गतोऽसि, हा आर्यपुत्र। ( मूर्च्छति )

र-पत्नी—हा तात, यद्यपि नास्मानवेक्षसे तथापि प्राणेभ्योऽपि ते प्रियतरमात्रेयं न परित्यक्तुमर्हसि। एष ते वक्षसि पतितस्तिष्ठति, तदेनं सादरं गृहाण, हा तात ! ( मुर्च्छति )

वीर—( भयं नाटयित्वा ) अये सादरं गृहाणेत्याह। शान्तं पापं प्रतिहतममङ्गलं वत्सस्य। अथवा देवताः स्वस्ति करिष्यन्ति। मातः ! सखि माधवि, वत्स आत्रेय, समाश्वसित समाश्वसित।

आत्रेयः—( संज्ञां लब्ध्वा ) पितामह, उत्तिष्ठ, प्रभाता रजनी, एहि कुसुमानि चेतुं गच्छावः। वृद्धमातः ! मातः ! कथमद्यापि न पुष्पकरण्डको दीयते। पितामह, उत्तिष्ठ, प्रभाता रजनी। ( उत्थापयितुं यतते )

र-माता—हा आर्यपुत्र। ( मूर्च्छति )

रत्ना—वीरबल, अशक्यमिदं द्रष्टुम्।

वीर—वत्स, दूरं गतस्ते पितामहः।

आत्रेयः—क्व नु खलु गतः ?

रत्ना—वत्स, आत्रेय,

यत्र तातकृतामाज्ञां तनयो नातिवर्तते।
तत्र पुण्यकृतां लोके प्रस्थितस्ते पितामहः॥

आत्रेय—तत् क एष दृश्यते ननु ?

वीर—एष तस्य प्राणविमुक्तो देहः।

आत्रेयः—तत् अहमपि तत्रैव गमिष्यामि, यत्र पितामहो मे प्रस्थितः। कथय पन्थानम्।

सर्वे—शान्तं पापं प्रतिहतममङ्गलं वत्सस्य।

वीर—अहो अत्याहितम् ! उन्मत्त इव आत्रेयो लक्ष्यते ।

आत्रेयः—कथयत, पन्थानं कथयत, पितामहस्य मे पन्थानं दिशत । अथवा न भवन्तः कथयिष्यन्ति, तद् यावदसौ दूरं नोपसर्पति तावदहमेव गत्वा विचिनोमि । ( गन्तुमुद्यतः )

रत्ना—वयस्य, वीरवल, वत्समात्रेयं पश्य ।

वीर—अलमुत्कण्ठया । एष दृश्यते । ( अवलम्बते )

आत्रेयः—जहाहि जहाहि माम् । एषोऽहं पितामहस्याङ्कं विशेयम् । पितामह ! पितामह ! पिताम—( मूर्च्छति )

वीर—( आत्रेयस्य मुखनासिकयोः शोणितस्रावं दृष्ट्वा ) वयस्य, अत्याहितं महदत्याहितम् !

रत्ना—किमिव ?

वीर—वत्सस्य आत्रेयस्य मुखनासिकाभ्यां वेगेन शोणितं प्रस्रवति ।

रत्ना—वीरवल, शीघ्रमाहूयतां वैद्यः । ( आत्रेयमवलम्बते )

रत्ना—एष गच्छामि । ( निष्क्रान्तः )

रत्ना—वत्स, आत्रेय, वत्स, कथमेवमसि ? वत्स, कथं न मां सम्भाषसे ? वत्स, वत्स ।

र-माता—( संज्ञां लब्ध्वा ) वत्स, आत्रेय, वत्स, आत्रेय, कथमेवं विपर्यस्तोऽसि ? हा वत्स, आत्रेय । ( मूर्च्छति ).

र-पत्नी—हा हा, किन्तु खलु वत्सस्य संवृत्तम् ? वत्स, आत्रेय, देहि मे प्रतिवचनम् । ( मूर्च्छति )

( क्रमशः )

———

# সংস্কৃত-সাহিত্য-পরিষদ্-গ্রন্থাবলী-সম্বন্ধে

অভিমত ( আনন্দবাজার পত্রিকা, ১৬।১০।৪৪ )

১। **যাত্রাতত্ত্বম্**—রঘুনন্দন ভট্টাচার্য্য ; শ্রীদ্বারিকানাথ ন্যায়শাস্ত্রী সম্পাদিত ; মূল্য ১৲। বৎসরের বিশেষ বিশেষ তিথি, রথযাত্রা প্রভৃতি নারায়ণের বিশেষ বিশেষ পূজানুষ্ঠানের ব্যবস্থা ইহাতে প্রদত্ত হইয়াছে।

২। **ঋগ্‌বেদ-ভাষ্যোপক্রমণিকা**—সায়ণাচার্য্য ; ডাঃ ৺পশুপতিনাথ শাস্ত্রী সম্পাদিত, মূল্য ৮০। সায়ণাচার্য্যের বেদব্যাখ্যা জগতের পণ্ডিত-সমাজে সমাদৃত। ঋগ্বেদের ভাষ্যে প্রবৃত্ত হইবার পূর্ব্বে, এই উপক্রমণিকার ভাষ্যকার তাঁহার অবলম্বিত সাধারণ মূলনীতিসমূহ বিবৃত করিয়াছেন।

৩। **ঋগ্বেদ-প্রাতিশাখ্যম্**—শৌনক ; ডাঃ পশুপতিনাথ শাস্ত্রী সম্পাদিত ; ঋগ্বেদ-পাঠার্থীর পক্ষে ঋগ্বেদ-প্রাতিশাখ্য অবশ্য অধ্যেতব্য। ইহাতে আবৃত্তি ও উচ্চারণ-সম্বন্ধে নির্দ্দেশ প্রদত্ত হইয়াছে ; ছন্দ ও উচ্চারণ-ঘটিত বিশেষত্ব প্রদর্শিত হইয়াছে। ইহার সহিত প্রামাণিক টীকা দেওয়া হইয়াছে। মূল্য ২॥০।

৪। **প্রমেয়রত্নাবলী**—বলদেব বিদ্যাভূষণ ; সম্পাদক শ্রীঅক্ষয়-কুমার শাস্ত্রী ; মূল্য ১।০। গৌড়ীয় বৈষ্ণবদর্শন-সম্বন্ধীয় গ্রন্থ ; কান্তিমালা নামক সংস্কৃত টীকা এবং বঙ্গানুবাদ দেওয়া হইয়াছে।

৫। **ভাষারত্নম্**—কণাদ-তর্কবাগীশ-প্রণীত ; পণ্ডিত শ্রীকালীপদ তর্কাচার্য্য সম্পাদিত ; মূল্য ৩॥০। নব্যন্যায়ের গ্রন্থ। কণাদ তর্কবাগীশ রঘুনাথ শিরোমণির সমসাময়িক এবং বাসুদেব সার্ব্বভৌমের শিষ্য বলিয়া প্রখ্যাত। উভয়েই বাংলাদেশে নব্যন্যায়ের প্রবর্ত্তক। সম্পাদক মহাশয়ের পাণ্ডিত্যপূর্ণ নূতন ব্যাখ্যায় গ্রন্থের গৌরব বর্দ্ধিত হইয়াছে।

৬। **ছান্দোগ্যমন্ত্রভাষ্যম্**—গুণবিষ্ণু-কৃত ; পণ্ডিত দুর্গামোহন ভট্টাচার্য্য, এম. এ., কাব্য-সাংখ্যপুরাণতীর্থ সম্পাদিত ; মূল্য ৩৮০—সামবেদীয় ব্রাহ্মণগণের বৈদিক সংস্কার ও অন্যান্য কর্ম্মানুষ্ঠানের মন্ত্র ও ভাষ্য। গ্রন্থের সম্পাদনায় বহুশ্রম স্বীকার করা হইয়াছে এবং দেশের ও বিদেশের পণ্ডিত-সমাজের সর্ব্বত্র ইহা প্রশংসিত হইয়াছে।

৭। **মনোদূতম্**—মহাকবি কালিদাসের মেঘদূতের অনুকরণে সংস্কৃত সাহিত্যে অপরাপর যে সকল দূতকাব্য প্রণীত হইয়াছে "মনোদূত" তাহাদের অন্যতম। ইহা শ্রীচৈতন্যদেবের মাতুল কবীন্দ্র বিষ্ণুদাস কর্ত্তৃক বিরচিত। মনকে দূতরূপে শ্রীকৃষ্ণের নিকটে প্রেরণই বর্ত্তমান কাব্যের বিষয়। ১৭১টী চমৎকার শ্লোকে কাব্য সম্পূর্ণ। মূল্য ॥৵০।

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौराषाढस्य २६श (षड्विंश)-दिवसे कुजवासरे सायं सप्तवादनतो भविष्यतीति तत्र सर्वेषां समुपस्थितिः प्रार्थनीया।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—২৬শে আষাঢ়, ১৩৪৬, মঙ্গলবার, সন্ধ্যা ৭টার সময়ে হইবে। সর্ব্বসাধারণের উপস্থিতি একান্ত প্রার্থনীয়।

## প্রয়োজনীয় বিজ্ঞাপন

( পণ্ডিত মহাশয়গণের বিশেষ দ্রষ্টব্য )

কলিকাতা করপোরেশনের প্রধান কর্ম্মাধ্যক্ষ মহাশয় ইং ১৩।৫।৩৯ তারিখের বিজ্ঞাপনে জানাইয়াছেন যে, বঙ্গীয় ব্যবস্থা-পরিষদের (Bengal Legislative Assemblyর) কলিকাতা সাধারণ এবং কলিকাতা সাধারণ স্ত্রীলোক এবং অন্যান্য নির্ব্বাচন-নকেন্দ্রের ভোট-দাতা-দিগের তালিকায় স্বীয় নাম অন্তর্ভুক্ত করিবার জন্য প্রয়োজনীয় যোগ্যতা-সম্পন্ন ব্যক্তিগণকে ইংরাজী ৩১শে জুলাই, ১৯৩৯ ( বাংলা ১৩৪৬ সালের ১৫ই শ্রাবণ ) এর মধ্যে কলিকাতা করপোরেশনের নির্ব্বাচন-বিভাগে **নির্দ্দিষ্ট ফর্ম্** পূরণ করিয়া আবেদন করিতে হইবে।

দ্রষ্টব্য—ম্যাট্রিকুলেশন পরীক্ষায় উত্তীর্ণ, **বঙ্গীয় সংস্কৃত এসোসিয়েশন** অথবা **ঢাকা পূর্ব্ববঙ্গ সারস্বত সমাজের উপাধি** পরীক্ষায় উত্তীর্ণ অথবা মধ্য ইংরাজী পরীক্ষায় উত্তীর্ণ ব্যক্তিগণ শিক্ষার যোগ্যতা-দ্বারা উক্তরূপ ভোটদাতা হইতে পারেন। স্ব স্ব সার্টিফিকেট-সহ নির্দ্দিষ্ট ফর্ম্মে ১৫ই শ্রাবণের মধ্যে আবেদন করিতে হইবে। করপোরেশন আফিসে উক্ত ফর্ম্ পাওয়া যায়, কিছু ফর্ম্ সংস্কৃত-সাহিত্য-পরিষদেও আনাইয়া রাখা হইবে।

Reg. No. C. 1073

Vol. XXII, No. 3 ] [ July, 1939

१८६१ शकीये आषाढे २२श-वर्षस्य ३य संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्, श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1939 | १८६१-शकीय आषाढे<br>२२श-वर्षस्य ३य-संख्या | Vol. XXII, No. 3 |


## चन्द्रालोकः

[ निबन्धकः—आर. अप्पण्णाचार्यः, बि. ए. ]

प्रथमरतिजां ग्लानिं हर्तुं प्रियस्य तु रेवती
स्फटिकचषकं हालापूर्णं प्रदाय तदन्तरा ।
लुलितलुलितं दृष्ट्वा प्रोन्माददाऽतितरां प्रिया
पुनरभिरतं येनाकृष्टा बलः स मुदेऽस्तु नः ॥१॥

दुग्धाब्धिवाससदनाद्बहिरेत्य क्षणात् क्षणात् ।
अथारूढोदयक्ष्माभृच्छृङ्गसोपानवर्त्मना ॥२॥

सिंहाकृतिघनद्वन्द्वपार्श्वप्रान्तप्रसाधितम् ।
नक्षत्ररत्नखचितं खसिंहासनमञ्चयन् ॥३॥

आख्ययाऽऽख्यातया किञ्च यथार्थीभूतया स्वया ।
राजन् ! राजञ्जगत्स्वान्तं चिरञ्जय च रञ्जय ॥४॥

हैयङ्गवीनपिण्डं किं क्षीराब्धिमथनोद्भवम् ।
पौलोम्या नन्दयन्त्याः स्वां नन्दने सत्यनन्दने ।
आहोस्वित्त्वं कराद्भ्रष्टं कान्तं कनककन्दुकम् ॥५॥

'अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे ।'
इत्थं तर्कितमन्यथा च बहुधा यत्तद्धि चन्द्र ! त्वयि
तारालिङ्गनभूरिलग्नतदुरःकस्तूरिकालेपनम् ॥६॥

नेत्रीकरोति विष्णुस्त्वां श्लाघते शिरसा शिवः ।
एवं गौरवशाली त्वं स्पृहणीयः सुरैरपि ॥७॥

यत्त्वां संश्रित्य केनापि दुर्धर्षोऽयं मृगश्चिरात् ।
त्वच्छरण्याच्छरण्यत्वं मन्येऽध्यैष्टा मृडाद्गुरोः ॥८॥

हर्षेणेव स्रवत्यश्रु सुधांशो ! त्वयि राजति ।
अप्यञ्जसा दशमिनः परापतति यौवनम् ।
सहसा केलिकलहे सुखसातिश्च सिध्यति ॥९॥

हरे ! हरन् भिषग्वत्त्वं मनःसामान्यमामयम् ।
तत्र दानाद्वणिग्वच्च वरं मान्मथमामयम् ॥१०॥

औषधिः शतधाऽस्त्येव सर्वव्याधिविराशनिः ।
आधेस्तु या त्वया गुप्ता साऽऽत्मन्येवौषधीपते ! ॥११॥

ओषधीभिः स्वदत्ताभिर्यः कोऽपि प्राप्नुते यशः ।
सर्वथा हन्त ! लोकेन वञ्चकेनास्मि वञ्चितः ॥१२॥

इतः परं वा जागर्मि विधूयानवधानताम् ।
वरा विशेषतोऽन्या वा नैव देयेयमोषधिः ।
इतीव बहुतर्कान्ते निश्चिनोपि स्म किं दृढम् ॥१३॥

अबला प्रबला चित्रं त्वयि मन्मथमन्त्रिणि ।
यद्वशु भ्रुकुटेर्भीरोरपि जैत्रो वशंवदः ॥१४॥

पुरा गोपीलोलो हरिरपि जगद्वन्द्यचरण-
स्तपस्यंश्च स्थाणुर्गिरिदुहितृरक्तः स्मरहरः ।
अवं ब्रूयां ब्रह्मण्यपि यदि न वाणी त्यजति मे
प्रसादं तद्वर्तुर्बलवदवमानेन कुपिता ॥१५॥

कोपेन कम्पिरदनच्छदबिम्बशोणं
वेगेन वेल्लदरुणाक्षिकनीनिकं च ।
अज्ञां प्रवर्तयति यां किल कोपना तां
निर्वर्तयन्ति हि मुरारिपुरारिपूर्वाः ॥१६॥

तव हि दण्डनपद्धतिरङ्गना यदपराधिमनो विदुनोऽप्यलम् ।
दृढनियन्त्रितमीक्षणरज्जुभिर्मृगदृशः कटुवेणिकशाहतैः ॥१७॥

अपर्याप्तं भास्वानवनिमनुभूयाह्नि मनो-
विरुद्धं सायं स्राक् स्वनियतिमनुस्मृत्य हि जहौ ।
तमोरक्षःक्लिष्टा विलपति तदुर्वीयमधुना
शिवादीनां रावैर्विसृजति च बाष्पं हिममयम् ॥१८॥

लभ्यं स्थैर्यं हरिरिति हरेर्नाम लब्ध्वैव नालं
दुष्टान् हत्वा हरिरिव हरे ! पालयित्वा च शिष्टान् ।
पादैः पेष्ट्वा लघु लघु ततस्तद्रिपोः शूर ! गुप्त्वा
चालिङ्गैनामवनिममृतं वर्षयद्भिः करैस्ते ॥१९॥

ह्य आगतायामुषसि विहायाह्वाय ते प्रियाम् ।
तत्सङ्गमध्य एव त्वम् अकाण्डे निरगाः किल ॥२०॥
अतस्त्वत्खण्डितां तस्यां सपत्न्यां त्वयि च क्रुधा ।
शयानां तां प्रबुध्यैनाम् अनुरुध्य च ते करैः ।
सुधावर्षिभिरालिङ्ग कोपनां ते कुमुद्वतीम् ॥२१॥
कामिनोर्देहि चान्योन्यं स्वयमाश्लेषनिर्वृतिम् ।
किं स्यादितोऽप्युपकृतिस्तयोरुरुतरोत्कयोः ॥२२॥
जीवय प्रापयन् कामं कामं पीयूषवर्षिभिः ।
करैस्ते भोगतृषितम् अनङ्गहतचातकम् ॥२३॥
कलानिधे ! विधो ! दक्षस्त्वं हि कामकलाविधौ ।
चकोरं कामिमिथुनं संसर्गक्षुत्पिपासितम् ॥२४॥

उद्वीक्षमाणमुदयं चिराय तव चन्द्रमः ।
चन्द्रिकामृतवर्षैस्ते कामं कामेन योजय ॥२५॥
जगत्प्रह्लादनादित्थं त्वं स्वैरन्वर्थकैः करैः ।
ऋणिकं त्वन्मुदादानात्सुधांशो ! कृतवाञ्जगत् ॥२६॥
प्रह्लादं तु जगज्जानद् व्यर्थनामानमात्मना ।
तत्प्रश्रयप्रथासंज्ञाप्रमुखाण्यखिलान्यपि ।
आरोप्य प्रत्युपकृतिनिर्ऋणं त्वयि वर्तते ॥२७॥
चन्द्रात्र लक्षय मुदा तनुते स्मितानि
त्वय्यात्मनो वरशरण्यमसौ रसाऽऽप्य ।
डिण्डीरमुख्यबहुवस्तुवलक्षवर्णो-
झोलालिभिस्त्वदुदयोपचितार्णवोत्थैः ॥२८॥
वर्धय वर्धय सोम ! कलास्ते
मूर्च्छय मूर्च्छय कामिहृदब्धिम् ।
हासय हासय सज्जनकुन्दं
पोषय पोषय मे च समज्ञाम् ॥२९॥
इतीव कलितो जीयादप्पणाचार्यसूरिणा ।
चन्द्रालोको यथा नित्यं चन्द्रालोको ददन्मुदम् ॥३०॥

———

# आश्रमधर्मः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः ]

इत्यनेन मुख्यकालमुक्त्वा—

आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥

इत्यनेन गौणकालं विहितवात् । यत्तु

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

इति मनुना विहितं तत् काम्योपनयनपरम् । याज्ञवल्क्य आह—

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ इति ।

सैके द्वादशे । अष्टम इति जन्मनः प्रभृत्यष्टमे वर्ष इति । इदञ्च विध्यन्तरं तेन न मनुविरोधः । एके आचार्याः । यथाकुलमिति कुलाचारानुसारेणोपनयनम् इत्याहुः । तथा चाऽऽपस्तम्बः

"अष्टमे ब्रह्मवर्चसकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकाममिति" । उपनयेदित्यर्थः । आचारस्य तु स्मृतितो दुर्बलत्वाद् गर्भषोडशं नैवातिक्रामेत् ।

अथोपनेतृक्रममाह वृद्धगर्गो यथा—

पितैवोपनयेत् पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥ इति ।

पितामहश्चाह—

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपानयेऽधिकारी स्यात् पूर्वाभावे परः परः ॥ इति ।

पूर्ववचनैकवाक्यत्वाद् भ्रातेति पितुः संस्कार्यस्यापीति बोद्धव्यम् । गोत्रजाग्रजा इति गोत्रजाः तदभावे येऽन्यगोत्रजा वयोज्येष्ठास्त इति । अत्र गोत्रजानामपि वयोज्येष्ठत्वं बोध्यम् । ननु—

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यञ्च सन्ध्योपासनमेव च ॥

इति मनुवचने, तथैव—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत ॥

इति याज्ञवल्क्यवचने च उपनीयेति क्त्वाच्श्रवणात् क्त्वाच्प्रत्ययस्यैककर्तृकत्व-नियमेन गुरोरेवोपनेतृत्वं युक्तम् । ततश्च वृद्धगर्ग-पितामहाभ्यां सहानयो-र्विरोधः । न च गुरुपदेनात्र पितैवोक्त इति वाच्यं शिष्यपदोपादानात । तथा सति शिष्यपदं विहाय पुत्रमित्येवोच्यताम् इति चेन्न त्त्वाप्रत्ययस्यैक-कर्तृकत्वनियमः प्रायेणेति बोद्धव्यम् आर्षवचने भिन्नकर्तृकत्वेऽपि तथा दर्शनात । तद् यथा—

बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत ।
प्रतिगृह्य तदाख्येयम् अभियुक्तेन धर्मतः ॥

इति याज्ञवल्क्यवचनेऽभियोक्त्रा प्रतिगृह्याभियुक्तेन तदाख्येयमिति भिन्न-कर्तर्यपि त्त्वाच्प्रत्ययः । तेन मनुयाज्ञवल्क्यवचनयोः पित्रा उपनीय माणवकं गुरुः शिक्षयेदित्यर्थः । अथवा पितुरेव पुत्रस्य सकलसंस्कारकर्तृत्वात तस्यैव प्रथमाधिकारित्वम् । अत एव गार्ग्यवचने पितैवेत्येवकारः । पितुरभाव-एव गुरोरप्यधिकारः । तथा च छान्दोग्ये गौतमसत्यकामसंवादे गौतम-स्योपनेतृत्वम् । अत एव—

उपनीतो माणवको वसेद् गुरुकुलेषु च ।
गुरोः कुले स्थितं कुर्यात कर्मणा मनसा गिरा ॥

इति हारीतवचने, तथा—

उपनीतो गुरोः कुले वसेन्नित्यं समाहितः ।
बिभृयाद्दण्डकौपिनोपवीताजिनमेखलाः ॥

इति व्यासवचनेऽपि पित्रोपनीतो माणवको गुरोः कुले वसेदित्येवार्थः कार्य इति ।

ब्राह्मणादिवर्णविशेषेषु चर्मवस्त्रयोर्वैशिष्ट्यमाह मनुर्यथा—

कार्ष्ण-रौरव-वास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शानक्षौमाविकानि च ॥ इति ।

ब्राह्मणादयस्त्रयो ब्रह्मचारिणः कृष्णमृगरुरुच्छागचर्माणि क्रमेणोत्तराणि वसीरन्, तथा शनक्षुमामेषलोमोद्भवानि अधोवसनानि च क्रमेण परिदधीरन्नित्यर्थः। अत्राहाश्वलायनोऽपि यथा "अहतेन वाससा संवीतमैनेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम्। यदि वासांसि वसीरन् रक्तानि वसीरन काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्य इति"। अहतलक्षणमाह प्रचेता यथा—

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद् विजानीयात् सर्वकर्मसु पावनम् ॥ इति ।

तथाच सूत्रार्थः—प्रावरणं वासः सर्वेषां ब्राह्मणादीनामहतरूपं साधारणम्। यदि त्वजिनमेव प्रावरणं स्यात तदा ब्राह्मणमैनेयेनाजिनेन क्षत्रियन्तु रौरवेण वैश्यन्त्वाजेनाजिनेन संवीतं कुर्यादित्यर्थः। एतेन प्रावरणस्य वासोऽजिनयोर्विकल्प उक्तः। यदीति पदं वासांसीति रक्तानीति चोभयान्वयि। वाससां कौपिनेन सह विकल्पः। तथा च व्यासेन ब्रह्मचारिप्रकरणे "बिभृयाद्दण्डकौपिनोपवीताजिनमेखला" इत्यनेन कौपिनं विहितम्। शौनकोऽप्याह—

क्रमशश्चाजिनादीनि भिक्षापात्रं जलस्य च ।
कौपिनाच्छादनार्थाय मौञ्जीं कार्पासिकीं द्विजः ।
संभरन त्रिवृतां तावद् वाससी वाहते पुनः ॥ इति ।

त्रिवृतां मेखलामित्यर्थः। कौपिनाच्छादनार्थाय कौपिनबन्धनार्थम्। अत्रापि कौपिनेन सह वाससो विकल्प उक्तः। अन्यत्रापि स एव यथा—

तत्रादौ परिधानार्थं कल्पयेन्नववस्त्रकम्।
शिरोऽवगुण्ठनञ्चैव नवमन्यं प्रकल्पयेत्॥ इति।

शिरोऽवगुण्ठनं शिरःप्रावरणवासः। अत्रापि वासो विहितम्। यदि रक्तानीत्यत्र च शुक्लेन सह रक्तस्य विकल्पः। तथा च यमः—

क्षौम-कार्पास-कुतप-चर्म-वल्कल-कम्बलाः।
सर्वन्तु धारयेच्छुक्लं वासस्तत परिधानिकम्॥ इति।

कुतपः छागः। वशिष्ठ आह—"शुक्लमहतं वासो ब्राह्मणस्य कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्य सर्वेषां वा तान्तवमरक्तम्।" इति। गौतम आह—"वासांसि शानक्षौमचीरकुतपाः सर्वेषां कार्पासं वा विकृतं काषायमप्येके ब्राह्मणस्य माञ्जिष्ठं हारिद्रमितरयोरिति"। अत्र "सर्वेषां कार्पास"मित्यनेन "वसीरन्नानुपूर्व्येण शानक्षौमाविकानि चे"ति मनुना यद् विहितं, तथा "वासांसि शानक्षौमाविकानी"ति पारस्करेण यद् वासोविधानं कृतं तद्विकल्प उक्तः। विकृतं रक्तमित्यर्थः। इतरयोः क्षत्रियवैश्ययोः। आपस्तम्ब आह यथा—"वासः शानक्षौमाविकानि काषायञ्चैके वस्त्रमुपदिशन्ति ब्राह्मणस्य माञ्जिष्ठं राजन्यस्य हारिद्रं वैश्यस्ये"ति। सर्वत्रैव कषायेण रक्तं काषायम् मञ्जिष्ठया रक्तं माञ्जिष्ठं हरिद्रया रक्तं हारिद्रमिति। रागश्चात्र शुक्लस्य वर्णान्तरत्वापादानम्।

अथोपवीतम्। तत्र मनुः—

कार्पासमुपवीतं स्याद् विप्रस्योर्द्ध्ववृतं त्रिवृत।
शनसूत्रमयं राज्ञो वैश्यस्याविक-सूत्रजम्॥ इति।

त्रिवृदिति नवसूत्रकमित्यर्थः। नव वै त्रिवृदिति श्रुतेः। विष्णुराह "कार्पासशानाविकान्युपवीतानि वासांसि वे"ति। पैठिनसिस्तु "कार्पासोपवीतं सर्वेषा" मिति सूत्रेण सर्वेषामेव कार्पासोपवीतं विहितवान। उपवीतलक्षणमाह कात्यायनो यथा—

त्रिवृदूर्द्ध्वं वृतं कार्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतं चोपवीतं स्यात् तस्यैको ग्रन्थिरुच्यते ।। इति ।

ऊर्द्ध्ववृतलक्षणं यथा—

करेण दक्षिणेनोर्द्ध्वगतेन त्रिगुणीकृतम् ।
वलितं मानवैः सूत्रं शास्त्र ऊर्द्ध्ववृतं स्मृतम् ।। इति ।

ऊर्द्ध्वगतेन दक्षिणेन करेण यद् वलितं तदूर्द्ध्ववृतमित्यर्थः । गृह्यपरिशिष्टेऽपि "उपवीतमयुग्मशरं विषमतन्तुकं त्रिवृद् यज्ञोपवीतम्" इति । एकं सूत्रमयुग्मशरं त्रिगुणीकृत्य वलितं पुनस्त्रिवृत् क्रियते त्रिगुणीकृत्य वल्यते तन्नवतन्तुकम् उपवीतं भवति । तद्विषमतन्तुकं त्रिगुणीकृतमेकेन तन्तुना बद्धं सदुपवीतमित्युच्यते इत्यर्थः ।

देवलोऽप्याह यथा—

यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम् । इति ।

यज्ञोपवीतनिर्माणप्रकारमाह देवलो यथा—

कार्पासकं समादध्याच्छुचि क्षेत्रे विशोधितम् ।
त्रिवृतश्च तथा कार्यं ब्राह्मण्या सूत्रकं कृतम् ।। इति ।

ब्राह्मण्या कृतं सूत्रकं ब्राह्मणेन त्रिवृतं कार्यमित्यर्थः । ब्राह्मण्या इत्युपलक्षणं तेन क्षत्रियादिजातीयानामुपवीतसूत्रं तत्तज्जातीयस्त्रीभिर्निर्मातव्यमिति बोध्यम् ।

सूत्रस्य परित्याज्यत्वं स्कन्दे यथा—

विधवारचितं सूत्रमनध्याये कृतश्च यत् ।
विच्छिन्नं वाप्यधो यातं भुक्तनिर्मितमुत्सृजेत् ।। इति ।

विधवानिर्मितसूत्रनिषेधस्तु सधवानिर्मितसम्भवे । असम्भवे तत्कृतस्यापि ग्राह्यत्वात् ।

तदुक्तं स्मृतिसारे

छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् ।
विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचिः ।। इति ।

ग्रन्थिस्थानमाह यथा —

देवागारेऽथवा गोष्ठे नद्यां वाऽन्यत्र वा शुचौ।
सावित्र्यं त्रिगुणं कुर्यान्नवसूत्रन्तु तद् भवेत् ॥ इति ।

नद्यां नदीतीरे। यज्ञोपवीतपरिमाणमाह बृहन्मनुर्यथा—

स्तनादि नाभिपर्यन्तं ब्रह्मसूत्रं पवित्रकम् ।
न्यूने रोगप्रवृद्धिः स्यादधिके धर्मनाशनम् ॥ इति ।

वशिष्ठश्चाह—

नाभेरूर्द्ध्वमनायुष्यमधो नाभेस्तपक्षयम् ।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ इति ।

देवलोऽपि—

स्तनादूर्द्ध्वमधो नाभेर्न कर्त्तव्यं कथञ्चन । इति ।

आश्वलायन आह—

आ कटेस्तत्प्रमाणं स्याद्दीर्घं तु सुस्थितं तथा ।
कनिष्ठाङ्गुलवत् स्थूलं तदर्द्धं वा त्रिवृच्छुभम् ॥ इति ।

कात्यायनश्चाह—

पृष्ठदेशे च नाभ्याश्च धृतं यद् विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥ इति ।

अत्र यज्ञोपवीतपरिमाणभेदश्च ऋषिभिर्यदुक्तस्तद् वेदभेदाद् बोद्धव्यः ।

यज्ञोपवीतनिरुक्तिमाहाश्वलायनो यथा—

यज्ञार्थः परमात्मा य उच्यते चैव होतृभिः ।
उपवीतं ततोऽस्येदं तत् स्याद् यज्ञोपवीतकम् ॥ इति ।

तत्त्यागनिषेधमाह स एव यथा—

ज्ञातृविज्ञेययोरैक्यमविजानन् द्विजोत्तमः ।
न त्यजेदात्मनः सूत्रं ब्राह्मं ब्रह्मविनिर्मितम् ॥ इति ।

ज्ञातृ-ज्ञेययोरैक्यज्ञानन्तु संन्यासाश्रम एव जायते । ततश्च तस्मिन्

आश्रमे उपवीतत्याग उच्यते। आश्रमविशेषेणोपवीतसंख्याविशेषमाह भृगुर्यथा—

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते।
एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः॥ इति।

इतरयोर्गृहस्थ-वानप्रस्थयोः। आश्वलायनेन यत् संन्यासिनां यज्ञोपवीतत्याग उक्तस्तद् ये विरजाहोमं कृत्वा वह्नौ यज्ञोपवीतं जुह्वति तद्विषयकमेव। अन्येषां संन्यासिनामेकं यज्ञोपवीतं धार्यमेव। अथ वैकदण्डिनां शिखासूत्रत्याग एव विधिः त्रिदण्डिभिस्तु एकमुपवीतं धार्यं बौधायनादिषु तादृशविधिदर्शनादिति केचित्। फलन्तु तुल्यमेव सिद्धान्ते। वशिष्ठ आह—

स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम्।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः॥ इति।

देवलोऽपि—

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्त्ते च कर्मणि।
तृतीयमुत्तरीयार्थे वस्त्रालाभे तदिष्यते॥ इति।

यत्तु देवलः—

एकयज्ञोपवीतेन जपहोमादि यत् कृतम्।
तत् सर्वं विलयं याति न पितॄंश्चोपतिष्ठते॥

इत्युक्तवान् तद् गृहस्थाश्रमविषयकमेव।

( क्रमशः )

---

# कालसिद्धान्तदर्शिनी

( षोडशाब्दस्य चतुर्थसंख्यामनुवर्त्तते )

[ निबन्धकः—श्रीहाराण-चन्द्रभट्टाचार्यः शास्त्री ]

मानसोल्लासे पातञ्जलयोगसूत्रप्रतिपादितात् सेश्वरसांख्यमतादतिरिक्तं सेश्वरसांख्यमतमन्यविधं प्रदर्शितम्। पातञ्जलमते कापिलमतसिद्धाः पदार्था अङ्गीकृताः। परन्तु कापिलसिद्धान्ते परमेश्वरो नाङ्गीक्रियते, पातञ्जलसिद्धान्ते तु परमेश्वरसत्ताऽङ्गीकृता। स परमेश्वरोऽपि तेषां पञ्चविंशतिसंख्याकेभ्यस्तत्त्वेभ्यो नातिरिक्तं तत्त्वं किन्तु पुरुष एवान्तर्भावस्तस्य। तथाच पातञ्जलयोगसूत्रम्—क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति * ( १ पादे )

मानसोल्लासोक्तं पुनः सेश्वरसांख्यमतमित्थं* वर्तते—मायाऽविद्यादिशब्द-वाच्या मूलप्रकृतिः। तत्र मायायां ब्रह्मचैतन्यप्रतिविम्वसम्पर्केण महत्तत्त्वं

---

* सूत्रार्थस्तु—अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेश इति पञ्च क्लेशाः, कर्मात्र तज्जन्यमदृष्टम्, विपाकः कर्मणां फलम्, आशयः संस्कारः, एभिरसम्वद्धः पुरुषविशेषः, भोक्तृपुरुषेभ्यो विलक्षणो यः पुरुषः स एवेश्वर इति।

* माया प्राधानव्यक्तमविद्याऽज्ञानमक्षरम्।
अव्याकृतं च प्रकृतिस्तम इत्यभिधीयते ॥
मायायां ब्रह्मचैतन्यप्रतिबिम्बानुषङ्गतः।
महान् कालः पुमांसः स्युर्महत्तत्त्वादहंकृतिः ॥
तामसात् स्युरहङ्कारात्खानिलाग्न्यम्बुभूमयः।
शब्दः स्पर्शश्च रूपं च रसो गन्धोऽप्यनुक्रमात् ॥
इन्द्रियाणां च विषया भूतानामपि ते गुणाः।
सात्त्विकात् स्यादहङ्कारादन्तःकरणधीन्द्रियम् ॥

कालोऽनन्ताश्च पुरुषा जायन्ते। महत्तत्त्वादहङ्कार उत्पद्यते। अहङ्कारस्तावत्त्रिविधः, तामसो राजसः सात्त्विकश्चेति। तामसादहङ्कारात्पृथिव्यादीनि पञ्च महाभूतानि शब्दस्पर्शरूपरसगन्धाश्च समुत्पद्यन्ते। सात्त्विकादहङ्कारादन्तःकरणं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानीति पञ्च ज्ञानेन्द्रियाणि संजायन्ते। तत्रैकमेवान्तःकरणं संशयनिश्चयगर्वस्मरणरूपविभिन्नकार्याश्रयतया यथाक्रमं मनो बुद्धिरहङ्कारश्चित्तमिति चतुर्धा व्यपदिश्यते। राजसात्तावदहङ्कारात् प्राणोऽपानः समान उदानो व्यानश्चेति पञ्च प्राणाः, वाक् पाणिः, पादः, पायुरुपस्थं चेति पञ्च कर्मेन्द्रियाणि जायन्ते। सेश्वरसांख्यानामेतेषां मते चतुर्विधमन्तःकरणं पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि प्राणाद्याः पञ्च वायवो महाभूतानि पञ्चेति संकलनया चतुर्विंशतिस्तत्त्वानां भवति। अत्र मते कारणकोटिप्रविष्टानां मायाब्रह्मप्रभृतीनामन्तःकरणादेरुपरि स्थितानां पृथक्पदार्थरूपेण गणना न भवति। यतस्तेषां कारणत्वेन सूक्ष्मत्वात्कार्येष्वनुस्यूतत्वाच्च स्थूलदृशामस्मदादीनां

---

मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया अमी॥
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियं विदुः।
राजसात् स्युरहङ्कारात् कर्मेन्द्रियसमीरणाः॥
कर्मेन्द्रियाणि वाक् पाणिः पादः पायुरुपस्थकम्।
वचनादानगमनविसर्गानन्दसंज्ञकाः॥
विषयाः............
प्राणोऽपानः समानश्चोदानव्यानौ च वायवः।
भूतैस्तु पञ्चभिः प्राणैश्चतुर्दशभिरिन्द्रियैः॥
चतुर्विंशतितत्त्वानि सांख्यशास्त्रविदो विदुः ॥मानसोल्लासे २।३१-४१

अत्र ये विशेषा वेदान्तपरिभाषायां प्रतिपादितास्ते सर्वे मानसोल्लासादेवाहृताः सन्तीति द्रष्टव्यम्।

कार्येभ्यः पृथक्तयाऽनुभवविषयत्वाभावाच्च न स्वातन्त्र्येण गणनार्हताऽङ्गीक्रियते। एतस्मिन् सेश्वरसांख्यमते मायायां ब्रह्मचैतन्यप्रतिबिम्बविशेषः कालः। सत्त्वरजस्तमसां गुणानां समपरिणामात्मनाऽवस्थानं प्रकृतिः तादृशसाम्यावस्थैव प्रलयावस्था ; गुणानां साम्यावस्थातः प्रच्यवनमेव सृष्टिः ; सेयं साम्यावस्थाप्रच्युतिरेव क्षोभशब्देन व्यपदिश्यते कालश्चायं गुणानां क्षोभसम्पादकोऽभ्युपगम्यते सेश्वरसांख्यवादिभिरेभिः *।

मतमेतत्सेश्वरसांख्यानामिति वृत्तान्तटीकायां श्रीमद्रामतीर्थेन व्याख्यातमपि संदेहं नातिवर्तते। यतो विमृश्यमानमिदं शङ्करभगवत्पादप्रचारितमद्वैतमतमिवाऽऽभाति। संदेहकारणं चान्यदपि विद्यते—एतन्मते मायायां ब्रह्मचैतन्यप्रतिबिम्बः काल इत्यस्त्यभ्युपगमः। प्रतिबिम्बश्चायं किंविध इति विचारणायां सम्बन्धविशेषश्चेद्वेदान्त्येकदेशिमते प्रवेशः। तथाहि, काश्मीरकसदानन्दप्रणीतायामद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारे प्रतिपादितम् †—

मायाचित्सम्बन्धः काल इति तदेकदेशिनः (वेदान्त्येकदेशिनः)। मतेऽस्मिन्नङ्गीकृतं जीवस्य ब्रह्मप्रतिबिम्बत्वमपि वेदान्तिनामेव सम्मतम् ‡ इव प्रतिभाति। पौराणिकमपि मतं प्रतिपादितं वर्तते (२।४७)। तस्मात्सेश्वरसांख्यनाम्ना विवृतं मतमेतदद्वैतमतमेवेति प्रतिभाति। श्रुतिप्रतिपादितस्याद्वैतमतस्य ज्ञानप्रधानत्वाज्ज्ञानवाचकसंख्याशब्दपरिनिष्पन्नसांख्यशब्देन व्यपदेशोऽपि नासमञ्जसः।

---

* कालो गुणक्षोभकः —वृत्तान्तव्याख्या ३२

† गौडब्रह्मानन्देनापि साभासाविद्यायाः कालत्वमद्वैतमते प्रत्यपादि सिद्धान्तबिन्दुव्याख्यायाम्।

‡ प्रतिपादितं चैतद्विस्तरशः पञ्चपादिकाविवरणे प्रथमवर्णके संक्षेपशारीरके च। परन्तु मतयोरेतयोरास्ते किञ्चिद् वैलक्षण्यम्। संक्षेपशारीरकमते जीवेश्वरौ द्वावपि प्रतिबिम्बरूपौ बिम्बभूतं सर्वानुस्यूतं ब्रह्मचैतन्यम्। विवरणमते बिम्बभूतं चैतन्यमेवेश्वरपदवाच्यम्, मायायां तदीयप्रतिबिम्बस्तु जीव इति।

तत्र मते त्रिंशत् पदार्था अभ्युपगम्यन्ते। ते च महीसलिलतेजोवाय्वाकाशात्मकानि पञ्च महाभूतानि प्राणोऽपानः समान उदानो व्यानश्चेति पञ्च प्राणाः, मनोबुद्धिरहङ्कारश्चित्तञ्चेति चत्वार्यन्तःकरणानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणीत्येवं चतुर्विंशतिस्तत्त्वानि पूर्वोक्तानि महान् * कालः † प्रधानं ‡ माया अविद्या §पुरुषः §§इत्यपरे षट्। एतेषां सङ्कलनया त्रिंशत् संख्या सम्पद्यते

एतदीयसिद्धान्ते कालस्य परमात्मनश्चेष्टारूपत्वमङ्गीक्रियते इति रामतीर्थीयात् सिद्धान्तभूतव्याख्यानादवसीयते। परमेश्वरस्तु पौराणिकसिद्धान्तेऽभ्युपगतस्तस्य चेष्टायाः कालत्वस्वीकारात्, तदीयांशस्य पुरुषपदवाच्यजीवत्वाभ्युपगमाच्च। परन्तु स परमेश्वरः पदार्थकोटौ न गणितः, सर्वेभ्योऽपि पदार्थेभ्यस्तस्य सूक्ष्मरूपत्वेन जागतिकव्यवहारकोटावनवताराद् व्यवहारोपयोगिपदार्थानामेवानुक्रमणादिति विभावनीयं सूक्ष्मधियाम् * * *।

पौराणिकमतापेक्षया शैवमतस्य विशेषस्तत्र दर्शितः। पौराणिकसिद्धान्तसिद्धेभ्यस्त्रिंशत्संख्याकेभ्योऽन्ये षट् पदार्थाः शैवागमे स्वीक्रियन्ते। सर्वाधिष्ठानं सदाशिवाख्यं निर्गुणं तत्त्वं बिन्दुनाम्ना प्रसिद्धम्। तस्यैव बिन्दोः प्रणवरूपेण सर्वार्थप्रकाशकत्वेनाभिव्यक्तं स्वरूपान्तरं नादो नाम। मायाविद्याभ्यामन्या सर्वाधिष्ठानसामर्थ्यरूपा शक्तिस्तया समुपेतो लीलाविग्रहधारी परमेश्वरः शिवशब्दाभिधेयः। एतस्य परमेश्वरस्य द्वाववस्थाविशेषौ

---

* महान् प्रकृतेराद्यो विकारः।—

† काल ईश्वरस्य चेष्टा। ‡ प्रधानं मूलप्रकृतिः।

§ स्वाश्रयमव्यामोहयन्ती कर्त्तुरिच्छामनुसरन्ती माया, तद्विपरीता त्वविद्येति भेदः।

§§ पुरुषः परमात्मनोंऽशः। वृत्तान्तव्याख्या २।४१

महान् कालः प्रधानं च मायाऽविद्ये च पूरुषः।
इति पौराणिकाः प्राहुस्त्रिंशत्तत्त्वानि तैः सह॥

—मानसोल्लासे २।४१-४२

शान्तातीतौ। पौराणिकसम्मतत्रिंशत्तत्त्वसहिता एते षट् पदार्थाः शैव-सिद्धान्तसम्मताः। तथा चैतेषां मते तत्त्वापराभिधानाः षट्त्रिंशत्पदार्थाः स्वीकृताः *।

पौराणिकसिद्धान्तापेक्षयैतेषां सिद्धान्ते कालविषये नास्ति कश्चन विशेषः ; कालविषये पौराणिकसिद्धान्तस्यैवैतैरभ्युपगतत्वात्।

इदं च शैवमतं प्रत्यभिज्ञादिशैवमतापेक्षया विलक्षणमिति सुधीभि-राकलनीयम्। ( क्रमशः )

---

# श्रीश्रीअद्वैतचरितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीहरदास-वसु भक्तिसागरः ]

[ सम्मिलनम् ]

स्वर्णोज्ज्वलप्रभः प्रोतफुल्लाम्बुजशोभो दीप्यन्मधुरमङ्गलमूर्त्तिः प्रेमरस-पूर्णः पश्यतां चित्तचौरो नवकिशोरश्चम्पकगौरो गौरो जगन्नाथमिश्र-पुरन्दरस्य द्वितीयपुत्रः प्रथमतो वल्लभाचार्यस्य कन्यां श्रीलक्ष्मीप्रियादेवी-मुदुह्य विद्यारसप्रदानाय पूर्वभूमिं श्रीहट्टं संजगाम। तत्र मातामहीं शोभादेवीं निजदुर्लभदर्शनदानेन कृतार्थीकृत्य भाग्यवन्तं तपनमिश्रमाश्वास्य तस्य काशीगमनं प्रत्यादिश्य च कीर्तनानन्देन सह विहरन् नवद्वीपं प्रत्यागतः। तस्यागमनतः प्राक् श्रीप्रिया लक्ष्मीदेवी सर्पदष्टा शचीं शून्य-गृहे शोकानले निक्षिप्य वैकुण्ठं प्रतस्थे।

---

* विन्दुनादौ शक्तिशिवौ शान्तातीतौ ततः परम्।
षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैः॥—मानसोल्लासे।२।४२-४३

गृहमागतो गौरचन्द्रो मातुर्दुःखमपाकर्तुं सततं चेष्टते। विद्यारसमग्नः प्रभुः पण्डितान् पराजेतुं सततमुत्सहते। तस्य समानः पण्डितो नवद्वीप-मध्ये इदानीं नासीत्। पुरटपद्मप्रभः प्रभुः पण्डितान्निनन्दन्नगरे भ्रमति। श्रीअद्वैतप्रभृतयो भक्तिरथसारथयस्तं भक्तिविषये उपदिशन्ति—भक्तो भवत्विति तं सनिर्बन्धमनुरुन्धते। श्रीगौरश्च भोः अपेक्षध्वम्, ईदृशो वैष्णवो भविष्यामि येन अजो भवश्च मां पूजयिष्यति। मदनुपदमेव यूयं चलिष्यथ। प्रेम्णा उत्सारिता युष्माकं पङ्केरुहनयननिस्यन्दिनां पयसां धारा नवद्वीपभूमिमिमां पङ्किलयिष्यन्ति। इति सोपहासमभिधाय सः अन्यदिशं प्रति चलितः। अद्वैतप्रभुरपि मर्म अबुद्ध्वा "हरि हरि" इत्युक्त्वा हाहारुतिं करोति।

गौरीभूय अवतीर्णो हरिः—श्रीगौरहरिः कियता विलम्बेन द्वितीयवारं विवाहमकरोत्। श्रीसनातनमिश्रस्य अनवद्याङ्गीमसामान्यरूपलावण्यां कन्यां परिणीय श्रीगौरहरिस्तया सह गृहधर्ममाचरति, मातुश्चरणयुगलं सेवते, दरिद्रदर्शं ददाति चेत्येवम्। श्रीगौराङ्गप्रेयसी श्रीविष्णुप्रिया देवी मूर्तिमती भक्तिरेव, गौरभक्तिप्रदाने सा स्वरूपशक्तिस्वरूपिणी।

कियद्दिनेषु गतेषु श्रीगौरहरिः गयां गत्वा पितुः परेतकार्यं समाप्य पुरीश्वरेण दीक्षितो नवानुरागोन्मत्तो गृहमागतः। "हन्त शून्या त्रिलोकी, दर्शनं दत्त्वा क्व गतः स" इत्येवं वदन्नाक्षिपन् प्रेमपीयूषपानोन्मत्तः शचीसुतः क्षणं मूर्च्छति, क्षणं दिशि दिशि धावति। क्षणं पीनं क्षणं क्षीणम् उद्दाम-नामावलीं कीर्तयति—दुर्विज्ञेयमहिमा प्रभुर्मातुः पादयोर्निपत्य रोदिति—प्रेमाब्धौ निमज्जितः काकुशतं करोति, क्षणं कृष्णावेशान्नटति—क्षणं राधापदे रतिं विदधाति। "पुत्रो वातुलत्वं गत" इति विचिन्त्य माता विषीदति। अन्ये "शिवाघृत"प्रयोगव्यवस्थां कुर्वन्ति। केवलं श्रीवासपण्डितो 'न रोग एषोऽस्य महाभक्तियोग' इति निश्चित्य गौरजनन्यै प्रबोधं ददौ। पुनः प्रभु-र्यदृच्छया स्वस्थोऽभूत्। माता स्नुषया सह सुखेनास्ते। श्रीवासभवने प्रभुर्भक्तगणैर्मिलित्वा सङ्कीर्तनरङ्गमारभते स्म। सर्वे भक्ता गौरनिधेः

सङ्गं प्राप्य गौरप्रेमाब्धौ निमग्नास्तमानन्दनिधिं परिवृत्य मधुरं हरेर्नाम सनृत्यं गायन्ति। एकदा नन्दनगृहे गौरनित्यानन्दयोर्मधुरमिलनमभूत्। आनन्दकन्द-श्रीनित्यानन्दनस्य श्रीअङ्गणे आगमनेन सङ्कीर्तनानन्दमाधुरी द्विगुणाऽभवत्। भगवता सह गोष्ठी चमत्कारकारिण्येव।

एकदा ईश्वरावेशेन श्रीगौरहरिर्निजभावप्रकाशं कृत्वा विष्णुखट्वाया-मुपविश्य शिरो दोलयन् व्याहरति आज्ञापयति च—हे रामाइ-पण्डित, अत्रागच्छ, मम वचनं शृणु—सत्वरं शान्तिपुरं गच्छ। किमिति "नाडा" न आयाति। तत्र गत्वा मम प्रकाशवार्तां तस्मै निवेदय, एवं श्रावय च— "यस्य प्रभोः कृते त्वं प्रभूतमाराधनं कृतवान्, यस्य प्रभोः कृते त्वं प्रभूतं रोदनं कृतवान्, यस्य प्रभोः कृते त्वं प्रभूतमुपवासं कृतवान्, स प्रभुस्तवात्र प्रकाशमानः। भोः पण्डित ! गच्छ, सोऽद्वैतः सस्त्रीकः पूजोपहारैः सह सत्वरमत्र ममान्तिकमागच्छतु"। रामाइ-पण्डितः यथा आज्ञापयतीति प्रत्युच्य परमाज्ञां शिरसि धृत्वा शान्तिपुरं प्रातिष्ठत।

"प्रभोराज्ञा आयाति" इति सर्वज्ञः श्रीअद्वैतस्तस्य उपस्थानतः पूर्वमेव ज्ञात्वा तथावदत्। पुनस्तेन भङ्ग्या अभाणि—गोस्वामी ( श्रीपरमेश्वरः ) कदा कुत्र मनुष्याणां मध्य आयाति ? स नदीयायामवतीर्ण इति केन शास्त्रेण प्रमाण्यते ?

श्रीअद्वैतदेवस्य चरित्रगाम्भीर्यं रामाइ-पण्डितेन सम्यग् विदितम्। स केवलं तूष्णीम्भूयाहसत्। अद्वैतप्रभुणा पुनरुक्तम्—"भोः पण्डित ! वद वद, किमर्थं त्वया मत्सकाशमागम्यते"। रामाइ श्रीगौराङ्गस्य श्रीमुखोद्गीर्णं श्लोकबद्धवचनं यथावद् वाचयित्वा कृताञ्जलिरासीत्। महाप्रभोः श्रीआज्ञावाणीं प्रणिधानेन श्रुत्वा गौरआना-गोस्वामि-प्रभुः रुद-न्नूर्ध्वबाहुर्नृत्यन्ननारतं—"मयानीतो मयानीत" इत्याकुलमुक्त्वा हुङ्कारं कुर्वन्नमूर्च्छत्। अद्वैतपत्नी जगन्माता श्रीसीतादेवी श्रीअच्युतानन्दप्रभृतय-स्तस्याः पुत्राश्च सर्वे मिलित्वा रोदितुमारेभिरे। एतेषां प्रेमाश्रुधाराभि-स्तद्भवने नवप्लावनमवर्तत।

संज्ञां लब्ध्वा श्रीअद्वैतचन्द्रो जिज्ञासते—"पण्डित! कथय कथय मयात्र किं कर्तव्यमि"ति। एवं पृष्टः पण्डितोऽञ्जलिं रचयित्वा निवेदयति,—"प्रभो! पूजोपहारैः सह सस्त्रीकस्य भवतो गमनाय आदेश" इति। तन्निशम्य प्रभुरभिदधाति—"हे पण्डित! त्वां प्रेरयिता श्रीशचीनन्दनो यदि कृपया निजैश्वर्यं मह्यं प्रदर्शयेत यदि निज-श्रीचरणयुगलं स्वयमुत्तोल्य मम शिरसि स्थापयेत् तर्हि स मम प्राणनाथ इति निश्चितमवगमिष्यामि"। रामाइ-पण्डितेन भणितम्—"अहं किं करिष्ये? यदि भाग्यं भवेत् तन्निरीक्षिष्ये। अत्र भवत इच्छा न विफलीभविष्यतीति मन्ये। यतो भवत्कारित एव प्रभोरेषोऽवतारः। मतकृतार्थीकरणाय त्वरया चलतु।

धूपचन्दनमृगमदादिगन्धं फुल्लमल्लिकादिमाल्यं दधिक्षीरनवनीतामिक्षाहैयङ्गवीनादि गव्यं ताम्बूललवङ्गकर्पूरादिमुखवासद्रव्यं सह नीत्वा प्रभुः श्रीसीतानाथः सस्त्रीकः श्रीनवद्वीपं प्रत्यगच्छत। शान्तिपुरेश्वरः पुनः पथि रामाइ-पण्डितमभणत—"हे पण्डित! मा तावदिदं प्रभोर्गोचरीभूतं कुरु यदहं नन्दनाचार्यगृहे सुगुप्तं लुकायितः स्थास्यामि" इति। नवद्वीपमासाद्य रामाइ-पण्डिते अन्तरिते श्रीसीतानाथो नन्दनगृहं प्राविशत।

श्रीवासाङ्गणे भावाविष्टः प्रभुः श्रीगौराङ्गसुन्दरः सहसा हुङ्कृत्य विष्णुखट्वामधिकुर्वन्नुपविष्टोऽभूत। सर्वे पारिषदा भक्ताश्च पंक्तिशस्तूष्णीमासते। श्रीगौरभगवान तथाभूतः शिरो धुन्वन प्रकाशं ब्रूते—"नाड़ा आयाति, नाड़ा आयाति। नाड़ा मम देवतात्वं द्रष्टुमीहते"। मर्मावबुध्य श्रीनित्यानन्दप्रभुस्तस्य श्रीमस्तकोपरि छत्रमधरत, श्रीगदाधरः सकर्पूरताम्बूलमधराग्रतोऽधरत। सर्वे भक्ताः स्वाभिलषिताः सेवाः प्रत्येकं कर्तुमारेभिरे। तस्मिन्नवसरे श्रीरामाइ प्रभोः पुरतः समागतः। तं दृष्ट्वा भावनिधिः प्रभुस्तस्य कथनतः प्रागेव अकथयत—"नाड़ा नन्दनगृहेऽवस्थाय मां परीक्षितुं त्वामत्र प्रेरितवान्"। प्रभोराज्ञया रामाइ श्रीअद्वैतसन्निधौ गत्वा सर्वं तस्मै न्यवेदयत्। अद्वैतः प्रोद्गत-रोमाञ्चाश्रुधारः सगद्गदं रुदन्नतित्वरं सस्त्रीको रामाइ-पण्डितेन सह आगत्य श्रीगौरचन्द्रपादपीठस्य

पुरतो निपत्य लुलोठ। साश्रुगद्गदः स्तोत्रादिकं पपाठ च। तेन स्तुतः प्रभुः पुरटपद्मकान्तिः श्रीशचीसूनुश्चरणोपान्ते पतितं गलदश्रुधाराभिः स्नातं "नाड़ा" इति नामग्राहमभ्यर्थितं सीतानाथं दृष्टिप्रसादेन स्नापयित्वा तस्य मस्तके निजदक्षिणचरणमुत्तोलयन् ददौ।

श्रीगौराङ्गपदाब्जस्पर्शदानोत्सवेन लाभानन्दनस्य मनोरथः पूर्णोऽभूत्। करुणासिन्धुर्निन्दितेन्दुः श्रीगौरहरिर्बिम्बाधरे मधुरहासं वितन्वन्नुवाच—"नाड़ा, मम सङ्कीर्तनेन नृत्य। सहसा प्रभोराज्ञया तुमुलं कृष्णनामानुकीर्तनमारब्धम्। आनन्दाश्रुतरङ्गिणीतरङ्गतालैः शान्तिपुरप्रभुर्नर्तितुमारेभे। शङ्करावतारः शिरसि चरणार्पणं करोति—अहो, एषोऽयं कः ? एष एको नवीनो युवा। एषोऽयं नवद्वीपावतारः। अद्वैतकन्धरायां श्रीचरणस्थापनेन जगत्प्रभुः श्रीविष्णुप्रियाप्राणनाथो ज्ञानस्य मूल्यमल्पयन् स्वभक्तिश्रियो जयं कीर्तयति। ज्ञानवापी भक्तितरङ्गिण्या मूर्तिं दधती प्रवहति।

श्रीमन्महाप्रभुर्भावावेशेन वरदमूर्तिः ऊर्द्ध्वं कूर्दन्निव वदति—"भो भो भक्ताः, वरं निःसाध्वसं वृणुध्वम्। तेन युष्माकं भद्रं भविष्यति। भक्ताः प्रत्येकं यथेप्सितमेकैकं वरमगृह्णन्। तदा विश्वदयालुः श्रीअद्वैतप्रभुः किमयाचत, तत् शृण्वन्तु—

मूर्खनीचदरिद्रान् अनुगृह्णातु नररूपं परं ब्रह्म। श्रीअद्वैतस्य जीवेषु कीदृशी करुणा सर्वे सकृद्भावयन्तु बन्धुजनाः। यथा रुचितं देवायेत्युक्त्वा प्रभुः सर्वेश्वरो गौरचन्द्रस्तथास्त्विति वदन् जहास।

---

# शैशव-स्मृतिः *

[ निबन्धिका—कुमारी श्रीज्योतिर्मयी भारती ]

( १ )

तारुण्य-भास्कर-कर-द्युति-लब्ध-बोधा
रूपं न्यरूपयमलं नव जीवनस्य ।
माया-नटेश-महिमानमिहाततानां
श्रान्ता नितान्तमधुना विगतं स्मरामि ॥

( २ )

हन्तैतदद्य सहसा रहसि स्थितायाः
दूरे गतं मम मनो नितरामशान्तम् ।
मन्ये विनेतुमचिरोपनतं वियोगं
हा हा श्मशानमिव पश्यति शैशवस्य ॥

( ३ )

हा चीर-निर्मित-वपुः क नु पुत्रिका मे
लीला-स्थली-परिणयोत्सव-नायिका सा ।
कर्मावसान-समये करुणं स्मरन्तीं
सम्भाषते किमधुना नहि मातरं माम् ॥

( ४ )

प्रीत्यास्पदानां कलहे पटूनां
क्षणे क्षणे भिन्न-मतानुगानाम् ।
सा पाठ-शाला क गता सखीनाम्
आलाप-सम्मेलन-केन्द्र-भूमिः ॥

---

* निबन्धोऽयं निखिल-नारी-निबद्ध-निबन्धानाम् अनुसन्धाने व्यापृतस्य श्रीमतो यतीन्द्रविमल-राय-चतुर्धुरीणस्य सकाशे तदेकदेशवास्तव्यया लेखिकया प्रेषितः । तेन चास्मभ्यं प्रकाशार्थं सदयमुपदीकृतः ।

( ५ )

पितामही-कीर्तित-वाक्-प्रपञ्चै-
रहो निशार्द्धं क्षणवद्व्यतीतम् ।
अद्यापि जागर्ति कथावली सा
कन्थावृताशेष-कलेवरायाः ॥

( ६ )

वैशाख-भीम-पवनो विमुखीकरोति
विद्योतनं चपलयत्यथ चञ्चलायाः ।
अम्बा निवारयति मा व्रज, पूर्व-जातः
स्मर्तुं समादिशति पूर्वचपेट-पीडाम् ॥

( ७ )

सर्वं तदेतदवधार्य तृणोपमानं
याभिर्गतास्मि सहकार-तरोरधस्तात् ।
चूतं विचेतुमवलम्ब्य करे करण्डं
ताः किं न शैशव-सखीं ननु मां स्मरन्ति ॥

( ८ )

यस्या नितान्त-रव-हीनतया ममाद्य
गम्भीर-मूर्तिरिति नाम जना ब्रुवन्ति ।
बाल्ये तदीय-वचनादवदंस्त एव
लाजाः स्फुटन्ति मुख-मृन्मय-भाण्ड-मध्ये ॥

( ९ )

कालार्णवाभिमुख-जीवन-निम्न-गायां
लीला-तरङ्ग-तृण-खण्डमिवावलीनम् ।
अग्रे दृशोरहह शैशवमद्य मन्ये
स्वप्नानुभूतमिव लुप्तमतीत-गर्भे ॥

---

# अर्धजरतीयन्यायः

[ निबन्धकः—श्रीहाराणचन्द्रभट्टाचार्यः शास्त्री ]

विचारप्रधानेषु शास्त्रेषु क्वचित्क्वचिद् ग्रन्थकारै"रर्द्धजरतीय"न्यायस्योल्लेखः कृतो दृश्यते। तस्यैतस्य न्यायस्य स्वरूपविषये बहूनां जिज्ञासा वरीवर्ति। तस्या जिज्ञासाया निवृत्तये किञ्चिदत्र यथामति प्रस्तूयते।

आचार्य-शङ्करभगवत्पादैः ब्रह्मसूत्रप्रथमाध्यायद्वितीयपादान्तर्गतेऽष्टमसूत्रे "यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो न तत्रार्द्धजरतीयं लभ्यमि"त्युक्तम् श्रीमताऽऽनन्दगिरिमहाभागेन तत्रत्यभाष्यव्याख्याने न्यायस्यास्य स्वरूपमित्थमभ्यधायि ;—

"नहि कुक्कुरादेरेकदेशो भोगाय पच्यत एकदेशस्तु प्रसवाय कल्प्यते, विरोधादि"ति।

तदिदं न्यायस्वरूपवर्णनमानन्दगिरिकृत"मर्द्धजरतीयमि"त्यक्षरानुकूलं न भवतीति सुधियां प्रमोदभरं नाविर्भावयति।

भाष्यरत्नप्रभायां त्वर्द्धजरतीयमित्यक्षरानुगुण्येन न्यायोऽयं विवृतः ;— "अर्द्धं मुखमात्रं जरत्या वृद्धायाः कामयते नाङ्गानीति सोऽयमर्द्धजरतीयन्याय" इति। तथाचार्द्धशब्दोऽत्र भागपरो न समप्रविभागपर इति सुस्पष्टं प्रतीतिपथमधिरोहति।

व्याकरणमहाभाष्यकारेण महर्षि-पतञ्जलिनाऽपि न्यायोऽयं समुट्टङ्कितश्चतुर्थाध्यायप्रथमपादगते ७८ तमे सूत्रे*—

"नचेदानीमर्द्धजरतीयं लभ्यम्।......तद् यथा—अर्द्धं जरत्याः कामयन्ते अर्द्धं ने"ति।

---

* अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४।१।७८

व्याख्यातं चेदं कैयटोपाध्यायैर्महाभाष्यप्रदीपे—

"अर्द्धजरतीयमिति 'समासाच्च तद्विषयाद्' (४।३।१०६) इति छप्रत्ययः। मुखं न कामयन्ते अङ्गान्तरं तु कामयन्ते जरत्याः ॥" इति।

एवं च महाभाष्यानुयायित्वाद्रत्नप्रभाव्याख्यानमेव समीचीनमिति विभावयन्तु सुधियः। विस्तरस्त्वत्र समुपेक्षितो वैरस्यभयात्।

---

# अनुरागः*

[ निबन्धिका—कुमारी इन्दुज्योतिर्व्याकरणतीर्था ]

गुञ्जनेन परितोषयन्नलिः कश्चिदाह नलिनीमयि प्रिये !
किं नु मुग्धमुपकण्ठमागतं मां विहाय रमसे विभावसौ ॥
पद्मिनी तमनुभाषते सती सत्यमेतदरुणः सुदुर्लभः।
किन्तु नीच-मिलन-प्रसङ्गतः काम्य एष विरहो महीयसः ॥

---

* निबन्धोऽयं निखिल-नारी-निबद्ध-निबन्धानाम् अनुसन्धाने व्यापृतस्य श्रीमतो यतीन्द्रविमल-राय-चतुर्धरीणस्य सकाशे तदेकदेशवास्तव्यया लेखिकया प्रेषितः। तेन चास्मभ्यं प्रकाशार्थं सदयमुपदीकृतः।

# प्रशान्तरत्नाकरम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( ततः प्रविशति पञ्चभिः पुरुषैरनुगम्यमानो वैद्येन सह वीरबलः )

वीर—एष कुमार आत्रेयः संज्ञाशून्यो वर्तते। तदस्य सत्वरं क्रियतामुपचारः।

रत्ना—वैद्यराज, एष दृश्यतां रत्नाकरस्य हृदयग्रन्थिः।

सर्वस्वं ते चिकित्सायाः प्रतिदास्यामि दक्षिणाम्।

वैद्यः—प्राणैः पणैः प्रतीकारं कुर्यां का नाम दक्षिणा ? तदकालहीनम् एनं निरुद्वेगं गृहं प्रापय, तत्र गत्वा यथोपयोगं भेषजप्रयोगं करोमि। अत्र तावद् आतपबाधा महदनिष्टमुत्पादयेत्।

रत्ना—वीरबल, शीघ्रमेवं क्रियताम्। अहमपि पुरुषैः सहितो निरातपे प्रदेशे तातदेहं स्थापयित्वा तत्र रक्षकमादिश्य अनुपदमागत एव।

वीर—तथा। ( पञ्चभिः पुरुषैः सहितं रत्नाकरं विना सर्वे निष्क्रान्ताः )

रत्ना—अहो परिहासो दैवहतकस्य! येन वत्सस्य आत्रेयस्य अकालोपकल्पितया व्यापदा तातमुद्दिश्य स्वच्छन्दमाक्रन्दितमपि प्रतिषिध्यते। हा तात,

त्वया सन्तज्यमानं मामात्रेयोऽपि विमुञ्चति।
निःसहायोऽस्मि दीनोऽस्मि त्वं दूरे क नु वर्तसे ? ( रोदिति )

१मः पुरुषः—स्वामिन्! अलं शोकावेगेन। आदिशतु स्वामी।

रत्ना—आं ? आगच्छत, यावत्तातस्य देहं निरातपे प्रदेशे स्थापयामः।

सर्वे—यथाज्ञापयति स्वामी।

( च्यवनदेहमादाय सर्वे निष्क्रान्ताः )

---

# नवमाङ्कः

(ततः प्रविशति सरयूतटे विषण्णो रत्नाकरः)

रत्ना—(आकाशमुदीक्ष्य सदीर्घश्वासं) अहो दैवपरिहासः!

आसीद्देवसमः पिता स सहसा यातो दिवं स्वेच्छया
माता तेन सहैव पुण्यपरमा शोकेन मृत्युं गता।
आसीत् प्राणसमः सुतः स विधिना नीतः क्षयं निर्दयं
तच्छोकेन विषं निपीय निभृतं पञ्चत्वमाप्ता प्रिया॥

हा तात, हा मातः! हा वत्स आत्रेय, हा प्रिये माधवि, सर्व एव यूयं मामशरणं दूरे परित्यज्य प्रस्थिताः। हा तात, स्वार्थमभिसन्दधानः स्वीयशान्तये सर्वमेकपद एव विस्मृतवानसि? हा तात,

आ शैशवान्मयि तवानुपमः स तावान्
स्नेहः कुतो नु विलयं गतवान् क्षणेन।
येनात्मनिर्वृतिकृते प्रियपुत्रकस्य
नाप्तः क्षणो बत विचारयितुं प्रदाहम्॥

अथवा तनयवात्सल्यात् ममैव दुरन्तवृत्तस्य क्रूरां वृत्तिमन्यथाकर्तु ममैव क्षेमलिप्सया गतोऽसि। तात, तात, अलं दीनं मां प्रति वत्सलस्य ते अभिमानेन! एहि, पश्य, अद्य स एव ते क्रूरो रत्नाकरः कथमन्यथा जात इति। तात, एहि, करुणया एहि, सदयमुपेत्य पश्य—

रत्नाकरस्ते स्वजनैः समस्तै-
स्त्यक्तो जहौ क्रूरकृतिं समग्राम्।
विना त्वदीयाङ्घ्रियुगस्य सेवां
न तस्य कृत्यान्तरमद्य शिष्टम्॥

हा तात, सुतवत्सल, एहि, अतः परमेष तव चरणौ सेवमान एव समयं

नेष्यासि। अथवा कठिनस्त्वमसि। मातः! कथं त्वमपि नात्मजस्य दयसे? हा मातः!

प्रियं स्ववक्षोजरसेन पुत्रं
त्वं पालयित्वा करुणासहस्रैः।
किमद्य हा निष्करुणं त्यजन्ती
न दुःखलेशेन निवारितासि?

मातः! प्रसीद, एष कातरोऽस्मि। अयि, मातः! एष विवशोऽस्मि समुपेत्य कथमद्यापि मामङ्के न करोषि? अथवा पतिवियोगविवशीकृतायाः पतिव्रतायास्ते विलुप्तो हन्त लोकवृत्तानुबन्धः! प्रिये माधवि, मम मातेव त्वमपि सुतरां पतिव्रतासि। तत् किमकस्मादेव हीनमपि मां स्वामिनं परित्यज्य लोकान्तरं प्रस्थितासि? अयि प्रिये माधवि, अयि पतिव्रते, अयि प्रिये रत्नाकरजीविते, क्वासि? हा प्रिये,

शून्यं वासगृहं प्रियोपकरणं शय्या समा कोमला
चित्रः पुष्पकरण्डकः स्वरचिता लेख्या च कुड्यावली।
त्वामेकामपहाय हा मनसि मे कल्पान्तवह्नेः समा
दाहं सम्प्रणयन्ति निर्दयमनास्त्वं क्वासि लोकान्तरे?

प्रिये, कथमेतदपि न स्मरसि?

क्रूरां वृत्तिमुपाश्रितोऽपि भवतीमाराधयन्नादरात्
प्रीत्यर्थं तव किं न वा विहितवान्छक्यं विधातुं हि यत्।
देवीव प्रतिवासरं परिजनैः सम्मानिता त्वं तदा
कस्मात् कोपकषायिता प्रतिगता लोकान्तरं सत्वरम्॥

हा प्रिये, माधवि, सर्वं मे जगत् शून्यीकृत्य कुतः खलु गतासि? अथवा शोकेन गतासि, हा हा अकालोपरतस्य पुत्रस्य वियोगमसह्यं सोढुमक्षमा गतासि, हा पुत्र आत्रेय, क्वासि। अहह!

दग्धं तस्य वपुः प्रसूनसदृशं प्रोद्यच्चितावह्निना
तद्देहेन समं ममापि हृदयं भस्मत्वमभ्यागमत्।

हा रत्नाकर कस्तवाद्य दयितो लोके समालम्बनम्
हा हा निःशरणोऽस्मि दावदहनो व्यावर्द्धते सर्वतः ॥

वत्स आत्रेय, क्वासि ? एष ते नियतं स्मरामि। किमु त्वं ननु मां निमेषमपि न स्मरसि ? हा पुत्र आत्रेय ( रोदिति )।

प्रविश्य वीरबलः—वयस्य, रत्नाकर ! त्वमिह वर्तसे ?

रत्ना—अथ किम्।

वीर—वयस्य, प्रियन्ते निवेदयामि।

रत्ना—वीरबल, अपि समुज्जीवितो मे वत्स आत्रेयः ?

वीर—वयस्य, किमिदमसम्भाव्यं प्रस्तौषि ?

रत्ना—तत् किमपरमिदानीं प्रियं रत्नाकरस्य ?

वीर—पुरुषैः परिगृहीतः कामेश्वरः कृतान्तगुहागर्भे संयतस्तिष्ठति। अथ किमस्य क्रियताम् ?

रत्ना—मुच्यताम्।

वीर—मुच्यते ?

रत्ना—अथ किम्।

वीर—वयस्य, सम्यङ् नावधारयामि।

रत्ना—वयस्य, वीरबल, त्वमपि नावधारयसि ?

कामेश्वरे यस्य बभूव वैरं
रत्नाकरः सोऽद्य न जीवितोऽस्ति।
दैवेन सर्वैः स्वजनैर्विहीनः
कोऽप्यन्य एवैष नवीनसृष्टिः ॥

वीर—एवं, यथाह वयस्यः, वयस्य मित्रम्मन्यः किञ्चित् प्रष्टुमिच्छामि।

रत्ना—पृच्छ।

वीर—किमिदानीं व्यवसितं वयस्येन।

रत्ना—( स्वगतम् ) एवं कथयामि। ( प्रकाशम् ) विश्रान्तजन-

कोलाहले इहैव सरयूतटे कञ्चित् कालंयापयिष्यामि। त्वमपि वीरवल, साम्प्रतं नवीनमुपदेशमर्हसि।

वीर—कथयतु वयस्यः।

रत्ना—उपदेशं पालयिष्यसि ?

वीर—वयस्य, कथमद्य संशयितोऽसि ?

रत्ना—तथापि देवतां स्मृत्वा शपथं कुरु।

वीर—वयस्य, नास्त्यपरं दैवतं वीरवलस्य। तदेष ते पादौ स्पृष्ट्वा शपे। कथय।

रत्ना—वयस्य, वीरवल, किमपरं ब्रवीमि। अद्य प्रभृति—

क्रूरां वृत्तिं परित्यज्य सुपथि स्थाप्यतां मनः।
तथैव निजवर्गस्य परिवृत्तिः प्रसाध्यताम्॥

वीर—एष ते चरणौ स्पृष्ट्वा शपथं विदधाम्यहम्।
त्वदाज्ञामनुवर्तिष्ये यावत् प्राणा हृदि स्थिताः॥

रत्ना—अहो प्रसन्नोऽस्मि—

घोरान्धतमसाच्छन्ने पथि विद्युत्प्रदीपवत्।
प्रसादं दुःखविभ्रान्ते चित्ते प्राप्तोऽस्मि लेशतः॥

वीर—वयस्य, पृच्छामि किमपि।

रत्ना—पृच्छ।

वीर—अथेदानीं रत्नपुरमाश्रितानां स्ववर्ग्याणां कीदृशी गतिः ?

रत्ना—वयस्य, वीरवल, अस्ति किल युष्माभिरेव प्रतिष्ठापितं लोकविलक्षणं रत्नागारं, यत् स्वच्छन्दमुपभुज्यमानं सर्वपौरैः मन्ये युगेनापि कालेन न निःशेषतामासादयेत्। तदेव तेषामवलम्बनं भविष्यति। तस्य द्वारसन्धिः केवलं तवैव विदितः। अलमद्यापि परस्य तन्निवेदनेन। तथैव स्ववर्ग्येषु चिराय शान्तिः पदं कुर्वीत। अन्यथा स्वार्थाभिसन्धानेन परस्परं कलहः प्रादुर्भवेत्।

वीर—वयस्य, एवं प्रचितालस्यं रत्नागारमुपमुञ्जानेषु पौरेषु सुलभा स्याद् दोषप्रतिपत्तिः।

रत्ना—अत एव पर्वतप्रान्तवर्तिषु नदीसन्निहितेषु क्षेत्रेषु ते यथायोग्यं कृष्यादिकर्मसु व्यापारयितव्याः। एवं कर्मव्यासक्तचेतसां दोषलेशोऽपि नात्मनि पदं कुर्वीत।

वीर—युज्यते।

रत्ना—तद् वयस्य, वीरबल, गच्छ त्वमकालहीनं राजानं मोचयित्वा स्वनियोगमनुतिष्ठ। ( स्वगतम् ) अहमपि स्वनियोगमनुतिष्ठामि।

वीर—यथाज्ञापयति प्रियवयस्यः। ( गन्तुमुद्यतः प्रतिनिवृत्त्य ) वयस्य, कदा पुनस्त्वां पुरगतं द्रक्ष्यामि।

रत्ना—अनुपदमेव द्रक्ष्यसि।

वीर—वयस्य, भवतो भावविपर्ययाद् भीत इवास्मि। तदेष त्वां ममैव शिरसा शापयामि। अलमत्र बहुकालात्ययेन, मया सहैव पुरे प्रत्यावर्तस्व। पूरयतु वयस्यः प्रार्थनां मे।

रत्ना—वयस्य, वीरबल, अलं शङ्कया, नाहमुन्मत्तोऽस्मि, अथवा यद्यहमत्याहितं कुर्यां, को नु खलु तदा दुःखं भुञ्जीत।

वीर—तदेष निर्विशङ्को गच्छामि ?

रत्ना—एवं, निर्विशङ्को गच्छ।

वीर—एवं गच्छामि, वयस्यवाचि प्रत्ययेन।

रत्ना—बाढं गच्छ। अथवा वीरबल, तिष्ठ, गत्वा कथय राजानम्।

वीर—किमिति ?

रत्ना—एतत् कथय—

रत्नाकरेण पापेन यत्त्वापकृतं पुरा।<br>
निःशेषं तत्फलं प्राप्तो भिक्षते स भवत्क्षमाम्॥

त्वमपि वयस्य वीरबल, क्षमस्व माम्—

वीर—कथं मामपि क्षमापयसि ? किन्तु खल्विदम् ?

रत्ना—वयस्य, वीरबल, किमिदं न स्मरसि ?

वृथैव रात्रिन्दिवमाज्ञया मे
यूयं स्वसौख्यान्यपहाय दूरे ।
कियन्ति वा कष्टशतानि लब्ध्वा
ममानुवृत्तिं कृतवन्त एते ॥

वीर—वयस्य, किमेवमनुनयसि ? यथाप्रयोजनं पुनरपि प्रशान्तचेतसस्ते पुरेव स्वच्छन्दत एवानुवृत्तिं करिष्यामः ।

रत्ना—यदि पापं जीवनमतः परमपि देहमनुवर्तेत ?

वीर—शान्तं पापं ! शान्तं पापम् !! प्रतिहतममङ्गलं वयस्यस्य । वयस्य, पुनरपि शिरसा मे शापितोऽसि, अलं साहसानुबन्धेन ।

रत्ना—वयस्य, मा भैषीः ! गच्छ स्वनियोगमनुष्ठातुम् ।

वीर—अकालहीनं पुनर्भवद्दर्शनाय भवदादेशादेव गच्छामि । का गतिः ?

रत्ना—एवम् अभीतो गच्छ ।

वीर—यथादिशति वयस्यः । ( स्वगतं ) अहो ! शोकाहतचित्तवृत्तेर्वयस्यस्य चित्तविपर्ययेण सुतरां शङ्कित एवास्मि । भवतु, क्षणमात्रकेण तदाज्ञां निष्पाद्य पुनः प्रत्यावर्ते ( निष्क्रान्तः ) ।

रत्ना—गतः खलु वीरबलः, नास्तीदानीं रत्नाकरस्य मरणं विना शरणमन्यत् ।

यावत् प्राणाः संवहेयुः शरीरे
तावच्छान्तिं क्वापि नासादयेयम् ।
तातो माता धर्मपत्नी सुतश्च
यस्मिन् यातस्तत्र गत्वा सुखी स्याम् ।

तदस्यां सन्निहितायां स्रोतस्वत्यामात्मानं निक्षिप्य तापं निर्वापयामि । विलम्बेन वीरबलः प्रत्यावृत्तो विघ्नमुत्पादयेत् । ( परिक्रम्य ) भगवति सरयु !

त्वद्गर्भे कति मानुषानसदृशं हत्वा निशायां तदा
योऽहं क्रूरतया क्षिपन्नगतिकानासादयं कल्मषम् ।
तस्यैतस्य निवर्तनाय सलिले तत्रैव तेनाधुना
प्राणध्वंसमिषेण पातकि वपुः सन्त्यज्यते पश्य माम् ।

भगवति प्रशान्तसलिले,

तापः कायगतः प्रयाति विलयं शीतेन ते वारिणा
तृष्णाश्चाप्युपहन्ति पीतमचिरात् पीयूषतुल्यं हि तत् ।
ज्वालाभारसमाकुलेन मनसा तापप्रशान्तीच्छया
त्वन्नीरे प्रविशामि देहि कृपया स्थानं प्रतप्ताय मे ॥

देवि, सरयु, निर्दयं सर्वैः परित्यक्तो निःशरणोऽस्मि । हा हा नास्ति मे कोऽपि, नास्ति मे निःशरणस्य कोऽपि ! ( पतितुमिच्छति )

( ततः प्रविशति सुमतिः )

सुमतिः—वत्स, रत्नाकर, कथं कोऽपि ते नास्ति ? अहमेव चिराय त्वामपेक्षमाणा निवसामि, तदेहि, निवर्तस्व वत्स, कठोरात् प्राणपरित्याग-व्यवसायात् ।

रत्ना—( प्रत्यावृत्य ) अये का नु खल्वेषा ?

वदने मातृलावण्यं कण्ठे स्नेहमयामृतम् ।
रूपान्तरेण माता मे दुःखार्ता किमुपागता ?

सुमतिः—वत्स, मां दृष्ट्वा विस्मितोऽसि ?

रत्ना—जननि, अदृष्टपूर्वा भवती, अत एव नावधारयामि ।

सुमतिः—वत्स, नादृष्टपूर्वास्मि । तथापि दृढं सन्निकर्षाभावेन न प्रत्यभिजानासि । अहं सुमतिरस्मि ।

रत्ना—आं स्मर्यत इव । अयि, मातः ! किमु तावत्कालं निर्दयासि ?

( क्रमशः )

---

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरश्रावणस्य २३श (त्रयोविंश)-दिवसे कुजवासरे सायं सप्तवादनतो भविष्यतीति तत्र सर्वेषां समुपस्थितिः प्रार्थनीया ।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী **মাসিক সভা—২৩শে শ্রাবণ, ১৩৪৬, মঙ্গলবার, সন্ধ্যা ৭টার** সময়ে হইবে। সর্ব্বসাধারণের উপস্থিতি একান্ত প্রার্থনীয়।

## প্রয়োজনীয় বিজ্ঞাপন

(পণ্ডিত মহাশয়গণের বিশেষ দ্রষ্টব্য)

কলিকাতা করপোরেশনের প্রধান কর্ম্মাধ্যক্ষ মহাশয় ইং ১৩।৫।৩৯ তারিখের বিজ্ঞাপনে জানাইয়াছেন যে, বঙ্গীয় ব্যবস্থা-পরিষদের (Bengal Legislative Assemblyর) কলিকাতা সাধারণ এবং কলিকাতা সাধারণ স্ত্রীলোক এবং অন্যান্য নির্ব্বাচন-কেন্দ্রের ভোট-দাতা-দিগের তালিকায় স্বীয় নাম অন্তর্ভুক্ত করিবার জন্য প্রয়োজনীয় যোগ্যতা-সম্পন্ন ব্যক্তিগণকে ইংরাজী ৩১শে জুলাই, ১৯৩৯ (**বাংলা ১৩৪৬ সালের ১৫ই শ্রাবণ**) এর মধ্যে কলিকাতা করপোরেশনের নির্ব্বাচন-বিভাগে **নির্দ্দিষ্ট ফর্‌ম্‌** পূরণ করিয়া আবেদন করিতে হইবে।

**দ্রষ্টব্য**—ম্যাট্রিকুলেশন পরীক্ষায় উত্তীর্ণ, **বঙ্গীয় সংস্কৃত এসোসিয়েশন** অথবা **ঢাকা পূর্ব্ববঙ্গ সারস্বত সমাজের উপাধি** পরীক্ষায় উত্তীর্ণ অথবা মধ্য ইংরাজী পরীক্ষায় উত্তীর্ণ ব্যক্তিগণ শিক্ষার যোগ্যতা-দ্বারা উক্তরূপ ভোটদাতা হইতে পারেন। স্ব স্ব সার্টিফিকেট-সহ নির্দ্দিষ্ট ফর্ম্মে ১৫ই শ্রাবণের মধ্যে আবেদন করিতে হইবে। করপোরেশন আফিসে উক্ত ফর্‌ম্‌ পাওয়া যায়, কিছু ফর্‌ম্‌ সংস্কৃত-সাহিত্য-পরিষদেও আনাইয়া রাখা হইবে।

# সংস্কৃতশিক্ষার্থিগণের প্রতি বিজ্ঞাপন

—:০:—

এতদ্দ্বারা সংস্কৃতশিক্ষার্থী ছাত্রদিগকে জানান যাইতেছে যে, সংস্কৃত-সাহিত্য-পরিষচ্চতুষ্পাঠীর অধ্যাপনা নিয়মিতভাবে আরম্ভ হইয়াছে। কাব্য, ব্যাকরণ, সাংখ্য, বেদান্ত, স্মৃতি, মীমাংসা, পুরাণ প্রভৃতি শাস্ত্রে অধ্যয়নার্থী ছাত্রগণ উক্ত চতুষ্পাঠীতে আসিয়া যথাসময়ে অধ্যয়ন করিতে পারে।

সম্প্রতি এখানে ছাত্রদিগকে মাসিক বৃত্তি দেওয়ার কোন ব্যবস্থা নাই, তবে যাহারা পরিষৎ হইতে "বঙ্গীয় সংস্কৃত এসোসিয়েসন" এর অধীন আদ্য, মধ্য ও উপাধি পরীক্ষায় উত্তীর্ণ হইবে তাহাদিগকে গুণানুসারে পুরস্কার-প্রদানের ব্যবস্থা আছে এবং পরিষদের ছাত্রগণ পরিষৎ-পুস্তকালয়ে গ্রন্থসমূহ অধ্যয়নের যেরূপ সুবিধা পাইবে অন্য ছাত্রের পক্ষে সেরূপ সুবিধা পাওয়া ও বিভিন্ন গ্রন্থকারের গ্রন্থাদি পর্য্যালোচনা করা সম্ভবপর নহে। কোন কোন ছাত্রের মাত্র থাকিবার বন্দোবস্ত হইতে পারে।

নূতন যে সকল ছাত্র ভর্ত্তি হইবে তাহাদিগকে ৩০শে শ্রাবণের মধ্যে সংস্কৃত-সাহিত্য-পরিষৎ সম্পাদকের নিকট নিজ নিজ যোগ্যতার উল্লেখ করিয়া আবেদন করিতে হইবে।

———

Reg. No. C. 1073



Vol. XXII, No. 4 ] [ August, 1939
१८६१ शकीये श्रावणे २२श-वर्षस्य ४र्थ-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

**महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री**

सहकारि-सम्पादकः—

**श्रीउपेन्द्रमोहन-सांख्यतीर्थः**

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| August, 1939 | १८६१-शकीये श्रावणे २२श-वर्षस्य ४र्थ-संख्या | Vol. XXII, No. 4, |


## अस्मदीया बदरीयात्रा

[ निबन्धकः—महामहोपाध्याय-श्रीअनन्तकृष्णशास्त्री ]

बदरिकाश्रमो हि प्रायेणाक्षयतृतीयायामुद्घाट्यते ठहरी-नरेशानामाज्ञया श्रीलश्रीवासुदेवनम्बूदिरिमहाशयैस्तदध्यक्षैरिति सर्वविदितमिदम् । मध्येमार्गं हि तस्य भागीरथी-मन्दाकिनी-नन्दाकिनी-कर्णगङ्गाविष्णुगङ्गानां सङ्गमुख-मलकनन्दाया भवति, इति केवलयापि बदरिकाश्रमयात्रया गङ्गोत्तरी-श्रीकेदार-श्रीकैलासादियात्राऽपि कृतप्रायैव, यतो भागीरथ्यादीनामपि गङ्गो-त्तर्यादिमूलानामवगाहो विनैवायासं सुलभ्यते । न केवलं भागीरथ्यादिष्वव-गाहः किन्तु हृषीकेशमारभ्य बदरिकाश्रमपर्यन्तं तत्तादृशां प्रातःस्मरणीयानां न केवलमध्ययनाध्यापनादिना, किन्तु स्वानुष्ठानतोऽपि ब्रह्मविचारैकदीक्षाणां भागवतोत्तमानां परमैकान्तिनां च बहूनां महात्मनां सत्सङ्गोऽपि सर्व-साधारणमेकरूपमेव मिलति ।

इदमत्र सौभाग्यकारणम्—यत हृषीकेशे श्री१०८काल-कम्बलीवाला श्री१००८रामनाथप्रतिनिधिभूताः बाबाश्री१०८मणिराममहोदयाः प्रत्यहं परः-

शतानां परमहंसानां दण्डिस्वामिनां ब्रह्मचारिणाम् अन्येषां च साधूनां तत्तत्संप्रदायानुसारिणामकिञ्चनानां यात्रिगणानां च विना दाक्षिण्यं विना पुरोभागिताम् अन्तरेण वैयक्तिकम् आदरविशेषं यथाभिलसितपक्वान्नादि-वितरणप्रबन्धेन तण्डुलादिभोज्यसामग्रीदानव्यवस्थया च सुव्यवस्थितया सत्कुर्वन्तो दर्शनपथमस्माकमधिस्यन्त इति। एते हि हृषीकेशमारभ्य श्रीगङ्गोत्तरी-श्रीकेदार-श्रीबदरी-श्रीकैलासादियात्रायां प्रतिक्रोशं यात्रिणा-मावसथादिव्यवस्थापनेन यथास्थानं प्रपादिप्रबन्धेन च न केवलमकिञ्च-नान् किन्तु धनिकश्रेष्ठान् राजमहाराजादीनप्यधमर्णयन्ति। इदमेवात्र दुःखनिदानम्—यत् केचन परमहंसादयो दण्डिस्वामिनोऽपि धार्मिक-संस्थाविघटकानां सुधारकाणां प्रोत्साहनेनान्येन वा केनापि कारणेन कालाकम्बलीवालां संस्थामपि सुधारकसात्कर्तुमायतन्त इति। नेयमत्राति-शयोक्तिः यत श्री१०८बाबामणिराममहोदयाः श्री१००८बाबा-श्रीराम-नाथमहोदयानां भागवतोत्तमानां यथार्थप्रतिनिधयो यात्रिगणसौकर्या-धानमेव परमकर्तव्यमात्मनो मन्यन्ते, नान्यत् किमप्यात्मनः कर्तव्य-मिति। एतेषां संस्थाद्वारा बदरीयात्रिणां कैकर्यव्यवस्थापनं सुचारु भवि-ष्यतीति परमोऽयमस्माकं विश्वासः। इयं हि संस्था प्रतिवत्सरं नूतननूतन-धर्मशालादिनिर्माणेन बदरीयात्रामतिसुलभयति।

इदमत्रातिसन्तोषनिदानम्—यत श्रीदेवप्रयागमारभ्य तीर्थपुरोहिताः सर्वत्र पण्डितोत्तमा दृश्यन्त इति। श्रीठहरीमहाराजास्तीर्थपुरोहितपरीक्षा-मपि कांचन व्यवस्थाप्य तीर्थपौरोहित्ये प्रायेण सर्वेषु तीर्थेषु संभाव्यमानान् दोषान् दूरीकुर्वाणा अत्यन्तमेवात्र धन्यवादमर्हन्ति। तीर्थपुरोहितेषु तत्तद्देशी-यानां यात्रिगणानां परम्परया पौरोहित्यमाचरत्सु पण्डितप्रवरास्तीर्थपुरो-हितसभाध्यक्षाः श्रीनरहरिशास्त्रिमहोदया इति तेषां तीर्थपुरोहितसभाध्यक्ष्य-मेकमेव पर्याप्तं कारणम्। सर्वे एव तीर्थपुरोहिता ऐकमत्येनात्र यात्रिणामुप-कर्तव्यमेव स्वकर्तव्यं मन्यन्ते। अत्यन्तशीतबाधाजटिलेऽपि तत्र तीर्थपुरोहिताः कम्बलादिव्यवस्थापनेन तत्तत्समुचितावसथादिदानेन रोगिणामपि यात्रिणां

स्वपुत्रस्वदाराद्यविशेषमेव सादरचिकित्सादिप्रबन्धेन च न विस्मरणमर्हन्ति। एते हि श्रीदेवप्रयाग-रुद्रप्रयाग-कर्णप्रयाग-नन्दप्रयाग-विष्णुप्रयाग-श्रीबदरीस्थानेषु तीर्थश्राद्धादि यथाविधि कारयन्ति। श्रीगरुडगङ्गायां तु व्याकरणाचार्यपरीक्षादिष्वपि समुत्तीर्णाः पण्डितोत्तमाः संस्कृतभाषया सुष्ठु व्यवहरन्तः सर्वान् यात्रिगणान् परवशयन्ति। किं बहूना सर्वेऽपि प्रायेण पण्डितप्रवरास्तीर्थपुरोहिता न केवलमज्ञान्, किन्तु विज्ञानपि विशेषत आनन्दयन्ति। अयमपरो विशेष एषां तीर्थपुरोहितानाम्—यदल्पेनापि दानेन नितरामेव सन्तुष्टमात्मानमेते प्रकाशयन्ति सुमधुरया च भाषयाऽऽशीर्वदन्ति॥

भारवाहकास्तु किङ्कराः प्रायेण क्षत्रिया एव, येषां मध्येमार्गमावसथादिप्रबन्धे न लेशतोऽपि क्लेशोऽनुभूयते। पारिश्रमिकं तु तैः प्रायेण भोजनव्ययेन साकमेकं रूप्यमेकस्य दिनस्य गृह्यते, यत्तु नाधिकमिति मन्तुमपि शक्यते। सर्व एवेमे प्रत्यहं रात्रौ स्वीयेष्वावसथेषु धर्मशालासु च भगवद्भजनादिना समयं क्षिपन्ति। एकोऽपि तेषु निषिद्धान्नभक्षी अपेयपायी च न लक्ष्यत इति। महदिदमानन्दस्थानम् यद् विश्वासपात्राणि सर्वेऽपि भारवाहका इति। एते हि ठहरीमहाराजैराङ्ग्लराज्यकारिभिश्च स्वनामधामादिग्रहणेन स्वायत्तीकृता वर्तन्ते, इति हेतोरपि लेशतोऽपि नोपद्रवं ददते यात्रिगणानाम्।

आपणिकास्तु विना शुल्कमावसथं प्रयच्छन्ति, यदि भोज्यादिसामग्र्यस्तेभ्य एव विक्रीयेरन्। मूल्यं तु वस्तूनां किञ्चिदधिकमेव। दुग्धं तु प्रस्थपरिमितं कुत्रचन सार्धरूप्येण कुत्रचनैकेन रूप्येण कुत्रचन रूप्यद्वयेनापि यात्रिगणानामधिकतायां दुःखेन लभ्यते। अकिञ्चनास्तु यत्र न कालकम्बलीवाला-संस्थाधर्मशाला, तत्र विशेषतो दुःख्यन्त्येव। कुत्रचन कुत्रचन रथ्यायामेव वृक्षच्छायेषु ते पचन्ति। मक्षिकास्तु नाकिञ्चनान् बाधन्ते, यत आपणावसथेष्वेव ते सर्वदा सङ्कश आ-सायं शब्दायमाना इतस्ततो डयन्ते। यावद् यावच्छीताधिक्यम्, तावत्तावद् निर्मक्षिकं भवति। इदमेवात्राऽऽमोद-

स्थानम् उदाराः केचन धार्मिकास्तत्र तत्रापणावसथादिष्वपि भोज्यसामग्री-प्रदापनादिना भागवतानां महात्मनां च साधूनामुपकुर्वन्ति । देवप्रयागपर्यन्तम्, अन्ततः श्रीनगरपर्यन्तं च सर्वाण्यपि भोज्यवस्तूनि सुलभानि । विशिष्टानि कानिचन शाकादीनि समीचीनधृतादीनि च द्वित्रेषु स्थानेषु सुलभानि । शीताधिक्यमुपक्रमते ज्योतिर्मठानन्तरमेव । अवगाहपानादिसौकर्यं तु सर्वत्र प्रायेण निर्झरोदकेन सततं प्रवहता सुसंपादम् । वट्टचट्टीस्थाने पातालगङ्गायां चालकनन्दाद्युदकेनैव स्नानपानादिकं व्यवस्थापनीयम्, यच्चोदकमनुष्णीकृतमुपभुक्तं रोगनिदानमिति मन्यते । निर्झरोदकं त्वतिस्वच्छमतिमधुरं शीतं चात्यन्तमेव सर्वत्र हितकरं मन्यन्ते । प्रयागेषु देवप्रयागे रुद्रप्रयागे च क्लेशेन शृङ्खलाग्रहणेन स्नानं निर्वोढुं पार्यते । नन्दप्रयागे कर्णप्रयागे च न क्लेशलेशोऽपि । विष्णुप्रयागे तु द्वयोरपि गङ्गयोर्वेगाधिक्यात् पात्रोद्धृतेनैवोदकेन स्नानं सुशकम् ।

अस्मिन् प्रसङ्गे रुद्रप्रयागे संस्कृतमहाविद्यालयः कश्चन, एक औषधालयश्च स्वनामधन्य-पण्डितप्रवर-त्यागिप्रवर-परमहंस-श्रीसूरदासानां विशेषत उल्लेखमर्हतः । यत्र पण्डितप्रवरा बहवस्तत्तच्छास्त्राचार्यास्तत्तच्छास्त्रनिष्णातास्त्यागिवरा अध्यापका अपि स्वल्पेनैव वेतनेनाध्यापनकार्यं निर्वाहयन्तः प्रतिसंवत्सरं बहूनेव छात्रान् व्याकरणवेदान्तादिपरीक्षार्थं काशीं प्रति प्रेषयन्ति । एतादृशाः संस्कृतमहाविद्यालया धार्मिकप्रवराणां साहाय्येन चाल्यमाना लक्ष्मणझूलायां हृषीकेशे देवप्रयागे श्रीनगरे बदरीधामनि च वर्तन्ते । पुस्तकालयस्तु देवप्रयागे श्रीनरहरिशास्त्रिणामाध्यक्ष्येण महानेकः संचाल्यते । यत्र परःसहस्रं मुद्रापितानि हस्तलिखितानि च प्रत्यहं बहुभिरेव समालोच्यन्ते पुस्तकानि, अपरस्तु तादृश एव ज्योतिर्मठे बदरीधामनि च वर्तते । ज्योतिर्मठं हि शङ्करभगवत्पादप्रतिष्ठापितेषु चतुर्ष्वाम्नायेषूत्तराम्नायपदवाच्यमिदानीं श्रीबदरीनाथमन्दिराध्यक्षाणां पण्डितप्रवर-श्रीरावलमहोदयानामधीनमेव वर्तते । इदं हि मठमिदानीमेतैरेव रावलमहोदयैः पीठाधिपानां प्रातिनिध्येन परिपाल्यते । ज्योतिर्मठं तु जीर्ण-

मेवेति प्रसिद्धिस्तु तन्मठाधिपानां केषामपि शङ्कराचार्यनाम्ना प्रसिद्धाना-मभावेनैव। शङ्करभगवत्पादानामाद्यानां समयमारभ्य पूज्यमाना सालिग्राम-शिलामयी नृसिंहाकृतिर्मूर्तिरत्र दर्शनमात्रेणैव सर्वानपि चित्रयति। ज्योति-र्मठमारभ्य बदरीधामपर्यन्तं बहूनि देवस्थानानि विद्यमानानि श्रीबदरी-क्षेत्रान्तः क्षेत्राण्येव गण्यन्ते। तेषां व्ययादिप्रबन्धोऽपि बदरीक्षेत्राध्यक्षा-धीन एव, तेष्वन्यतमं पाण्डुकेश्वरक्षेत्रम्। यत्र शिलाशासनानि ताम्र-शासनानि च मन्दिरे रक्षितानि पठ्यमानानि बहूनि तत्त्वानि ज्ञापयन्ति। पाण्डुकेश्वरक्षेत्रान्तस्तु हनुमाच्छट्टीस्थानमेकमतिसुन्दरम्, यत एव रजतमय इव पर्वतो हिमवान् दृष्टिगोचरो भवति यात्रिकाणाम्। बदरीधामापि ततः क्रोशत्रय एव वर्तते।

इतो गमनावसरे निम्नोन्नतभावोऽधिकतर एवानुभूयते। हिमपूर्णानां मार्गाणामतिक्रमणम्, मध्ये मध्ये हिमावृतायास्तत एवादृश्यतां गतायाः शब्दानु-मेयप्रवाहायाश्चालकनन्दानाम्न्या आदिगङ्गाया अन्तरान्तरा गर्जनं हठादेव दृश्यतां गतायाः साक्षात्कारश्च कस्य वा नानन्दयतो मानसं सचेतसाम्। इतः प्रस्थिता हि घण्टात्रयमात्रेण प्रायेण साक्षात्कुर्वन्ति श्रीबदरीनाथमन्दिर स्थूपिम्, नमस्कुर्वन्ति च तत एव बदरीनाथं साष्टाङ्गं सजयोद्घोषम्। डोलया समागच्छन्तो यात्रिणोऽपि प्रायेण तत आरभ्य पादचारेणैव बदरीयात्रां समाचरन्ति। अत्यन्ताशक्ता अपि श्रद्धावशात् पदानि कानिचनान्ततो-गत्वा पादचारेणैव गच्छन्ति। बदरीमन्दिरं त्वलकनन्दाया अपरे पारे वर्तते। पादक्रोशमितमार्गत एव काल-कम्बलीवालासंस्थादीनां धर्मशालाः संन्यासिनां साधूनामन्येषां च पृथक् पृथग् निर्मिता वर्तन्ते। सर्वेषामेव साधूनां संन्यासिनां परमहंसानां भारवाहकाणां धनिकानां च तत्तद्योग्यानि कम्बलवस्त्राणि शीतवातादिवारणानि यावदावासमुपयोगार्थमुक्तसंस्थाध्यक्षा उपदीकुर्वते। भोजनं भोज्यवस्तूनि वा सर्वेषामेवागतानां बदरीधामनि तया दीयन्त एव। तीर्थपुरोहिता अपि तत्तद्यजमानान् पूर्वोक्तया रीत्या सतत-मुपकुर्वन्त्येव। बदरीमन्दिराधीनानि गृहाण्यपि कानिचन तदध्यक्षैर्यथा-

संभवं दीयन्ते तत्तद्योग्यतानुसारम्। कम्बलादिकं तु तदध्यक्षैर्यावदपेक्षं समुचितशुल्कादिदापनेन दाप्यते। यात्रिगणा भगवद्दर्शनाद्यवसरे सर्वेऽपि समदृष्ट्यैव निरीक्ष्यन्ते। संमर्दस्तु महानेव सर्वदा वर्तते।

पूजकास्तु पण्डितप्रवरा वासुदेव-नम्बूदिरि-महोदयाः केरलदेशीया नम्बूदिरिब्राह्मणा नाम। यस्यां जातावाद्यशङ्करभगवत्पादाः कालटिक्षेत्रे प्रादुरभवन। श्रीबदरीनारायणक्षेत्रमाद्यशङ्कराचार्योपज्ञमिति केरलीयतन्त्रेण पूजापद्धतेः परिपालनार्थमेव तज्जातीया एव पूजकस्थानेऽभिषिच्यन्ते। येन तन्त्रेण प्रतिष्ठा तेनैव तन्त्रेण पूजापद्धतिरपि रक्षणीयेति हि शास्त्राचार्यमर्यादा। तन्त्रान्तरेण प्रतिष्ठा तन्त्रान्तरेण पूजा चोक्तमर्यादामुल्लङ्घमाना मूर्तिषु देवतासान्निध्यं विघटयति। इमे हि पूजकाः प्रातः सप्तमघटिकायां मन्दिरं प्रविष्टाः सार्धैकादशवादनं यावत सर्वेषां पुरतः षोडशोपचारादिपूजाभिः पूजयन्त एव दृश्यन्ते तत्परतन्त्रा इव। एतेषां पूजापद्धतिदर्शनेन सर्व एव सन्तुष्यन्तीति नात्र लेशतोऽप्यतिशयोक्तिः। बदरीनारायणमूर्तिस्तु सालग्रामशिलामयी दशावताररूपाण्यपि बिभर्ति, न केवलं दशावतारचिह्नानि, किन्तु श्रीगणेशस्य रूपमपि बिभर्तीति महदिदं चित्रम्। शताधिकक्रोशमितमार्गं पादचारेणापि गच्छतां यात्रिणां श्रीनारायणमूर्तिदर्शनेन सर्वोऽपि क्लेशो दूरमपयाति। प्रायेण सर्वे श्रीबदरीधामनि त्रिरात्रमेव निवसन्ति। केचन तु पञ्च दिनानि। परमहंसा दण्डिस्वामिनश्च बहवश्चातुर्मास्यव्रतमपि तत्रैवानुतिष्ठन्ति। त्यागिप्रवरानन्तरा बहुकालनिवासिनो जनाः श्रीबदरीक्षेत्रकार्यकारिणः किङ्कराः, आपणिकाः, केचन तीर्थपुरोहिताश्चैव।

श्रीबदरीनाथमन्दिरं तु गरुडाकारगरुडशिलातोऽलकनन्दाप्रवाहमध्यवासिन्या नृसिंहशिलाया नारदशिलायाः कुबेरशिलायाश्च सांनिध्येन चित्रीयते नितराम्। नारदशिलासविधे नारदकुण्डे बदरीनारायणमूर्तिरेका सर्वदा वर्तते, शङ्करभगवत्पादास्तत एव बदरीनारायणमूर्तिमुद्धृत्य प्रत्यतिष्ठिपन केरलीयतन्त्रसमुच्चयादितन्त्रविधिनेति बदरीनाथमाहात्मनिबन्धतो विज्ञायते। उष्णोदकं तु गरुडशीलामूलत उद्गच्छद् बहुभिर्मार्गैर्बहुषु स्थानेषु

सततं प्रवहति। तत्र प्रधानतयाऽग्निकुण्डसूर्यकुण्डनारदकुण्डादीनि। अग्निकुण्डेऽवरुह्य सर्वेऽपि स्नानेनाऽऽत्मानं पवित्रयन्ति। अलकनन्दा तु द्रवीभूतहिमप्राया नितरामेव शीतलाऽतिवेगेन प्रवहन्ती च सर्वैरपि प्रायेण नारदकुण्डसमीपादावुष्णोदकेनापि संमिश्रय स्नानार्थमुपयुज्यते। अतिसमीपे बदरीनाथस्य ब्रह्मकापालतीर्थस्थानमपि वरीवर्ति। यत्र कपालाकारा शिला काचन वर्तते। अत्रैव सर्वेषां बदरीतीर्थश्राद्धमाचरतां पिण्डदानं कर्तव्यतया शास्त्रेण चोद्यते। अयमपरो विशेषः—यद् भगवते नारायणाय निवेदितेनान्नेनैव पिण्डदानमत्र कर्तव्यम्, नतु स्वयं संपादितेनान्नेनाऽऽज्येन वा पिष्टादिना केनापि। अत्रैकत्रैवाऽऽत्मश्राद्धमपि कर्तव्यतया मन्यते। अधिकमुपरिष्टात्।

---

# नासावपराध्यति

[ निबन्धकः—पि. वि. वरदराजशर्मा ]

"कस्त्वं ? कुत आयातः ? किं वा आगमनकारणम् ? किमर्थं पितृपैतामहमसपत्नमसमद्राज्यमन्यैरप्रविष्टपूर्वं प्रविश्यास्मानुपरुन्त्स्ये ? को वान्वमन्यत ते प्रवेशम् ? गच्छ यथागतं विवादं चेत्परिजिहीर्षसि, मानं च जुगोपायिषसि। इत्युच्चावचं व्याहरता जरता केनापि ग्रन्थागारव्यापृतेनानुयुक्तोऽहं परिभूतमात्मानं मन्यमानः प्रतिवचनोन्मुखोऽपि चिरं मूकीभूत इवावालम्ब्य हस्ताग्रेण साम्यपावृतमग्रकवाटफलकमवातिष्ठे।

मद्रप्रान्त्यसर्वकलाशालया प्रचाल्यमानासु बहुषु परीक्षासु सविशेषमुत्तीर्णो नितरामनुत्तरपारितोषिकादिवितरणेनासकृत्सम्मानितो मनागहं जितकाशी, प्राज्ञमानी, उरोलक्ष्यश्च, प्रायो नालक्षयमात्मनः समानमन्यं मानवम्। "दारिद्र्यमेकं गुणकोटिहारि" इति वदन कोऽप्यात्मनः पौरोभाग्यमदर्शयत, यदसौ नावोच"दारिद्र्यमेकं मदकोटिहारि" इत्यपि। यतो

गच्छता कालेन वृत्तिकार्श्यादर्थकार्श्याच्चातितरां कर्शितोऽहमस्तमितदुर्मद आशीविष इवोद्धृतदंष्ट्रः कारितो दारिद्र्याख्येन जन्मसुहृदा। विद्यार्थिता-दशायामविकल्प्यैः सङ्कल्पैर्यानि गेहानि निर्मितानि, ये चाभिजाता आढ्य-कुलप्रसूता दारा अक्लृपत ये च तनया विनयोज्ज्वला उदपादिषत, ते सर्वेऽपि दिवास्वप्ना इव गन्धर्वनगरवच्च यथार्थवार्तायाः सुदूरमेवावास्थिषत।

प्रकामं दुष्पूराया दरतराया उदरदर्याः पूरणमेव जीवितैकफलं मन्वानः, तन्वानः प्रतनुष्वपि जनेषु परःशतं चाटुवादान्, आतन्वानश्चाननुरूपं वदन-दशनप्रदर्शनं किं किं नाकरवमाशापिशाचिकया निर्दयं नर्तितः। सुचिर-मित्थं भ्रान्त्वा दैवात्कस्मिंश्चित्प्राच्यग्रन्थागारे समवाप्य स्थानमेकं प्राण-शरीरयोरवियोगपर्याप्तं वेतनं लभमानो दिनान्यत्यवाहयम्। तत्र च धूस-रितानां धूलिविधूननेन, पाठकजनेभ्यः सादरमपेक्षितग्रन्थवितरणेन च काल-कलामपि नाहमपार्थमनैषम्।

स्वाधिकारव्यापृतोऽहं कोणनिहितां कामपि पुस्तकधारिणीं पञ्चविभाग-परिष्कृतामुद्घाटयन्नतर्कितं केनापि जरता तृतीयग्रन्थभङ्ग्युपरि व्यापृतेनेत्थ-मभियुक्तो नावागच्छमनुरूपमुत्तरम्। अद्राक्षमेतं सादरेण चक्षुषा। एष हि दूषिकावितानभूषिते चिरन्तनपांसुपुञ्जपल्यङ्के, पुस्तकेष्टकामये केलि-प्रासादे सुखनिषण्णस्तृणायेव मन्यमानः पुरतोऽवस्थितं मां धीरोद्धतं कमपि भावमाविरकार्षीत्।

सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयता, इतीदमाप्तवचनमाकलयन्, पृष्टश्चा-प्रतिवक्ता प्रष्टुरुपहासभाजनमिति चिन्तयन्नित्थमुपाक्रमे प्रतिवक्तुम्।

"भद्रमुख, अहमत्रैव शालायां नियुक्तः। नियुक्तस्य मे उपदशा हायना व्यतीयुः किन्नाम भवान्न जानाति चिरमित्रमिहत्यममुं जनम्। तिष्ठ त्वेतत्। को भवानित्थं स्वं कृत्यमशून्यमापादयन्तं मां भीषयन्निव भाषते। को नाम व्यतारीत्तादृशं स्थानं भवते ? किन्तत्स्थानं" ? इति मे वचनमाकर्ण्य सोपहासेन दरस्मितेन भासयन् कक्षान्तरमवादीत्।

'अयि व्यसनसत्रब्रह्मचारिन्, यद्भवान् ब्रूते चिरादत्र नियुक्तमात्मानं

तन्मया सल्लापमर्हतीत्येवालपामि न मैत्र्या, न वा विश्रम्भात्। अहं पुना राजर्षेः पश्चात्तपःप्रभावोपार्जितब्रह्मर्षिपदस्य विश्वामित्रस्य महर्षेरपश्चिमा सृष्टिः। भीतोऽहमभिजातो विकत्थनादिति संक्षिप्य कथयामि। इष्टा चास्माकं देवता देवताराध्यो दन्तावलाननः, योऽस्मान् केतनं विधायानुगृह्णाति। अत्रागतस्य मे कियाननेहा अतिचक्रामेति नाहं, न मे पिता न वा पितामहो वेत्ति। यदा प्रभृति शाला स्वरूपमलब्ध तदा प्रभृति साक्ष्यहमस्याः। ईदृशमपि मां न वेत्सि यदि का कथा अचिरागतं त्वामहं न जानामीति। सेवाक्रमो म ईदृशः अभिजनविभवश्चान्यादृक्षः, तिष्ठतु विद्या।

"मित्र, अहमप्यधिगतानेकबिरुदो मद्रविद्यामण्डलीतः। अत एव परीक्ष्य विद्यावैभवं विद्याधिकृतैराकारितोऽहं नियुक्तश्च ग्रन्थानामेतेषामध्यवेक्षणे। न ह्यपरीक्षितमल्पज्ञं वा बहुग्रन्थशेवधावस्मिन् ग्रन्थागारे नियुञ्जीरन्। जानास्यहं प्रायः सर्वा दाक्षिणात्या लिपीः। अयत्नलिखितान्यप्यतिस्पृहणीयानि मे हस्ताक्षराणि। बह्व्यः खलु जीर्णानां ग्रन्थानां पुत्रिका निर्मिता निर्मीयन्ते, निर्मास्यन्ते च। कियन्तो नाम महान्तः श्लाघापत्रमस्मै प्रेषयन्तिस्म। किमियती विद्यासम्पत्केनापि भवद्वंश्येनाधिगता ?" इत्यहं सावलेपमुदघोषयम्।

विकत्थनच्छायानुकारि मे वचनमाकर्ण्योदीर्णामर्षः स्फुरतोष्ठपुटेनोपाक्रमत भाषितुमेष मूषकग्रामणीः। अरे रे, कैषा सर्वकलाशाला, का परीक्षा, कानि बिरुदानि, यान्यवष्टभ्य विकत्थसे। अश्रुतपूर्वा इमे शब्दाः कस्यापि कापुरुषस्याभिनवाः कल्पनाविशेषाः। त्वादृशस्यासौभाग्यविभवो यत्तदात्वे न सर्वकलाशाला, न परीक्षा, न वा बिरुदानि। बधिरान्मन्दकर्णो वरीयानिति मूकसमवाये लोहलस्त्वं गीष्पतिपदवीमधिरोपितः, तेन ते मस्तकातिलङ्घी विद्यादर्पः।

नियोज्यस्य हि गुणाः परीक्षणीयाः परिश्रमश्च। त्वमेको दिवा कांश्चन मुहूर्तान् केषाञ्चन ग्रन्थानां यथावदवस्थापनेन द्वित्राणामक्षराणामन्यथापनेन

च सर्वं स्वकृत्यमनुष्ठितममन्वानो वाचस्पतिं मन्यसे अहं तु सपुत्रदारो नक्तन्दिवमनपतुदन् अशनाया-पिपासे समेषाममीषां ग्रन्थानामालोडनेन सकल-मायुष्कालमपार्थयामि। नाहं भृतकस्त्वमिव निर्वेशाकाङ्क्षी वासरगणनायां व्याप्रिये।

अन्यच्च यत्ते लिपिपरिज्ञानमन्यादृशमाकलयसि तत्रेदं वक्तव्यम्। नाहं केवलं लिपीरेवावगच्छामि यावल्लिप्याधारांस्तालपत्राणि, तदाधारांश्च किं बहुना सर्वामेव शालां यथावज्जानामि इति। लिपिकरस्त्वं न तासां रुचि-विशेषे प्रमाणं, यावदहमक्षराणां मधुरिमाणं यथावच्चर्वणेन विविच्य वर्णयितुं क्षमः। सूत्राणामयथावदर्थवर्णने ते पाण्डित्यं पर्यवस्यति, सूत्रसार-वेदिताऽहम्।

अपि च श्रोत्रियाच्छ्रोत्रियपुत्रो वरीयानिति प्रायोवादः। निहीने तवान्ववाये त्वमेको यूथभ्रष्टो वानर इव विलक्षणो वर्तसे। नन्ववोचं प्रागेव कुलधनमिदमस्माकं यद्ग्रन्थालोडनमिति। किन्न पश्यसि कोणेऽत्र मद्वंश्यैरालोलितान् ग्रन्थान्। कतिकत्यत्युज्ज्वला ग्रन्था न परामृष्टाः कति-कति नास्वादिताः।

इतोऽपि भृतकपरीक्षा नाक्षरैरेव कर्तव्या। तेषां लाघवमग्रतः परीक्षणीयं पश्य मे लाघवम्। वैरिञ्ची सृष्टिस्त्वं नीचैर्भूतलमधितिष्ठसि। अहं पुनरुच्चैः पुस्तकपङ्क्तिषु। पटुरहमविशङ्कटेनावटेन गन्तुमागन्तुं विहर्तुं प्रहर्तुञ्च। आ नखाग्राद्दन्ताग्राणामस्मि सम्राट्। किमीदृशं पाटवं भृतमानिनि त्वय्यस्ति? योगेश्वरस्येव मे सर्वत्र प्रभविष्णुता अस्थूलोऽनणुर्दृश्योऽदृश्यश्च शालामिमां मायामिव मायेश्वरो नर्तयामि। पश्य मे कृतहस्तताम्। कृतमुखतामधि-कृत्य चेज्जिज्ञाससे, इति वदन्नसौ यावदतिनिशितं रशनाग्रं प्रदर्शयति तावदेव विकत्थनपरस्यास्य शिरः शतधा विदारयामीति लगुडमेकं झटित्येव करतलारूढं व्यदधे।

लगुडहस्तमवेक्ष्य मां वाक्कलहभीतोऽसौ चतुर्थे उपाये प्रवर्तते इति भीत्या पलाय्य पुस्तकधारिण्याः कोणे क्वापि न्यलीयत। चिरस्य वसन्नसौ मूषको

जानात्येव समग्रं शालामिमाम्। नास्ति चतुरङ्गुलमात्रो भागः अनेनाज्ञातः। तथ्यमेव पितृपैतामहमस्य राज्यमिदम्। चतुर्दश हायनान् राज्यं कृतवतो भरतस्य हीदं राज्यं भारतमभिधीयते। तथा किलमंस्त राजदुहिता कैकेयी। एवं स्थिते चिरादवसन्नसौ तदीयां शालामाकलयतीति नासावपराध्यति।

---

# सनातनधर्मः स्वामी विवेकानन्दश्च

[ निबन्धकः—ब्रह्मचारी—विद्यासागर-जोशी ]

अयि सुरसरस्वतीसेवकाः सन्तः! भारतमिदं वर्षमा सृष्टेः स्वधर्मपालनरततयैव समध्यगादुन्नतिकूटमिति न भवतां प्रच्छन्नमधीतपुराणेतिहासानाम्। धर्मस्यास्यैवाऽऽश्रयः श्रेयस्करोऽस्माकं भारतीयानामिति साम्प्रतं मया स्वरूपमस्य प्रतिपाद्यते श्रुतिस्मृतिप्रमाणैः। धर्मः खलु कार्यमूलकः। यत्र श्रुतिप्रसङ्गे कार्यसम्पादनं न प्रतिपादितं विद्यते, तन्न वेदस्याङ्गमिति मीमांसकाः। तद्यथा जैमिनिसूत्रे—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्"। अथ कार्यमूलकस्य धर्मस्य किं यथार्थं लक्षणं निर्दोषं सर्वबुद्धिगम्यञ्च स्यादिति जिज्ञासमानैरस्माभिः सर्वथा समालम्बनीया श्रुतिः। यतो हि—"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुति"रिति स्मर्यते। अतोऽत्र खलु कीदृशी श्रुतेरनुमतिरिति विचारयतामस्माकं दृष्टिपथं समायाति लक्षणमिदं यद्—"यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः" इति। परमिदं लक्षणं सूक्ष्मत्वाद्दुरूहत्वाच्च नापरिणतधीगम्यम्। तदत्र वेदानुगामिनी स्मृतिरिति मत्वाऽस्माभिः स्मृतेरपि प्रामाण्यं मान्यमेव। तद्यथा—"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणमि"ति। सत्यमेवेदं धर्मस्य लक्षणं पूर्वविनिर्दिष्टस्य श्रुतिवाक्यस्य विशदं रूपं सर्वसाधारणमतीनामप्यनायासेनाऽवबोध्यञ्च विद्यते।

यतोऽनवद्यकर्माचरणेनैवाऽभ्युदयनिश्रेयसयोः सिद्धिर्नियता। तान्येवाग-हितानि समस्तानि कर्माणि संक्षेपतो भगवता मनुनाऽस्मिन् श्लोके प्रति-पादितानि। एतान्येव कर्माणि समस्तेष्वन्येष्वपि भूतले विद्यमानेषु मतेषु न्यूनाधिकरूपेणाऽवतिष्ठन्ते। तत्तन्मतानुयायिनो मानवा इमानि कर्माणि समाचरेयुर्नवा, परमिमानि तेषु तेषु मतेषु विधेयतया प्रतिपादितानि सन्त्येव। किन्त्वस्माकं सनातनधर्मे तेभ्य इदमेव वैशिष्ट्यं विद्यते यद् वयं सनातन-धर्माणः परमात्मनः साकारमपि रूपं मन्वानाः प्रतिमायामपि तस्य पूजनं कुर्महे। अन्यमतावलम्बिनः प्रतिमापूजनं प्रतिक्षिपन्त्येव। वयं खल्वात्मनो नित्यत्वात् पूर्णरूपेण परलोकं मन्वाना मृतपितॄणां यथाविधि श्राद्धमनु-तिष्ठामः। अन्ये त्वस्य सिद्धान्तस्य गन्धमपि सोढुं नार्हन्ति। प्रायसः सनातनधर्मस्य स्थितिरेतद्द्वयेनैव तेभ्यो मतेभ्यो भिद्यते। अस्यैव हि द्वितयस्य दरीदृश्यते सर्वत्र सनातनधर्मे यज्ञादिरूपेण विस्तारः। इतराणि खलु मतानि सनातनधर्मस्यास्यैकैकमङ्गमङ्गीकृत्य भूतलेऽस्मिन् प्रवर्तमानानि विद्यन्ते। "अहिंसा परमो धर्मः" इति वचनमुपजीव्य प्रवृत्तं बौद्धमतमस्य सनातनधर्मस्याहिंसारूपमङ्गमाश्रित्य प्रथितम्। परोपकारमङ्गमपहृत्य "ईशवीयं मतं" प्रतिष्ठितम्। इत्येवङ्कारमितस्ततः संसरन्तीनां सरितां पारावारेणेव पद्धतीनामितरासां सनातनधर्मेण साकं सम्बन्ध इति सर्वथा-प्यविवादास्पदम् इति श्रीस्वामिना विवेकानन्दमहाराजेन परमपाण्डित्य-प्रकाशमुखेन प्राच्यान् विशेषतः पाश्चात्त्यानमनस्विगणान् बोधयता तेषां श्रद्धा सनातनधर्मं प्रति समानीयत।

अनन्तसिद्धान्तसन्तानैरभिव्यापकस्य परमश्रेयसां निधानभूतस्य सनातनधर्मस्यास्य गतिः संसारेऽस्मिन् ब्रह्मणः सृष्टिप्रभृति सम्प्रत्यपि निरन्तरं ह्रासोदयाभ्यामविरहिता सततमप्रतिहता विभाव्यते। काले काले च "यदा यदा हि धर्मस्ये"त्यादिवचनानुसारमस्यैव सनातनधर्मस्य संस्थितिमंशेनावतरन् स्वयं विभुरजस्रं व्यधत्तैव। अतीतवृत्ताना-मध्ययनेनेदमेव ज्ञायते यद् यादृग्धर्मस्य संस्थापनं सुकरं विद्यते, न तादृक्

तस्य रक्षणम्। उप्तबीजस्य क्षेत्रस्यानुपालनं यथा दुःसाधं न तथा बीजानां वपनम्। अस्मादेव हेतोः सनातनधर्मस्य रक्षितारो भूयांसोऽभूवन् मनुव्यासशङ्कराचार्यप्रभृतयो महाभागा धर्मस्य रक्षका एवावर्तिषत। अन्ये चैतदर्थं समुज्झितप्राणा भारतभूमिमहिमभूमानमुद्भावयन्तस्ते वीरा इतिहासजीवितकीर्तयो धर्मस्य रक्षका बभूवुः।

धर्मरक्षकैरस्माकं पूर्वजैः प्रातःस्मरणीयैर्महर्षिवर्यैर्न तावत्यो विपदां घटा-विषेहिरे, यावत्यः किल तृणीकृतसकलसौभाग्यभोगैः सनातनधर्मरक्षकै-र्वीरैः। अतस्ते सर्वेऽपि गेयकीर्तयः परमधन्यवादार्हाः सन्ति। तदत्र सनातनधर्मरक्षार्थं समर्पितसर्वस्वानन्यान् महाभागान् परिवर्ज्य निजधैर्य-दाक्षिण्यपाण्डित्यप्रभृतिसकलगुणगणवशीकृतलोकं श्रीपरमहंसस्वामिवर-विवेकानन्दमहाराजमधिकृत्य सनातनधर्मे सुदृढमस्यानुरागमालोचयामः। सर्वेषु धर्माङ्गेषु धृतेरेव माहात्म्यमनुस्यूतं साक्षात्क्रियते। ताभिर्विना सर्व-मप्यङ्गं स्वरक्षकस्य रक्षायां नालम्भवति न च "धर्मो रक्षति रक्षितः" इति स्मृतिवचनमवितथीकर्तुं प्रभवति। धृत्यादि च केषुचिदेव जागर्ति महात्मसु। प्रायेण हि तेषां लोकोत्तरशक्तीनां महात्मनां जीवनमत्यन्तं सङ्कटं भवति। ते च रत्नाकरागाधहृदयास्तान् विपत्तिमहीधरान् रजः-पुञ्जानिवाविगणय्य नाधीरतां व्रजन्ति। एवमेव श्रीमतो विवेकानन्दस्य निःसीमं धैर्यं नमयितुं नाखिलेऽपि संसारे कापि शक्तिरासीत्। दृष्टान्त-रूपेण श्रीस्वामिनो जीवनस्य घटनांशमेकमादाय किञ्चित् प्रस्तूयते।

एकदा भारतीयजनविज्ञापितोऽसौ श्रीविवेकानन्दमहोदयो निखिल-विश्वधर्मसम्मेलने "हरिवर्षदेशं"[1] हिन्दुधर्मप्रतिनिधिरूपेणागमत्। तत्र स्ववैदुष्यपूर्णभाषणपाटवेन वशीकृतसकलसामाजिकस्य प्रतिमानवं जेगीयमान-कीर्तेः प्रथितानर्घगुणस्य स्वामिमहोदयस्य धैर्यपरीक्षार्थं तत्रत्याः केचन नरा उपचक्रमिरे। एकस्य मञ्चस्योपरि पादद्वयमात्रविततमेकं मृण्मयं पात्रमधोमुखं निवेश्य हरिवर्षवासिभिर्जनैस्तदुपरि समारुह्य भाषणाय प्रार्थितः श्रीस्वामिमहोदयो होरात्रयं यावद् धराधरेन्द्र इवाविचलः

परःसहस्रजनपरिवृते भाषणमण्डपे भागीरथीप्रवाहवन्निरवच्छिन्नधारयाऽङ्गलभाषया भाषणमकरोत्। तस्यैतावत् प्रगाढं धैर्यमवलोक्य दन्तमध्यसमर्पिताङ्गुलीकास्ते परमाश्चर्यं गतवन्तः। ततस्तेष्वेकतम उत्थाय स्वामिमहोदयं लक्ष्यीकृत्य भुशण्डीध्वनिमकरोत्। यस्या गोलिका स्वामिनो वामबाहुपार्श्वदेशाद् विनिर्गता। परं धैर्यशालिनोऽस्य मनागपि धैर्याभावमनवलोक्य मण्डपोपविष्टानां जनानां करतलध्वनिभिः साधुवादैश्च दिगन्तः समन्तादभिव्याप्तः। के वा न स्युः प्रणतशिरसो धीरधौरेयवर्ये। अखिले हरिवर्षे सनातनधर्मस्य ध्वजोद्धूननं विदधानो विवेकानन्द-महाराजस्तेन भारतवर्षस्य गौरवमगापयत्। एवमेव तस्य जीवने क्षमादिशक्तिर्दृश्यते सर्वत्र।

धर्माङ्गेषु द्वितीया क्षमा विरलेष्वेव महात्मसु पूर्णतया दरीदृश्यते। परं तस्मिन् क्षमायां क्षमासदृशे स्वामिनि विवेकानन्दे कियती क्षमा आसीदित्यपि तज्जीवनघटितेनैकेन घटनांशेन किञ्चिदुदाह्रियते। अथ समस्तहरिवंशखण्डे प्रतिवीथि पूज्यमानचित्रः स्वामी केनचित् प्रतिष्ठितेन नरपतिना समामन्त्रितः परिव्राजकानुरूपं वेशमास्थाय निश्चिते समये तस्य प्राङ्गणं समासदत्। यावत्प्रासादस्यान्तः प्रवेष्टुमुपक्रमते तावद् दौवारिकेण "क्व गन्तुमनाः कथमिहागतोऽसी"ति सम्पृष्टः श्रीस्वामिमहोदयोऽभाषत— "राज्ञः समीपे कार्यविशेषार्थं समायात" इति। ततो दौवारिकोऽस्य कौपीनकाषायमण्डितं वेषमवलोक्य विक्षिप्तः कोऽपि भिक्षुकोऽयमिति मत्वा करसन्निहितया यष्टिकया भर्त्सनामुद्रामातन्वानो बहुभिरवद्यतमैर्वचोभिः सार्धचन्द्रदानं दूरमुदसारयत्। परं श्वभिर्बुक्कितो मातङ्ग इव श्रीविवेकानन्दो नाऽऽत्मनोऽल्पामपि तिरस्कृतिमगणयत्। उद्यत्स्मितशोभमानाननः किञ्चिदप्यनुच्चार्य यथागतं परावृत्तः।

कोपाश्रयस्य वस्तुनः प्रतिकर्तुं शक्ता अपि ये क्षमामुपासते त एव सन्तः। अथ विज्ञातस्वामिपरावर्तनवृत्तो नृपतिः सपदि सिंहासनादुत्थायानुपानच्चरण एव तमन्वधावत्। स्वामिनमुपगतो राजा सचरण-

1 "अमेरिका"

स्पर्शमिदमवोचत्---मम द्वारमुपागत्य कथं न भवता स्वपरिचयो दत्तः! कथं च दौवारिकोऽधमो न शासितः। "नाहं कस्मैचिदपि स्वपरिचयं दातुमीहे। नाहमात्मानं महान्तं मन्ये, न च कञ्चिदपि प्राणिनमात्मनो निकृष्टं जाने। सर्वेऽप्यात्मसदृशा मया विभाव्यन्ते। न मे कोऽप्यधिकारः कञ्चिद् भर्त्सयितुम्, न कुतोऽप्यवधीरणां लेशतोऽपि गणयामीति श्रीस्वामिमहोदयोऽब्रवीत्। इत्याकर्ण्य सर्वेऽपि श्रीस्वामिनः क्षमां प्रशशंसुः। तस्य चरणौ च समाश्रितवन्तः। गुणवतो हि मनुष्यस्य के वशं नायान्ति। तदा महान्तोऽमहान्तोऽपि समाजप्रतिष्ठिता मानवाः सर्वमन्यत् परित्यज्य चिरं हिन्दुधर्ममनुपालयितुं प्रतिज्ञातवन्तः। एवमासीत् सनातनधर्मानुयायिनः श्रीविवेकानन्दमहाराजस्य क्षमाप्रभावः।

श्रीस्वामिमहोदयः स्वविरचिते "प्राच्यः पाश्चात्यश्चे"ति-नामके पुस्तके, धर्मादृते न भारतस्याभ्युदयोपाय इति समुल्लिखितवान्। बौद्धानां चार्वाकस्य च "यावज्जीवेत्सुखं जीवेदि"ति सिद्धान्तं श्रुतिप्रमाणैः समूलमुन्मूलयन परलोके जीवानामपरं जन्म प्रत्यपादयत्। असौ स्वामिमहोदयोऽद्वैतसिद्धान्तावलम्बी वैदान्तिक आसीत्। परं कर्मयोगमप्यङ्गीकृत्यायं नाधुनिकवेदान्तिवन्निष्कर्मतया प्रावर्तिष्ट। अयं खलु स्वविरचितेषु पुस्तकेषु यत्र तत्र भगवदुक्तं "यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणामि"ति सिद्धान्तं विशदं समुदलिखत् स्वयञ्चैवमेव प्रावर्तत। श्रीस्वामिमहोदयः "प्रब्रूयादितरेभ्यश्च स्वयं चैव तथा भवे"दित्यादिस्मृतिवाक्यान्यनुपालन सनातनधर्मस्य मर्यादामुल्लङ्घ्य पदमेकमपि न निदधे। सनातनधर्माचार्याः श्रीशङ्कराचार्यप्रभृतयो भूयांसोऽभूवन, ये किल भारते वर्ष एव धर्मं संस्थाप्य व्यरमन्। परं स्वामिश्रीविवेकानन्दमहोदयो "आमेरिका"देशे "योरोपे"च सनातनधर्मस्य पताकामुदधूनोत्। सनातनधर्मस्य रक्षितॄणामितिहासे श्रीस्वामिचरणस्यास्यानवद्या कीर्तिराब्रह्माण्डप्रलयममृतत्वं गन्ता। विजयन्तां श्रीपरमहंसस्वामिविवेकानन्दमहाराजानामनर्घाणि चरितानि शरदां शतम्।

# देवीविसर्जन-विमर्श-तिमिरभास्करे उपसंहारः

[ निबन्धकः—श्रीप्रतापचन्द्र-काव्यव्याकरणस्मृतितीर्थः ]

माननीयानां संस्कृत-साहित्य-परिषत-पत्रिका-सम्पादक-पाठकवर्गाणां समीपे सविनयमावेदयामि, सुविदितमेतद्भवतां यदस्याः पत्रिकाया विगत-मार्गशीर्षसंख्यायां तत्रभवतां महामहोपाध्याय-स्मार्त भट्टाचार्याणां देवी-विसर्जनव्यवस्थाविषये सन्तोषमलभमानेन तर्कतीर्थमहोदयेन देवीविसर्जन-व्यवस्थाविमर्शनामकः कश्चन प्रबन्ध आविष्कृतः, अनन्तरञ्च माघसंख्यायां तत्प्रबन्धकृदुक्तदोषनिराकरणपूर्वकभट्टाचार्यमतसंस्थापनाय "..........विमर्शे विमर्श"शीर्षकः कोऽपि प्रबन्धोऽस्माभिः प्रकाशितः ; संप्रति ज्यैष्ठसंख्यायां पुनः "......विमर्श......तिमिरभास्करः" अस्मत्प्रबन्धप्रतिवादाय समुदित इति। अस्यत्रापि बहु वक्तव्यतावकाश इत्यतो ममायं प्रबन्धान्तरप्रकाश-प्रयासः। प्रबन्धस्य भास्करसादृश्यञ्च कथमुपपद्यते इति तु नाशङ्कनीयं यतः प्रबन्धसमालोचनावसरे शून्यचारित्वमात्रेणास्य तथात्वमुपपादयिष्यामः।

प्रकृतविषये पाठकानामवधानमभ्यर्थयामहे। तथाहि प्रबन्धलखकेन एतेषां प्रबन्धानां प्रकृते कीदृशमुपकारित्वमित्यादिकमारभ्य ये दोषाः समुद्भाविता-स्तेषां परिहाराय वक्ष्यमाणा युक्तिः समीचीना न वेत्यत्र शास्त्रतत्त्वनिरूपण-विमलधियः सुधिय एव प्रमाणतामर्हन्ति।

प्रथमतस्तावत् चतुर्थदिने विसर्जनं भवेन्न वेत्याशङ्कायां प्रदर्शितस्थले चतुर्थदिने देवीविसर्जनं वैधत्वाभाववत् स्मार्तभट्टाचार्योक्तिविरुद्धत्वात् इत्यनु-माने भट्टाचार्यस्याप्तत्वनिश्चयाभावेन तादृशहेतोः प्रकृतसाध्यानुमापकत्वं नास्तीति प्रबन्धकृदाशयः। अत्रोच्यते भट्टाचार्यस्य आप्तत्वसंदेहेऽपि भट्टाचार्य-वचनं प्रमाणम् आप्तवचनानुसारित्वात् इत्यनुमानेन आप्तवचनस्य प्रामाण्यमिव आप्तवचनानुसारिवचनस्यापि प्रामाण्यमुपपद्यते श्रुतिपरिगृहीतस्मृतिप्रामाण्य-मिव। किञ्च चतुर्थदिने विसर्जनं वैधम् आप्तोक्तत्वादिति हेतुः प्रदर्शितः प्रबन्ध-कृता, तत्रापि तदीययुक्त्यैव विसर्जने आप्तत्वस्य संशयेन हेतोरनिश्चिततया

तस्याप्यनुमापकत्वं नैव सम्भवति अत एवायं अभिनवोऽनुमानप्रकारः प्रबन्धकृतो न्यायैकदेशदर्शित्वं सूचयति। स्वपक्षसिद्ध्या एव परपक्ष उपालभ्यते इत्येतदपि तेन चिन्तनीयम्। अपरञ्च तेनोक्तम् परदिवसीय-पूर्वाह्न-कर्तव्यत्वमत्र यस्य कस्यचिदुत विसर्जनस्य इति। अत्र तु देवीविसर्जनप्रस्तावाद् यस्य कस्यचिदिति प्रश्न एव नावतरति। यच्चान्यदुक्तम् विसर्जनत्वावच्छेदेन परदिनपूर्वाह्णकर्तव्यतोक्तौ दशमीक्षयवशाद् यत्र तृतीयदिने नवमीपूजा विसर्जनञ्च तद्विसर्जने नवमीपूजापरदिनकर्तव्यताया असत्त्वेन हेत्वप्रसिद्धिरेव स्यादिति। अहो! गरीयसीयमापत्तिराकुलयत्यस्मान। दशम्यां विसर्जयेदित्यपि किं विस्मृतं नैयायिकप्रवरेण? परदिनकर्तव्यत्वेऽपि दशम्या अभावेऽपि विसर्जयेदित्यपि नास्माभिरभिहितम्। अपरञ्च विसर्जनत्व-सामानाधिकरण्येन परदिनकर्तव्यत्वपरिग्रहे च पक्षे अनिश्चिततया तद्गमकं न स्यादित्यभिहितम्। शिष्टजनपरिगृहीताप्तजनप्रतिपाद्यपरदिवसीयकर्तव्यत्व-परिग्रहे कथं हेतोरप्यसिद्धिरिति वयं न जानीमहे यतस्तत्र संशय एव नोपतिष्ठति। द्वितीयस्तवके च "वचनानां बलाबलनिर्देशावसरे न्यूनाधिकं न कर्तव्यमिति निषेधस्य सर्वतो बलवत्त्वमित्युक्त्वा तदुपसंहारे च परन्तु विधेर्निर्विषयतया क्वचिद् निषेधस्यापि सङ्कोच इत्युक्तम्, अतोऽनालोच्यैव प्रबन्धं विमर्शकारेण दोषो दर्शित" इति प्रबन्धकृतोक्तम्। अत्रेदं पाठकेभ्यः पृच्छ्यते विधेर्निर्विषयतया वा, अपरया यया कयाचिद् रीत्या वा यस्य वचनस्य वचनान्तरेण बाधोऽङ्गीकृतः तस्य सर्वतो बलवत्त्वमिति यद्यस्माभिरप्यङ्गीक्रियते तदा किमसमञ्जसभाषित्वमस्मान्नाधिकरिष्यति।

यदप्युक्तम् "यदि प्रातः प्रातरितिवचनस्य विमर्शकारोक्तमर्थमङ्गीकृत्य तस्यात्र पूजानुरोधपदार्थता स्वीक्रियते तदा वृश्चिकभयात् पलायमानस्य आशीविषमुखे पतनमिव तद्भवति। तिथिक्षयवशात् तृतीयदिने नवमीपूजाविसर्जन-स्थले तद्वचनस्यानर्थक्यापत्ते"रिति। अत्रोच्यते विधिवाक्ये असति बाधके सति सम्भवे चेति विशेषणद्वयस्य सर्वनिबन्धृभिः स्वीकृतस्य निवेशनीयत्वेन एव सर्वमनाकुलम्भवितुमर्हतीति।

यच्चापरमुक्तम् "यत्र च सप्तमीपूजाधिकतृतीयचतुर्थदिनयोर्मुहूर्तान्न्यून-पूर्वाह्णदशमीतिथिलाभः तत्र तृतीयदिने श्रवणनक्षत्रलाभेऽपि सर्वसम्मत-चतुर्थदिनविसर्जनस्थले त्र्यहपूजने कृतेऽपि पूर्वाह्णदशम्यां श्रवणलाभे न्यूनत्व-प्रसक्तौ......निषेधकत्वात् इतीयं स्मार्तभट्टाचार्यस्य न्यूनाधिकं न कर्तव्य-मिति वचनप्रयुक्ता निषेधोक्तिरसङ्गता स्यात् अप्राप्तस्य निषेधायोगात् उक्त-वचनार्थपूजानुरोधस्य नियामकतयैव प्राप्तेरयोगादि"ति। अत्रैवं समा-धीयते, यत्रोभयदिने पूर्वाह्णदशमीलाभस्तत्र प्रातः प्रातरितिवचनमहिम्ना पर-दिने विसर्जनं यत्र च पूर्वदिने आधिक्येन विसर्जनविहितश्रवणलाभ-स्तत्राधिकगुणयोगात् पूर्वदिने तद् भवितुमर्हति इति मनसि कृत्वैव भट्टाचार्य-महोदयस्य निषेधोक्तिः समीचीनैव भवेदिति। अत एवात्र श्रवण-नक्षत्रस्य यदुल्लेखनम् तदेव कारणरूपेणोपन्यस्तमित्यपि विदुषां प्रणिधान-गम्यमिति।

यदप्युक्तं "प्रातःपदस्यात्र कोऽयं गुणविशेषो येन तादृशं गौरवमपि सोढमिति" प्रमाणसत्त्वे गौरवमप्यकिञ्चित्करमिति शास्त्रविदां मतम्। "......विमर्शे विमर्श"नामकप्रबन्धे प्रातः प्रातरितिवचनव्याख्यानावसरे च तत्प्रमाणमपि प्रदर्शितम्। तदेव च अस्मन्मते साधकम् अव्यवहितानन्तर्य-वादिमते तु तदेव बाधकम्।

अन्यच्च यदुक्तम् "अस्तु वा तथा, तथापि प्रातःपदस्य तादृशार्थकत्वे क्त्वाप्रत्ययस्य निरर्थकता दुर्वारणीयेति"।

अत्रोच्यते यत्रोभयदिने पूर्वाह्णे दशमीमुहूर्तलाभस्तत्र पूर्वदिने विसर्जन-वारणाय दिनभेदज्ञापकप्रातःपदस्यावश्यकता, प्रातः पदे च विद्यमाने क्त्वा-प्रत्ययो निरर्थक इत्यपि न सम्भावनीयं प्रातः प्रातरित्युक्तौ क्रियापदाकाङ्क्षायाम् अवश्यवक्तव्यत्वात्। सम्पूजयेदित्युक्तावपि प्रकृतार्थलाभ उपपद्यते चेत् तर्हि वाक्यभेदो दुर्निवार एव। अथवा प्रातःपदस्य तादृशार्थकत्वे क्त्वाप्रत्ययस्य तात्पर्यग्राहकत्वात् नैव निरर्थकता सम्भावनीया इति ध्येयम्।

एवमत्र एकशास्त्रनिरूपितं बाध्यत्वं बाधकत्वमिति द्वयमेकत्रानिष्टम्

इत्यस्य यत् समाधानमस्माभिः कृतं विमर्शप्रबन्धे तदपि लब्धप्रसरमेव स्यादिति तत्त्वम्।

एवं सति—

स्वभाभिर्भासयन्नाशा मध्यन्दिनमुपेयिवान्।
भास्करस्तमसा ग्रस्तः शास्त्रयुक्त्यनुसारतः॥

---

# तिमिरभास्करे तिमिरम्*

[ निबन्धकः—श्रीशशिभूषणस्मृतितीर्थ-ज्योतिर्विनोदः ]

व्यतीते माघमासे संस्कृतसाहित्यपरिषत्-पत्रिकायां देवीविसर्जनविमर्शे विचार-शीर्षकप्रबन्धेन, तर्कतीर्थ-महोदयलिखित-देवीविसर्जन-विमर्शाख्य-प्रबन्धस्य समालोचनेन तदीय-मत-निराकरणपूर्वकं स्मार्त-सम्मता व्यवस्था समर्थिता। सौर-ज्यैष्ठमासे पुनर्विमर्श-विचार-सिद्धान्त-तिमिरभास्कर-शीर्षकप्रबन्धेन तेन महोदयेन कतिपये दोषाभासाः प्रदर्शिताः। तेषामपनोदनाय पुनर्लेखनीं व्यापारयितुमस्मि प्रवृत्तः। तत्र प्रथमदोषाभासो यथा "पूजानुरोधादिति स्मार्त-भट्टाचार्य-पंक्तेः कश्चन शाब्दबोधप्रकारः प्रदर्शितः स चाश्रुतपूर्व एवे"ति। अत्रेदमुच्यते नहि सर्वैरभिज्ञैः सर्वविधः शाब्दबोध-प्रकारः श्रुतः श्रूयते श्रोष्यते वा। अभिनवोऽयं यदि शाब्दबोधप्रकारस्तदा नवाविर्भावकत्वात् प्रशंसायोग्य एव प्रबन्धकः। कथमपि नात्र दोष-लेशावकाशः।

द्वितीयदोषश्च—"निश्चये पूजासम्बन्धश्च स्वाव्यवहितोत्तरदिनवृत्ति-

---

* स्मार्तीय-देवीविसर्जनव्यवस्थामवलम्ब्य प्रवृत्ते वादे पक्षप्रतिपक्षभूताना-मुभयेषामप्यपक्षभेदेन द्विशो निबन्धान् मुद्राप्य दत्तोऽस्माभिः स्वाभिमतप्रकाशाय प्रकाममवकाशस्तेभ्यः। क्रमेणातिभूमिं गतश्चायं विषयः कदाचित् पाठकानां विरागं जनयेदिति नातः परमेतद्विषयः कश्चन लेखः पत्रिकायामस्यां प्रकाशयितु-मिष्यतेऽस्माभिः। सं० सा० प० प० स।

विषयतानिरूपकत्वम् । नवमीपूजाव्यवहितोत्तरदिनवृत्तिदेवीविसर्जन-विषयकनिश्चये, स्वाव्यवहितोत्तरदिनवृत्ति-विषयतानिरूपकत्व-सम्बन्धेन, पजाविशिष्ट-कर्तव्यता-प्रकारक-निश्चयस्य च विषयता-सम्बन्धेन विसर्जने वृत्तित्वमस्ति" इति विचाराख्य-द्वितीयप्रबन्धस्य निबन्धकाभिप्रेतार्थप्रतिपादकोऽंशविशेषः ।

तत्र नवमीपूजाव्यवहितोत्तरदिनवृत्ति-देवीविसर्जनविषयक-निश्चये इति सप्तम्यन्तस्य अग्रिमविसर्जने इति सप्तम्यन्तस्य च कीदृशान्वयबोधः स च पाठकैर्विवेचनीयः" इति ।

अत्रेदमुच्यते स्वाव्यवहितोत्तरदिनवृत्तिविषयतानिरूपकत्वसम्बन्धेन, इत्यनन्तरं "पूजायाः" इति पदं लेखकप्रमादान्मुद्राकरप्रमादाद्वा भ्रष्टं जात-मिति । तेनान्वयबोधव्याघातो बभूवेति स्वीक्रियते ।

तृतीयदोषाभासश्च—"पूजानुरोधादित्यत्र षष्ठीसमासेन उक्तरूप-पूजासम्बन्धस्य कथं लाभः ? निश्चयार्थकानुरोधस्य, विषयतारूपकर्मत्वं तत्र षष्ठ्या बोध्यते । अव्यवहितोत्तरदिनवृत्तिविषयतानिरूपकत्वरूपस्य सम्बन्धस्योपस्थापकोऽत्र कश्चिदपूर्वविशेषोऽस्तीति तन्त्रदृष्ट्या न प्रतीयते । अयञ्च प्रकारो निबन्धकस्य स्वकपोलकल्पित एव । राजपुरुष इत्यादौ राजपदस्येवात्र पूजापदस्य तत्सम्बन्धिनि लक्षणाया निपातातिरिक्तनामार्थद्वयस्य भेदान्वयस्याव्युत्पन्नतया अभेदान्वयार्थमावश्यकत्वमित्यपि न वक्तुं शक्यते घटज्ञानमित्यादावित्रापेक्षणीयकर्मप्रत्ययार्थविषयत्व-घटित-पूजाविषयतानिरूपके लक्षणाया एवाभेदान्वयार्थं कर्तव्यताया अत्र तन्त्रसिद्धत्वात्" इति ।

अत्रेदमुच्यते पूजाव्यवहितोत्तरदिने पूर्वाह्णे दशम्यां देवीं विसर्जयेदिति विधिना ; पूजाव्यवहितोत्तरदिनवृत्ति-पूर्वाह्णकालीन-दशमीवृत्ति-देवीविसर्जनं कर्तव्यमिति निश्चयो जायते । तादृश-निश्चयस्य विषयता पूजादिपदार्थेषु प्रत्येकं विभिन्ना वर्तते । पूजायां या विषयता सा न कर्मत्वरूपा, कथं घटज्ञानमित्यत्रेव पूजापदस्य...विषयतानिरूपके लक्षणा कर्तव्या ?

अतः पूजापदस्य पूजासम्बन्धिनि लक्षणाऽवश्यं कर्तव्या। षष्ठीसमासे पूर्वपदस्य लाक्षणिकत्वात् तद्बोधाय षष्ठीसमासेन इत्युक्तम्। सम्बन्धश्च आकाङ्क्षावशेन प्रतीयते। यस्मिन् पदार्थे यस्य यादृशः सम्बन्धो विद्यते, तात्पर्यविषयीभूतश्चेत् स सम्बन्धः प्रतीयते। सम्बन्धोपस्थापकः कश्चिदपूर्व-विशेषः कुत्रापि न विद्यते, कथं तन्त्रदृष्ट्या तत्प्रतीतिर्भविष्यति। विसर्जन-विषयक-कर्तव्यताप्रकारकनिश्चये, प्रागुक्तसम्बन्धेन पूजासत्त्वमस्त्येव। नहि विद्यमानस्यापि सम्बन्धस्य, प्रबन्धकस्य स्वकपोलकल्पितत्वं सम्भ-वति ? अतोऽत्रापि नास्ति दोषावकाशः।

चतुर्थदोषाभासश्च "तृतीयदिने नवमीपूजाविसर्जनयोः स्थले, अव्यव-हितोत्तरदिनवृत्तिविषयतानिरूपकत्वसम्बन्धेन पूजाविशिष्टकर्तव्यता-प्रकारक-निश्चयस्य विषयतासम्बन्धेन विसर्जनेऽवृत्तित्वमित्ययुक्तमेव" इति।

अत्रेदमुच्यते नह्येकेन विधिना विविधविसर्जनानां व्यवस्था संभवति। उभयदिने पूर्वाह्णमुहूर्तव्याप्तदशमीलाभे पूजाव्यवहितोत्तरदिने विसर्जनस्या-नेन बाधितत्वात्। तृतीयदिने नवमीपूजाविसर्जनस्थले, पूर्वाह्णदशम्यां देवीं विसर्जयेदिति सामान्यविधिविषयत्वमस्त्येव, कथमत्र दोषावसरः ? अत-श्चतुर्थदिने पूजाप्राप्तिस्थले पञ्चमदिने विसर्जनं सङ्गतमेवेति।

किञ्च, यत्र चतुर्थदिने देवीविसर्जनं तत्र निषेधविधि-पूजाव्यवहितोत्तर-दिने विसर्जन-विधायक-विध्योर्द्वयोः परस्परं बाधनिरपेक्षं प्रवृत्तिः। चतुर्थ-दिने नवमीपूजानन्तरं विसर्जने निषेधविधेः प्रवर्तकत्वे, पूजाविशिष्टविसर्जन-विधायकशास्त्रस्य बाधः स्यात्, तथा च एकत्र बाधसापेक्षप्रवर्तकत्वे सत्यन्यत्र बाधनिरपेक्षप्रवर्तकत्वाद् विधिवैरूप्यदोषापत्तिः। यस्मात् पूजानु-रुद्धविसर्जनभिन्नविसर्जनस्थल एव निषेधविषयत्वमिति युक्तमुत्पश्यामि।

———

# आश्रमधर्मः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः एम्. ए. ]

उपवीतत्यागः सर्वथा न कर्तव्यस्तदाह कात्यायनो यथा—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत् करोति न तत् कृतम् ।। इति ।

भृगुश्चाह—

मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ।
सकृच्चाधारणात्तस्य प्रायश्चित्ती भवेद् द्विजः ॥ इति ।

विशेषमाह स एव यथा—

तैत्तिरीयाः कठाः काण्वास्तथा वाजसनेयिनः ।
कण्ठादुत्तार्य सूत्रन्तु कुर्युर्वै क्षालनं द्विजाः ।।
बह्वृचाः सामगाश्चैव ये चान्ये यजुःशाखिनः ।
कण्ठादुत्तार्य सूत्रन्तु पुनरर्हन्ति संस्क्रियाम् ।। इति ।

उपवीतं जीर्णं त्रुटितं वा चेत् स्यात् तदोपवीतान्तरग्रहणविधिमाह मनुर्यथा—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः ।। इति ।

भृगुश्चाह—

पाचितं त्रुटितं वापि ब्रह्मसूत्रं यदा भवेत् ।
नूतनं धारयेद् विप्रः स्नान-सङ्कल्पपूर्वकम् ।।
आचम्य प्रतिसूत्रन्तु त्रिगुणीकृत्य यत्नतः ।
यज्ञोपवीतमेकैकं प्रतिमन्त्रेण धारयेत् ॥ इति ।

मेखलामाह मनुर्यथा—

मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शनतान्तवी ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव च ॥ इति ।

ज्या रज्जुः सा कदाचिच्चर्ममयी भवति कदाचिद्वा तृणमयी। तत्र चर्ममयीव्यावृत्त्यर्थं मौर्वीति पदमिति मेधातिथिः। एषामभावेऽनुकल्पमाह स एव यथा—

मुञ्जालाभे तु कर्तव्या कुशाश्मन्तक-वल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव च ॥ इति ।

अत्रैकेन त्रिभिरित्यादि प्रवरभेदेन विज्ञेयम्। तथा चैकप्रवरस्यैको ग्रन्थिः त्रिप्रवरस्य त्रयः पञ्चप्रवरस्य पञ्चेति। मुञ्जेत्यादीनि तृणनामानि। आश्वलायनोऽन्यथाह यथा—

तेषां मेखला, मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्यावी वैश्यस्येति। अवीति अजसूत्रम्। तेन वैश्यस्य शनतन्तुमय्या सह अस्या विकल्पो बोध्यः। हिरण्यकेश्यप्येवम्। अभावे शङ्ख आह—"सर्वेषां वा मौञ्जी"ति।

अथ दण्डमाह मनुर्यथा—

ब्राह्मणो विल्व-पालाशौ क्षत्रियो वट-खादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥ इति ।

अन्ये त्वन्यथापि विदधति। यथाश्वलायनः—

"तेषां दण्डाः पालाशो ब्राह्मणस्यौदुम्बरः क्षत्रियस्य वैल्वो वैश्यस्येति"। पारस्कर आह—"पालाशो ब्राह्मणस्य दण्डो वैल्वो राजन्यस्यौदुम्बरो वैश्यस्येति"। व्यवस्था च देशाचारात् कुलाचाराद् वेदभेदेन वा द्रष्टव्या। एषामभावे गौतम आह—"यज्ञियो वा सर्वेषामिति"। यज्ञियो यज्ञार्ह-वृक्षोद्भवः। यज्ञियवृक्षमाह ब्रह्मपुराणे यथा—

शमी-पलाश-न्यग्रोध-प्लक्ष-वैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ विल्वश्चन्दनः सरलस्तथा ॥

शाल्वश्च देवदारुश्च खदिरश्चेति यज्ञियाः । इति ।

शौनक आह—"एतेषामप्यलाभे तु सर्वेषां यज्ञियाः स्मृताः" इति । एतेषां मन्वादिविहितपलाशादीनामलाभे ब्राह्मणादीनां सर्वेषां यज्ञिया यज्ञीय-वृक्षोद्भवा दण्डा इत्यर्थः ।

दण्डलक्षणमाह मनुर्यथा—

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः ॥ इति ।

अस्य परिमाणमाह स एव यथा—

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥ इति ।

आश्वलायन-पारस्करावप्याहतुः—"केशसम्मितो ब्राह्मणस्य दण्डो ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैश्यस्येति"। यत्तु वशिष्ठः—"घ्राण-सम्मितो ब्राह्मणस्य ललाटसम्मितः क्षत्रियस्य केशसम्मितो वैश्यस्येत्याह तद्देशाचारतो बोध्यम् । एतेषां धारणस्य नित्यत्वमाह याज्ञवल्क्यो यथा—"दण्डाजिनोपवीतानि मेखलाञ्चैव धारये"दिति । यमश्चाह—

दण्डं कमण्डलुं वेदं मौञ्जीञ्च रसनां तथा ।
धारयेद् ब्रह्मचर्यञ्च भिक्षान्नाशी गुरौ वसेत् ॥ इति ।

ब्रह्मपुराणेऽपि—

मेखलामजिनं दण्डमुपवीतञ्च नित्यशः ।
कौपिनं कटिसूत्रञ्च ब्रह्मचारी तु धारयेत् ॥ इति ।

( क्रमशः )

———

# प्रशान्तरत्नाकरम्

( शिष्टांशः )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

सुमतिः—वत्स, कुमतिर्मे वैरिणी, तया सुतरां समधिष्ठिते त्वयि स्वाधिकारं प्रकटयितुमशक्ता सुदुःखिता दृढं ते सन्निहिता नाभूवम्, इदानीं तया पापकारिण्या विमुक्तोऽसि, अत एवाद्य सुसन्निहितास्मि।

रत्ना—अयि मातः! यद्यद्य सकरुणा सुसन्निहितासि, तत् किमिति दावदग्धे चेतसि नैव शान्तिमनुभवामि ?

सुमतिः—नूनमतः परमनुभविष्यसि।

रत्ना—मातः! कदा नु खलु शान्तिं लप्स्ये ?

सुमतिः—वत्स, अलं नैराश्येन,

लप्स्यसे विमलां शान्तिं गुरुणा दीक्षितो यदा।
अन्विष्यतां गुरुः सोऽयं स ते शान्तिं प्रदास्यति॥

रत्ना—कुतः कदा वा स मया लब्धव्यः।

सुमतिः—वत्स, इतो नातिदूरे सरयूतटे महावीराधिष्ठितं शान्ति-निकेतनं नाम पुण्यकाननमस्ति।

रत्ना—आं, अस्ति, ज्ञायते।

सुमतिः—तत्रैव त्वया गुरुर्लब्धव्यः। तदलं कालात्ययेन,

असारां संसृतिं मत्वा सारे चित्तं निवेशय।
गुरौ ब्रह्मणि विश्वस्तः परमार्थेन युज्यसे॥

तदहमिदानीं गच्छामि, काले पुनर्मां द्रक्ष्यसि ( अन्तर्हिता )।

रत्ना—अये, न सा दृश्यते, तत् क नु खलु सा दृश्यमानैव नष्टा ? अपि नाम स्वप्न एष स्यात्. अथवा न चास्मि प्रसुप्तः, कुतो वा प्रबुद्धस्य स्वप्नः ? तत् किन्नु खल्विदम् ? अयि मातः!

विद्युत्प्रणाशं सहसा प्रनष्टा
कथं तमो गाढतमं करोषि ?
दृष्टिं गता नेत्रसुधां विकीर्य
भूयोऽपि मे तर्पय तप्तचित्तम् ॥

( नेपथ्ये )

सुमतिः—वत्स, अलमुत्कण्ठया, नायं स्वप्नः, प्रबुद्धोऽसि, तदतः परं यथादिष्टमनुष्ठीयताम्, काले पुनरहं प्राप्स्यामि ।

रत्ना—अये, स एवायं स्नेहामृतनिष्यन्दी स्वरः ! अयि मातर्नमस्ते, एषोऽहमकालहीनं तवाज्ञामनुवर्ते । गुरो ! क नु खलु वर्तसे ? अपि नाम तत्रैव त्वां लप्स्ये ? अथवा भूतार्थवादिन्यो देवता भवन्ति, तन्नूनमेव लप्स्ये । रत्नाकर, किमद्यापि विलम्बसे ? सत्वरो भव ।

एष शान्तिपथे मात्रा कारुण्येन नियोजितः ।
क्षणमात्रविलम्बेन नो कृत्यं नाशय स्वयम् ॥

( परिक्रामन ) गुरो ! क नु खलु वर्तसे, प्रसीद, देहि मे दर्शनम् ।

त्वयाहं दीक्षितो मूढः प्रयास्यामि शुभां गतिम् ।
संसारे तमसाकीर्णे त्वमेव मम सम्बलम् ॥ ( निष्क्रान्तः )

( ततः प्रविशति सवीणावादं गायन नारदः )

सङ्गीतम्

नारदः— परिहर जड विषयनिगडमधिकुरु गुरुपादं
स खलु दिशति मूढजगति हृदयतिमिरबाधम् ।
पञ्चानन-चतुरानन-कमलापतिदेवता
गुरुरिति हृदि कुरु निरवधि नय भयमवसादम् ॥

आदिष्टोऽस्मि तातेन चतुराननेन, यथा वत्स, नारद, गच्छ सत्वरं शान्तिनिकेतनं नाम पुण्यवनं, तत्र त्वया सुचिरं साहसिक्या तस्करवृत्त्या प्रचितदुष्कृतस्य रत्नाकरस्य निखिलमलप्रक्षालनक्षमेण श्रीराममन्त्रेण दीक्षा

निष्पाद्येति। तदिदमेव तच्छान्तिनिकेतनं, यावदत्र रत्नाकरमपेक्षमाणस्तिष्ठामि। अये, शान्तमिदं दैवतपदम्! तथाहि—

एते केशरिशावकैः सह मुदा क्रीडन्ति बाला मृगाः
सर्पाः केकिकुलैः पिबन्ति युगपद् वृक्षालवाले पयः।
सौम्याः पुष्पफलैर्विचित्ररचना वृक्षा लताश्चाभितः
पुण्येऽस्मिन् विशतो ममाद्य सुतरामानन्दभूमोदयः॥

तत कदा नु खलु रत्नाकरं लब्ध्वा स्वनियोगसम्पादनेन निर्वृतः स्याम्? (दृष्ट्वा) अये, एष रत्नाकरः!

गुरुं विचिन्वन्नभितः समुत्सुकः
स्वकृत्यपङ्कानुशयेन तापितः।
क्लान्तोऽपि दूराध्वपरिश्रमादिभिः
समाग्रहादक्रमवद् विशत्यहो॥

तदस्य देवताप्रसादादचिरं स्वस्ति भूयात्।

(ततः प्रविशति परितो गुरुं विचिन्वन् रत्नाकरः)

रत्ना—गुरो, क्व नु वर्तसे? इदमेव देव्या कथितं पुण्यवनम्! तत प्रसीद, देहि मे दर्शनम्, एष ज्वलितोऽस्मि, दग्धोऽस्मि, कातरोऽस्मि।

शिष्यस्य ते कुरु दयाघन दृष्टिपातं
मूर्त्या ममाभिमुखमेहि दयस्व दीने।
त्वद्दर्शनेन रहितस्य युगायते मे
नाथ क्षणोऽपि तदलं समयात्ययेन॥

नारदः—अहो, सुतरां व्याकुलो रत्नाकरः! तदुपसर्पामि। (उपसृत्य) वत्स, रत्नाकर! अलं वैक्लव्येन, एष प्राप्तस्ते गुरुः, एहि वत्स!

रत्ना—अये, एष मे गुरुः!

यस्य दर्शनमात्रेण प्रशान्तमिव मे मनः।
सुधापूरावगाहेन तापः क्वापि लयं गतः॥

भगवन्, एष ते दासः प्रणमति।

नारदः—वत्स, अचिरं तापशान्तिं लभस्व।

रत्ना—नूनमिदानीं लप्स्ये भगवत्प्रसादेन। तदाज्ञापयतु मां गुरुः।

नारदः—वत्स, रत्नाकर, इदमदूरे दृश्यते दैवतसरः, अत्र प्रविश्य स्नानपूतो भव। यावदहं गृहीतपूजोपकरणः सत्वरं तत्र मिलितो भवामि।

रत्ना—एवं यथाज्ञापयति गुरुः। ( निष्क्रान्तः )

नारदः—स्नानाय प्रस्थितो रत्नाकरः। तद् यावदहमपि सत्वरं पूजोपकरणानि संगृह्य तत्रैव गच्छामि। अहो आश्चर्यम्! अहो दैवताभिनिवेशः!

कथं केन कदा देवा दयन्ते कस्य वा दृढम्।
विज्ञातुं नैव तच्छक्यं गहनो दैवतः क्रमः॥

भवतु तावत्, स्वकृत्यमिदानीमनुतिष्ठामि ( निष्क्रान्तः )।

( तत प्रविशति सुमतिः )

सुमतिः—अहो प्रसन्नास्मि। अद्य रत्नाकरो मे दीक्षया शुद्धिं लप्स्यते। वत्स, रत्नाकर, न जानासि, कीदृशमानन्दमद्य प्राप्तास्मि। लभस्व वत्स, शान्तिं लभस्व। स्वयं शान्तिं लब्ध्वा ममापि शान्तिं निर्वर्तयस्व। अये, एष रत्नाकरः स्नानाय व्रजति। अहो सत्वरता! अहो गुरौ विश्वासः! तदस्य तावानाग्रह एव महते फललाभाय पर्याप्तो भविष्यति। अये एष सरस्तीरमुपगम्य श्रद्धया नमस्कृत्य स्नानाय जलं प्रविशति। ( विस्मयं रूपयित्वा ) अये कुतो नु खलु मेघमन्तरेणापि गगनात् सलिलपातः? ( आकाशं दृष्ट्वा ) आम्! एष पितामहः शून्यमधितिष्ठन् सलिलावतीर्णस्य रत्नाकरस्य शिरसि कमण्डलुतोयमभिवर्षति! अहो दैवतप्रसादः! तत् किमनेन लोकोत्तरं किमप्यनुष्ठेयमित्यभिप्रैति। अये एष भगवान् नारायणः, एष महेश्वरः, एते सिद्धा, एते चान्ये देवनिकायाः! तत् किन्तु खल्विदम्? ( विचिन्त्य निर्णयं रूपयित्वा ) आम् एवम्? एष रत्नाकरो दीक्षां गृहीत्वा मन्त्रजापसिद्धः काले वाल्मीकिर्भूत्वा रामायणनिर्माणेन जगदिदं दुःखपङ्कमग्नमुद्धरिष्यतीति। आम्! अत

एवायं महान् समारम्भः ! अये एष रत्नाकरः समाप्तनियमाभिषेकः सरस्तीरमारुह्य सोपकरणं सन्निधिगतं नारदमभिवन्दते। एष नारदः पूजां निर्वर्तयति, अहो रत्नाकरस्य भक्तिः ! एष एकनिष्ठः कृताञ्जलिस्तिष्ठति। एष नारदः प्रहृष्टाननो भक्तिप्रह्वस्य रत्नाकरस्य दीक्षामुपक्रमते। अहो रत्नाकरस्य औत्सुक्यम् ! ( विषादं रूपयित्वा ) हा धिक् ! प्रमादः ! हा धिक् प्रमादः !! एष जडजिह्वः कथमेतावद्भिरुपचारैः पवित्रतां नीतोऽपि न स्वेष्टमन्त्रं यथार्हमुच्चारयितुमीष्टे ? तदत्र का गतिः ? ( हर्षं रूपयित्वा ) अहो निपुणता नारदस्य ! एष किल मरशब्दममरशब्दञ्च द्वन्द्वसमासेन यथाक्रममेकीकृत्य सन्धिवशेनान्तराभूतं रामशब्दमभ्यासेन ग्राहयति। अये एष सफलः समारम्भो देवर्षेः ! अहो निर्वृतास्मि। अथेदानीं रत्नाकरस्यातिसन्निहिता क्रमेण सात्त्विकीं वृत्तिमस्य दृढीकरोमि ( निष्क्रान्ता )।

( ततः प्रविशति नारदो रत्नाकरश्च )

नारदः—वत्स, रत्नाकर, साम्प्रतं सम्यग् गृहीतमन्त्रोऽसि। अथेदानीं कथय, चक्षुषी निमील्य मन्त्रं जपन् किं पश्यसीति।

रत्ना—( यथोक्तं कुर्वन् ) गुरो, पश्यामि, अदृष्टपूर्वं किमपि पश्यामि।

नारदः—कथय, किं पश्यसि ?

रत्ना—दूर्वाश्यामतनुस्तनूकृतमहाध्वान्तः श्रिया दीप्रया
वामे शक्तिकया कयापि रुचिरः श्रीरत्नसिंहासने।
भक्तैरञ्जलिभिः सदा सुरनरैरभ्यर्चितो भूतये
स्निग्धेनाक्षियुगेन सिञ्चति सुधाधारां मुहुः शान्तये ॥

नारदः—वत्स, रत्नाकर ! एष एवाभीष्टदेवस्ते। एनं चेतसि ध्यायन्नभीष्टमन्त्रं सुचिरं जप्त्वा परमार्थं लप्स्यसे।

रत्ना—अहो सुतरामनुगृहीतोऽस्मि गुरुणा प्रसन्नेन।

नारदः—वत्स, अस्ति वक्तव्यशेषः।

रत्ना—आज्ञापयतु मां गुरुः।

नारदः—वत्स, अदूरे न्यग्रोधं पश्यसि ?

रत्ना—अथकिम्।

नारदः—अस्यैव मूले स्थिरमासनं कल्पय। यावन्न ते जपेन मन्त्र-सिद्धिस्तावन्नेदं परित्यक्तव्यम्।

रत्ना—भगवन्, किञ्चित् प्रष्टुमिच्छामि, यद्याज्ञापयति गुरुः।

नारदः—पृच्छ वत्स।

रत्ना—एतत् पृच्छामि—अथ अस्ति मन्त्रसिद्धिमधिकृत्य वृक्षान्तराद् न्यग्रोधे कश्चिद् विशेषः ?

नारदः—आं ज्ञातम्! वत्स, न्यग्रोधशाखायां मृतं पितरं स्मरसि ? अहो संसारानुबन्धः! वत्स, मदीयवरप्रभावेण अतीतानुबन्धात् खेदं नाप्स्यसि। तद् यथादिष्टमनुष्ठीयताम्।

रत्ना—यथाज्ञापयति भगवान्। ( न्यग्रोधमूलमुपसर्पति )।

( ततः प्रविशति सुमतिः )

सुमतिः—देवर्षे, नमस्ते। वत्स, रत्नाकर।

नारदः—अये सुमतिः प्राप्ता !

रत्ना—अये, सैव मे जननी ? जननि, एष ते पुत्रो रत्नाकरः प्रणमति।

सुमतिः—वत्स, स्वाभीष्टलाभेन सुखी भूयाः।

रत्ना—अनुगृहीतोऽस्मि।

सुमतिः—वत्स, अपीदानीं सद्गुरुलाभेन शान्तिं गतोऽसि ?

रत्ना—अथ किम्। जननीप्रसादात् सद्गुरुं लब्ध्वा शान्तिमानस्मि। मातृप्रसादादेव प्रियमिदमनुभूयते।

सुमतिः—वत्स, रत्नाकर, चिरादतिप्रियोऽसि। तथापि त्वयि लब्धाधिकारां कुमतिमसहमाना दूरे स्थिता विषादमन्वभवम्। अद्य दिष्ट्या सुसन्निकृष्टा महान्तं हर्षमनुभवामि। तत् कथय वत्स, किन्ते भूयः प्रियमुपहरामि ?

रत्ना—अयि मातः।

त्वत्सम्पर्काद् गुरुरुपगतो विश्वदृश्वा दयावान्
मन्त्रः प्राप्तो हृदि समुदितो यत्प्रभावात् स्वदेवः ।
अन्तस्तापः प्रशममगमच्चित्तमेतत् प्रशान्तम्
किं वा देवी दिशतु यदितः काम्यमन्यन्ममास्ते ॥

तथापीदमस्तु

न्यग्रोधमूलेऽत्र कृतासनस्य
वातातपाद्यैरनभिद्रुतस्य ।
रत्नाकरस्यास्तु निजेष्टसिद्धिः
सर्वं जगन्नन्दतु काम्यलाभात् ॥

सुमति-नारदौ—एवमस्तु देवताप्रसादात् ।

समाप्तमिदं नाटकम्

---

# সংস্কৃতশিক্ষার্থিগণের প্রতি বিজ্ঞাপন

—:o:—

এতদ্দ্বারা সংস্কৃতশিক্ষার্থী ছাত্রদিগকে জানান যাইতেছে যে, সংস্কৃত-সাহিত্য-পরিষচ্চতুষ্পাঠীর অধ্যাপনা নিয়মিতভাবে আরম্ভ হইয়াছে। কাব্য, ব্যাকরণ, সাংখ্য, বেদান্ত, স্মৃতি, মীমাংসা, পুরাণ প্রভৃতি শাস্ত্রে অধ্যয়নার্থী ছাত্রগণ উক্ত চতুষ্পাঠীতে আসিয়া যথাসময়ে অধ্যয়ন করিতে পারে।

সম্প্রতি এখানে ছাত্রদিগকে মাসিক বৃত্তি দেওয়ার কোন ব্যবস্থা নাই, তবে যাহারা পরিষৎ হইতে "বঙ্গীয় সংস্কৃত এসোসিয়েসন" এর অধীন আদ্য, মধ্য ও উপাধি পরীক্ষায় উত্তীর্ণ হইবে তাহাদিগকে গুণানুসারে পুরস্কার-প্রদানের ব্যবস্থা আছে এবং পরিষদের ছাত্রগণ পরিষৎ-পুস্তকালয়ে গ্রন্থসমূহ অধ্যয়নের যেরূপ সুবিধা পাইবে অন্য ছাত্রের পক্ষে সেরূপ সুবিধা পাওয়া ও বিভিন্ন গ্রন্থকারের গ্রন্থাদি পর্য্যালোচনা করা সম্ভবপর নহে। কোন কোন ছাত্রের মাত্র থাকিবার বন্দোবস্ত হইতে পারে।

নূতন যে সকল ছাত্র ভর্ত্তি হইবে তাহাদিগকে যত শীঘ্র সম্ভব সংস্কৃত-সাহিত্য-পরিষৎ-সম্পাদকের নিকট নিজ নিজ যোগ্যতার উল্লেখ করিয়া আবেদন করিতে হইবে।

———

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरभाद्रस्य २२श (द्वाविंश)-दिवसे भृगुवासरे सायं सप्तवादनतो भविष्यतीति तत्र परिषत्-सदस्यानां समुपस्थितिः प्रार्थनीया।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—২২শে ভাদ্র, ১৩৪৬, শুক্রবার, সন্ধ্যা ৭টার সময়ে হইবে। এই সভায় আগামী বর্ষের জন্য কার্য্য-নির্ব্বাহক-সমিতি ও বিভাগীয় কর্ম্মপরিচালক নির্ব্বাচিত হইবে। পরিষদের সভ্যগণের উপস্থিতি একান্ত প্রার্থনীয়।

---

## প্রয়োজনীয় বিজ্ঞাপন

৩১শে অক্টোবর, ১৯৩৯—আবেদনের শেষ তারিখ

(পণ্ডিত মহাশয়গণের বিশেষ দ্রষ্টব্য)

কলিকাতা করপোরেশনের প্রধান কর্ম্মাধ্যক্ষ মহাশয় ইং ১৩।৫।৩৯ তারিখের বিজ্ঞাপনে জানাইয়াছিলেন যে, বঙ্গীয় ব্যবস্থা-পরিষদের (Bengal Legislative Assemblyর কলিকাতা সাধারণ এবং কলিকাতা সাধারণ স্ত্রীলোক এবং অন্যান্য নির্ব্বাচন-কেন্দ্রের ভোট-দাতাদিগের তালিকায় স্বীয় নাম অন্তর্ভুক্ত করিবার জন্য প্রয়োজনীয় যোগ্যতা-সম্পন্ন ব্যক্তিগণকে ইংরাজী ৩১শে জুলাই, ১৯৩৯ (বাংলা ১৩৪৬ সালের ১৫ই শ্রাবণ) এর মধ্যে কলিকাতা করপোরেশনের নির্ব্বাচন-বিভাগে **নির্দ্দিষ্ট ফর্ম্** পূরণ করিয়া আবেদন করিতে হইবে। এখন ঠিক হইয়াছে যে, ৩১শে অক্টোবর (১৪ই কার্ত্তিক, ১৩৪৬) এর মধ্যে আবেদন করিলেই হইবে।

**দ্রষ্টব্য**—ম্যাট্রিকুলেশন পরীক্ষায় উত্তীর্ণ, **বঙ্গীয় সংস্কৃত এসোসিয়েশন** অথবা **ঢাকা পূর্ব্ববঙ্গ সারস্বত সমাজের উপাধি** পরীক্ষায় উত্তীর্ণ অথবা মধ্য ইংরাজী পরীক্ষায় উত্তীর্ণ ব্যক্তিগণ শিক্ষার যোগ্যতা-দ্বারা উক্তরূপ ভোটদাতা হইতে পারেন। স্ব স্ব সার্টিফিকেট-সহ নির্দ্দিষ্ট ফর্ম্মে ১৪ই কার্ত্তিকের মধ্যে আবেদন করিতে হইবে। করপোরেশন আফিসে উক্ত ফর্ম্ পাওয়া যায়, কিছু ফর্ম্ সংস্কৃত-সাহিত্য-পরিষদেও আনাইয়া রাখা হইয়াছে।

Reg. No. C. 1073



Vol. XXII, No. 5 ] [ September, 1939
१८६१ शकीये भाद्रे २२श-वर्षस्य ५म-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,

Shyambazar, Calcutta.

# मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौराश्विनस्य २३श (त्रयोविंश)-दिवसे कुजवासरे सायं सप्तवादनतो भविष्यतीति तत्र संस्कृतभाषाध्यायिना-मध्यापकानाञ्च समुपस्थितिः प्रार्थनीया।

# মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—২৩শে আশ্বিন, ১৩৪৬, মঙ্গলবার, সন্ধ্যা ৭টার সময়ে হইবে। সংস্কৃত-ভাষাধ্যায়ী ছাত্র এবং অধ্যাপকগণের উপস্থিতি প্রার্থনীয়।

এই সভায় শ্রীযুক্ত সরোজকুমার ভঞ্জ, বি. এ. লিখিত 'সাহিত্যশাস্ত্রস্য কীদৃশী শিক্ষা সাম্প্রতমুপযুক্তা'-শীর্ষক প্রবন্ধ পঠিত হইবে।

---

# প্রয়োজনীয় বিজ্ঞাপন

৩১শে অক্টোবর, ১৯৩৯—আবেদনের শেষ তারিখ

( পণ্ডিত মহাশয়গণের বিশেষ দ্রষ্টব্য )

কলিকাতা করপোরেশনের প্রধান কর্ম্মাধ্যক্ষ মহাশয় ইং ১৩।৫।৩৯ তারিখের বিজ্ঞাপনে জানাইয়াছিলেন যে, বঙ্গীয় ব্যবস্থা-পরিষদের (Bengal Legislative Assemblyর কলিকাতা সাধারণ এবং কলিকাতা সাধারণ স্ত্রীলোক এবং অন্যান্য নির্ব্বাচন-কেন্দ্রের ভোট-দাতা-দিগের তালিকায় স্বীয় নাম অন্তর্ভুক্ত করিবার জন্য প্রয়োজনীয় যোগ্যতা-সম্পন্ন ব্যক্তিগণকে ইংরাজী ৩১শে জুলাই, ১৯৩৯ ( বাংলা ১৩৪৬ সালের ১৫ই শ্রাবণ ) এর মধ্যে কলিকাতা করপোরেশনের নির্ব্বাচন-বিভাগে **নির্দ্দিষ্ট ফর্ম্** পূরণ করিয়া আবেদন করিতে হইবে। এখন ঠিক হইয়াছে যে, ৩১শে অক্টোবর ( ১৪ই কার্ত্তিক, ১৩৪৬ ) এর মধ্যে আবেদন করিলেই হইবে।

দ্রষ্টব্য—ম্যাট্রিকুলেশন পরীক্ষায় উত্তীর্ণ, **বঙ্গীয় সংস্কৃত এসোসিয়েশন** অথবা **পূর্ব্ববঙ্গ সারস্বত সমাজের** উপাধি পরীক্ষায় উত্তীর্ণ অথবা মধ্য ইংরাজী পরীক্ষায় উত্তীর্ণ ব্যক্তিগণ শিক্ষার যোগ্যতা-দ্বারা উক্তরূপ ভোটদাতা হইতে পারেন। স্ব স্ব সার্টিফিকেট-সহ নির্দ্দিষ্ট ফর্ম্মে ১৪ই কার্ত্তিকের মধ্যে আবেদন করিতে হইবে। করপোরেশন আফিসে উক্ত ফর্ম্ পাওয়া যায়, কিছু ফর্ম্ সংস্কৃত-সাহিত্য-পরিষদেও আনাইয়া রাখা হইয়াছে।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

September, 1939 | १८६१-शकीये भाद्रे २२श-वर्षस्य ५म-संख्या | Vol. XXII, No. 5.



## आयुर्वेदे धान्वन्तरीयं तन्त्रम्*

[ निबन्धकः—कविराज-श्रीज्योतिषचन्द्र-सरस्वतीः ]

स्वातन्त्र्यमभीप्सुभिः सुसभ्यैर्मानवैर्जगत्यस्मिन्, अन्ने वस्त्रे, चिकित्सिते च पारतन्त्र्यं सर्वथाऽपरिहार्यम्, इत्यत्र नास्ति केषाञ्चिद् विप्रतिपत्तिः। स्वजनैरपि शासितं राष्ट्रञ्चेत् तेषु परमुखापेक्षि स्यात्, तर्हि तस्य स्वातन्त्र्यं प्रहसनायैव भवति। आर्याणां वर्षोऽयं बहुकृत्वः शकयवनहूणादिभिर्विजितोऽपि नास्य तादृक् स्वातन्त्र्यमपगतम्। आङ्गलशासनात् प्रागपि वर्षोऽयमन्नवस्त्रचिकित्सार्थं कदापि कस्यापि द्वाःस्थो नासीत्। अतएव नामतः पराधीनेऽपि देशेऽस्मिन् स्वातन्त्र्यमव्याहतमेवाभूत्। त्रिष्वेषु विषयेषु जगति विशेषत एव प्राधान्यमलभत। सार्द्धशतवर्षमाङ्गलशासनादस्य यादृशी परतन्त्रता, यादृशी वा परोपजीवितायाता तस्याः प्रतिरोधाय समीहामृते स्वतन्त्रकामिता कीदृशी भवेत्तद् देशहितैषिण एव जानन्ति। विचित्रमेतद् यदेषां पाश्चात्त्यशिक्षितानामस्मद्देशीयानां स्वराजकामिनां सत्यपि चिकित्सिते परतन्त्रे स्वातन्त्र्यकल्पना कीदृग् निरर्थिका स्यादित्यवबोद्धुं शक्तिरपि नास्तीति। आङ्गलशासनाद् वस्त्रेऽपि नः पारतन्त्र्यं

* निखिलभारतीय-वैद्यमहासम्मेलने धान्वन्तर-विभाग-सभापतेरभिभाषणम्।

तादृशमेवायातं यदुद्दिश्य वङ्गीयकविना वङ्गभारत्या हृच्छोणितेनेव लिखितम्—

"आज यदि ए देश छाडे इङ्गराज, कलेर वसन विना किसे रवे लाज,
तवे कि लोक धरवे दिगम्बरेर साज वाकल टेना डोर कोपीन।"

यस्य च संस्कृतया गिराऽनुवाद एवं भवेत्—

त्यजेद् यदीङ्गराजनृपोऽद्य देशं यन्त्रीयवस्त्रेण विना क लज्जा।
दध्याज्जनस्तर्हि दिगम्बरत्वं कौपीनमात्रं परसम्बलं वा ?॥ इति

तादृशी वस्त्रपरतन्त्रता आचत्वारिंशद्वर्षेण कालेन येषामक्लान्तया समीहया येषाञ्च प्रततेनान्दोलनेन कथञ्चिन्निवारिताभूत्, तेषामद्यत्वेऽपि दृष्टिश्चिकित्सायाः स्वातन्त्र्यं प्रति नाकृष्टेति मज्जगतायाः पाश्चात्त्याभिमुख्या मनोवृत्तेरेव फलमिति मन्ये। जन्मगतमिममधिकारं लब्धुं परः-शतैरुत्पीडनैरुत्पीडिता अपि ये खल्वङ्गुल्यग्रेणापि न वैदेशिकं वस्त्रं स्पृशन्ति स्म, त एव स्वल्पेनापि व्याधिनाक्रान्ता भारतीयं चिकित्सितं न विश्वसन्ति। किं ब्रूमस्ते सत्स्वप्यनेकेषु नानाविधेषु स्वास्थ्यप्रदेषु प्रदेशेष्वत्र स्वास्थ्यान्वेषणाय पारेसमुद्रं व्रजन्ति। उपेक्ष्य चायुर्वेदनिर्दिष्टं सुनिर्दिष्टं व्याधिनिर्वाचनमनिर्दिष्टं वैदेशिकनिर्वाचनमेवाद्रियन्ते व्याधि-ज्ञानाय। सत्स्वपि च निर्बाधेषु सुपरीक्षितेषु देशीयभैषज्येषु, स्वशरीरं वैदेशिकभैषज्यानां परीक्षास्थानमेव कुर्वन्तस्तृप्ता भवन्ति। नेयं नोऽति-शयोक्तिः याथार्थ्यमस्याः स्वल्पेन दृष्टान्तेन प्रदर्शयामः।

जानन्ति सर्वे एवंविधा बहवो व्याधयो वर्तन्ते, येषां निदानादिकं नाद्य-त्वेऽपि पाश्च्यात्त्यैर्वैज्ञानिकप्रथया निर्णेतुं शक्यमिति। तेष्विन्फ्लुएञ्जाख्योऽन्यतमः। तस्य च निदानज्ञानाभावाच्चिकित्सितमपि न साम्प्रतमावि-ष्कृतम्। एवं परिस्थितौ देशस्यास्य स्वातन्त्र्यमार्गस्याग्रदूता अस्मद्देश-गौरवाः केचन साध्येनापि तेन व्याधिनाक्रान्ताः सुचिरं व्याधिता अपि डाक्तारसहाया एव परान् क्लेशान् अनुभवन्तोऽपि न खल्वायुर्वेदज्ञानां निदेशं जिज्ञासन्ति। अस्मत्समक्षमेव केनचिद् देशहितैषिणोक्तम्—'अवैज्ञानिक-

देशीयचिकित्सया प्राणलाभाद् वैदेशिकवैज्ञानिकोपक्रमेण मरणमपि वरमिति। अपि चात्रैव नः स्वर्गतैः सम्राड्भिः पञ्चमजर्जमहोदयैः प्राणसंशयेन व्याधिनाक्रान्तैः मोहग्रस्तैरपि यत् प्रलपितं तदेवात्रोल्लिख्यते—

"I am not going abroad, England is good enough for me, I like my own country best, climate or no and I am staying in it." (A. B. P.)

एवमत्रैव देशे कश्चिल्लर्डमहोदयः तस्य स्वदेशीयचिकित्सया मरणं सम्भाव्यमिति विज्ञायापि तामेवाश्रित्य समवर्तिनो वशगोऽभवत्। आत्मीया अपि तस्य सत्यपि तथैव चिकित्सितफले न तच्चिकित्सितविरुद्धं किमप्यत्रुवन् नवा सम्भावितेऽप्यारोग्ये तद्वैदेशिकमुपक्रममाहृतवन्तः। इत्येवं देशप्रीतिं दृष्ट्वापि न चेद्देशहितैषिणः संज्ञा भवेत्तर्हि किं वक्तव्यं वर्तते?

न केवलमस्या दुर्गत्याः कारणत्वेन वैदेशिकी शिक्षैव निर्वचनीया भवति, अत्रत्यानां वैद्यानामपि अल्पाधिका विगीतिर्वर्तत एव। आ बहुतिथात् कालाद् देशेऽस्मिन् आयुर्वेदस्योन्नत्यै नानाविधाः परिषदः सृष्टाः, तासामेवोद्योगेन निखिलभारतीयानि प्रादेशिकानि वा कति कति महासम्मेलनान्याहूतानि। तेषु चानेके आयुर्वेदधुरन्धराः प्राच्यप्रतीच्यचिकित्सानिष्णाताः कति कत्यभिभाषणानि नानाभाषया पठितवन्तः, सर्वत्रैव तु प्रायः सर्व एवैकमत्या प्रतिपिपादयिषव आसन् यद्, आसीद् आयुर्वेदो हि जगति श्रेष्ठं विज्ञानम्, यानि चाद्यत्वे चिकित्साविज्ञानानीहोपलभ्यन्ते, तेभ्यः सर्वेभ्य एव प्रत्नतमः, तेषां सर्वेषां मूलमेष एव; इत्यायुर्वेदस्य प्रत्नतमामेव गौरवगाथां गायन्तस्ते कृतकृत्या अभवन्। सैषा भारती न तस्य कस्यैचिद् भूत्यै न वाहितायाभवत्। परन्त्वत्रैव केचिद् विद्वांसः प्रतिपिपादयिषन्ति यत्, नास्त्यत्र सन्देहलेशोऽपि पुरायुर्वेदस्य श्रेष्ठत्वे प्रत्नतमत्वेऽपि। नानाविप्लवविध्वस्तोऽयं पुनः संस्कारमर्हति, नान्यथैतेन साम्प्रतमत्युन्नतविज्ञानोद्भासितेऽस्मिन् युगे किमपि कार्यं भवितुमर्हति। केचिदं शास्त्रस्य विशेषतः शारीरशल्यशालाक्यानामनेके ग्रन्था विलुप्ता एवेति, त

एव पाश्चात्त्यविज्ञानादाहृत्य पूरणीया इति, इत्येवमप्राकृतादपप्रचारादेव तस्य गरीयोऽहितं सम्पद्यते। न केऽप्येवं प्रचारयामासुः उताहोऽसर्वज्ञा वयं तथा प्रचारयितुं भीतभीता एव यत, सर्वाङ्गसम्पूर्णोऽयमायुर्वेदः, यत्सहाया ये केऽपि वेह यः कश्चन नवीननवीनतरयाऽभिधयाऽभिहितो व्याधिरागच्छतु वा, तं सर्वमेव निरामयीकर्तुं प्रभविष्यन्तीति। किमत्र कारणम् ? आयुर्वेदसेविन इत्याभाषिता अपि वयं तस्य विज्ञानांशमायत्तीकर्तुमप्रभवः, पाश्चात्यचिकित्साया बाह्याडम्बरेण किञ्चिदभिभूताः संवृत्ताः। अङ्के संस्थितं नान्विष्य पाश्चात्त्योट्टङ्कित एव परामास्थां प्रदर्शयामः। तत एव केऽप्यस्मासु राजयक्ष्मणि मुक्ताप्रवालशङ्खशुक्तिभस्मबहुलेन भैषज्येन सहैव क्यालसियाम् ( Calcium ) इत्याख्यं चूर्णविशेषं प्रयोक्तुमभीप्सन्ति। शङ्के केषां वैषैव दृढा धारणा सञ्जाता यत, कुइनीनमृते म्यालेरियाख्यं, विना ष्टिवुरियां वा कालाज्वराख्यं ज्वरं प्रशमयितुं न कान्याप्ययुर्वेदोक्तानि भैषज्यानि समर्थानि भवन्तीति। केऽपि वा तथैव बङ्गीयकविमनुकृत्य बङ्गीयगिरैवं गायन्तोऽकुण्ठा भवेयु :—

एलोप्याथि यदि याय भारत होते, वाँचावे के आर नवीन व्याधिते,
म्यालेरिया कालाज्वरेर भूमिते, मरवे लोक नित्य विना कुइनीन। इति

भावार्थोऽस्य—चेदेलोप्याथिर्भारतात्तु गच्छेत् तर्ह्यस्यां म्यालेरिया कालाज्वरयोर्लीलाभूमौ को नु खलु जीवयेन्नवीनव्याधिभिराक्रान्तम् ? कुइ-नीनाभावात सदैव लोकक्षयो दुर्वारः स्यादिति।

वस्तुतस्तु तथा वयमायुर्वेदनिष्णाताः येनाद्यत्वे एलोप्याथेः सत्यभावे कायचिकित्सासाध्यानां व्याधीनां प्रतिषेधे कथञ्चित् समर्था अपि, शल्य-शालाक्यसाध्यानां प्रतिकारे सर्वथैवासमर्था भवेम, इत्यनेके प्रतीकारा-भावान म्रियेरन इत्यत्र नास्ति सन्देहावसरः। अस्माकं शिक्षायास्त्रुटि-रेवात्रापराध्यति, न खल्वायुर्वेदः। तत्र हि पूर्णत्वेन शल्यशालाक्यसद्भावो-ऽस्माभिः पूर्वपूर्वतरैरभिभाषणैः सम्यक् प्रतिपादितः। नूनं तच्चानेकेषां नयनपथवर्त्यभवत्। पुनरद्य तदेव प्रतिपादयितुमभ्यर्थनासमितेः सभा-

पतिनानुरुद्धाः स्मः। माननीयाः सुहृदः, नानामधुराभिभाषणेन परितृप्तानां भवतां कटीयं मदीया वाणी तृप्तये भवेन्न वेति न जाने। परिवेषकैर्हि स्वकर्मानन्तरमवसरो लभ्येत, कट्वातिशय्य उपभोक्तृणामेव क्लेशः स्यात्। नाहं भवतां क्लेशायैव बुभूषामि। भवतान्तु अतिमधुरोपसेवया कफाधिक्याज्जाड्यमुद्दिश्य कटुतीक्ष्णादीनां युक्तायामपि व्यवस्थायां, कट्वाधिक्यञ्चेदनुभूयेत, तर्हि भवतामेवान्यतमोऽहमिति मत्वा, मधुरेण स्नेहमधुना कट्वाधिक्यमल्पयितुमर्हन्ति भवन्तः।

स्वदेशजभेषजवाणिज्यरक्षायै प्रयतमानैराङ्गलराष्ट्रपतिभिः कोयाक् ( Quack ) इत्यभिधयाऽभिहिता वयं न तथा विक्षुब्धा भवेम, यथा तत्प्रतापतापितैरस्मद्देशीयैरपि राष्ट्रपरिचालकैः। ततोऽपि परं दुःखाकरं नो यत् कथितायुर्वेदसेविभिरस्मासु कैश्चिद् विद्वद्भिः स्वकीयामसर्वज्ञतां प्रच्छादयितुकामैः प्रतिपाद्यते "असंस्कृतो ह्यायुर्वेदः न खल्वद्यत्वे सर्वव्याधिनिराकरणायालमि"ति। सा चेद् भारत्यस्माभिरुपेक्ष्येत, तर्हि मौनं सम्मतिलक्षणमित्यवबुध्यते लोकैरिति तदपयुक्तिजालं खण्डयितुमेव नः प्रयासः समर्थयितव्यो न वेति इमे पारिषदा एव प्रमाणम्। प्रतीच्यपण्डितपुङ्गवैः डाः होर्णले-प्रभृतिभिर्दुरालोचितस्यायुर्वेदस्य न तथाहितं संवृत्तं सञ्जायते वा, यथाऽस्मद्देशीयैः पाश्चात्यतन्त्रनिष्णातैरायुर्वेदसेव्यनुहारिभिर्विद्वद्भिः। इत एव विरुद्धवादिनां पण्डितानां मतमुपन्यस्य तदयौक्तिकतां प्रतिपादयितुं यतामहे। ज्ञानवतीयं परिषदावयोस्तर्कमुपधार्य प्रमाणमप्रमाणं वेति निर्णेष्यति।

एष एव विरुद्धवादिनां संस्कारकामिणामादिमस्तर्को यदहिंसामन्त्रोपासकानां बौद्धराष्ट्रपतीनामादेशादस्मद्देशे शवव्यच्छेदो निवारित इति शारीरतन्त्रस्य तन्मूलकत्वात् प्रत्यक्षपरीक्षाभावाच्च क्रमादवनतेः काष्ठां गतं तन्त्रं कल्पनाबाहुल्येन विसंष्ठुलं सञ्जातम्। ततश्च शारीरतन्त्रमूलका मौलिका ग्रन्था अपि ( ये खलु तेषां मते बहव आसन् ) नानाविप्लवाद् विध्वस्ता साकल्येन नष्टा एव। तत एवाज्ञानतमसाच्छन्नेऽस्मिन् वर्षे ये प्रति-

संस्कर्तारः संहितानामाविरभवन, तेऽपि "स्वयमसिद्धः कथं परान् साधयती"ति न्यायात् तथैव शारीरतन्त्रं प्रतिसंस्कृतवन्तो यथा नानाभ्रमप्रमादजुष्टेन प्रत्यक्षविरोधिना च तेन तन्त्रेण न किमपि कार्यं संसाध्यते। एवं परिस्थितौ 'शारीरे सुश्रुतः श्रेष्ठः' इत्याभाणकं प्राचां 'शारीरे सुश्रुतो नष्टः' इत्येवं परिवर्तयितुं युज्यते, साम्प्रतिकसुश्रुतदर्शनात्। अतो वर्त्तमानग्रन्थाद् दुष्टं शारीरं संछिद्य नवीनं प्रत्यक्षसिद्धं पाश्चात्त्यशारीरादितन्त्रं योजयितुं युज्यत इति।

नायं तर्को विचारसह इति क्रमशो दर्शयामः। ते खलु विरुद्धवादिभिस्तेषां तर्कस्यास्य बौद्धयुगे राजशासनरूपस्य किमपि प्रमाणं नोदाहृतम्। मन्ये तेषां गुरुस्थानीयाः पाश्चात्त्यविद्वांस एवात्र निर्णये हेतवः सञ्जाताः। वयन्त्वस्य तर्कस्य यच्च प्रतिकूलं प्रमाणं यां वा युक्तिं प्रदर्शयामस्तेन सर्वएव सुहृदयास्तस्य तर्कस्यासारतामुपलप्स्यन्ते। सपादवर्षशतद्वयपुरातनी कापि लिपिरस्मत्सन्निधौ वर्तते। तत्रैवं सन्देशो लिखितः—"अन्यच्च श्रीमद् गुणाकरराय-कविराजस्य चिरदर्शनविरहेण समुत्कण्ठचित्तानामेतावद्दूरपर्यन्तं प्रस्थापनेनोत्कण्ठामस्माकं शमयितुमर्हसि—यदि च कार्यविशेषवशादागमनाभावः सम्भाव्यते तस्य तर्हि भ्रातुः श्रीयुतानन्तरामरायकविराजस्य प्रस्थापनमवश्यं विधेयम्। रक्तस्य (वि)पत्तिजनितदोषविशेषनिराकरणाय रक्तमोक्षणस्य प्रतिवत्सरकर्तव्यत्वेनावश्यकत्वमिति।" पत्रादस्मात् शल्यतन्त्रोक्तशोणितमोक्षणाय गुणाकरराय-कविराज आहूतः, तदागमनासम्भवे तस्य भ्राता अनन्तरामरायो वा, इत्युपलभ्यते। पत्रमिदं दिनाजपुरमहाराजेन शुकदेवघोषेण नाटोरमहाराजं रामजीवनरायं प्रति लिखितम्। तयोश्च कालः अष्टादशशतकस्यादिमो भागः। अतस्तदापि आयुर्वेदज्ञ एव शल्यतन्त्रानुसारतश्चिकित्सतिस्मेति नाप्रमाणं वचः। प्राक्तत्त्विकैर्हि तात्कालिकी लिपिः शिलालिपिवत् प्रथमं प्रमाणमिति शस्यते। नेदं प्रमाणमुपेक्ष्यम्।

पुनश्च बौद्धशासनादारभ्य चातुर्वर्ण्यशासनं यावनिकशासनं वा यावत्

ये ये राष्ट्रपतय आसन, न ते सर्वेऽपि पूर्णत्वेनाहिंसाव्रतमनुसरन्ति स्म। तदा खलु बौद्धशासितेऽस्मिन् वर्षे परस्ताद् वा विग्रहादिकं नासीदितीतिहास-विरुद्धं वचः। अतस्तेषु विग्रहादिषु शल्यतान्त्रिकाणामवसरो नासीदित्यप्य-श्रद्धेयम्। तत्रापि बौद्धप्रधाने काले बौद्धस्य वृद्धवाग्भटस्याविर्भावो-ऽभूत्। तस्य च ग्रन्थे चरकसुश्रुतातिरिक्तानां शल्यशालाक्योक्तानां व्याधीनां युक्त उपक्रम उपलभ्यते। विनापि नवीनया गवेषणया तेषां निदानज्ञानमुपक्रमबोधश्च न भवितुमर्हति इति न तदा शल्यशालाक्यानां चर्चामात्र आसीदिति सर्व एवानुमातुं शक्नुवन्ति। अहिंसामन्त्रोपासकैरपि राष्ट्रनायकैर्व्याधितस्य व्याधेरुपशमाय तदङ्गे शस्त्रपातो हिंसापर्याये निक्षिप्त इति कल्पना कष्टैव। हिंसामूलकत्वेन शल्यतन्त्रालोचनं निषिद्धं न तु कायचिकित्सितमिति चेत्तदपि न युक्तियुक्तम्। बौद्धेनैव वृद्धवाग्-भटेन न केवलं व्याधितस्य प्राणरक्षार्थमपि तु श्रीमतामुपभोगाय वाजी-करणतन्त्रे बहुबहुतरा जीवहिंसा विहिता। तद् यथा—

"आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम्।" (उत्तर० ५० अं)

इति। न खलु मृतकखण्डनं व्याधितानां जीवितशरीरे वा शस्त्रोपचारः जीव-हिंसासंज्ञां लब्धुमलं भवति। आर्द्राणि मत्स्यमांसानि तु जीवहननादृते न कदाचित् सम्भवन्ति। साम्प्रतिकबौद्धा इव तदात्वेऽपि स्वयंमृतस्य प्राणिनो मांसमादेयमेवासीद् बौद्धैरिति चेत् केचिद्ब्रूयुस्तर्हि तेषां पुरतोऽयं वाग्भट-श्लोक उपस्थाप्यते—

"अतिमेध्यं त्यजेन्मांसं हतं व्याधिविषौदकैः।
स्वयं मृतं धूमपूर्णमगोचरभृतं कृशम्।
सद्योहतं वयःस्थञ्च शुद्धं सुरभि शस्यते॥" (सूत्र० ७ अ०)

इति। अतस्तदात्वेऽपि जीवहिंसोच्छित्तिप्रसङ्गो युक्तिं नावहति। तथा सति प्रागेव कायचिकित्सायामुल्लिखितानां जीवहिंसामूलकानां भेषजानामेव सत्तालोपोऽभविष्यत्।

अपिच बौद्धशासकानामुन्नतेर्यु ग एवाद्वितीयशल्यतान्त्रिकस्य महर्षिकल्पस्य जीवकस्याविर्भावो विदित एव प्राज्ञतात्त्विकैरिति तत एव कालात् शल्यतन्त्रस्यावनतिः प्रवृत्तेति मतवादं सर्वथा न्यक्करोति।

एवं परिस्थितौ आङ्गलशासनसमय एव राजशक्तिपुष्टविदेशीयचिकित्साविज्ञानेन प्रतियोगितया एव देशीयचिकित्साविज्ञानस्य चर्चाभाव एव सम्भाव्यते। वैदेशिकी हि राजशक्तिः स्वदेशीयविज्ञानपक्षपातित्वेन तस्यैव प्रचारार्थं शिक्षायतनघटनेन शुल्कैर्विना भेषजपथ्यवासस्थानादिवितरणेन च जनतायाः श्रद्धामाकृष्य एतद्देशीयविज्ञानस्य प्रचारे नानावाधाश्चोत्पाद्य सुशिक्षितानामपि वैद्यानां शल्यादितन्त्रालोचना क्लेशायैव सम्पादितवती। येनैव च दौर्भाग्येण चीनांशुकादिसुसूक्ष्मवस्त्रोत्पादकानाम् आदिमभूमौ मानवा लज्जानिवारणाय पारेसमुद्रं देशमपेक्षन्ते, तदेव दौर्भाग्यं परःसहस्राद् वर्षात् सुपरीक्षिते अष्टाङ्गसम्पूर्णे आयुर्वेदे सत्यपि एतद्देशीयानां मानवानां शरीराणि पाश्चात्त्यानामपरीक्षितभेषजानां परीक्षास्थानानि कृत्वा चिकित्साव्यपदेशेन बहुशो निरङ्कुशहत्यायामप्योमिति वाचयत्यस्मान्। अस्मासु यैः खलु आयुर्वेदशल्यशालाक्ययोः कतिचित् पत्राण्यपि नोद्घाटितानि, यैर्वा ते कार्यक्षमे कर्तुं न समीहितम्, त एव चेदेवं ब्रूयुः 'किं वर्तते आयुर्वेदशल्य-शालाक्ययोर्यत् तदालोचनाय श्रमान् कुर्म' इति, तेषां तदेव वचनं स्वकीयां मूर्खतामेव प्रकाशयति यदुक्तं केनचिदुद्भटकविना—

"विमलधियाऽधिगम्ये शास्त्रे खिद्यति जडो न मौर्ख्ये स्वे।
निन्दति कञ्चुककारं प्रायः शुष्कस्तनी नारी॥" इति।

(क्रमशः)

# भारतभा

[ निबन्धकः—श्रीजगन्नाथ-रथशर्मा ]

स्फुरति यस्य गुरोर्नितरां वचो हतधियामपि हृन्मुकुरे मले ।
गहनगी रससागरखेलनाहितमनोऽब्जमरं प्रणमामि तम् ॥१॥
लिख पटे हृदि लेखनि ! निर्मले प्रविश शास्त्रसुधालसदन्तरं ।
जयतु भारतभा-रतिचन्द्रिका किरतु गीतिसुधां जनमानसे ॥२॥
जगति कस्य दशा न समा कदा भजति सूर इहाभ्युदयास्तताम् ।
भवति कालवशान्मनुजेश्वरोऽप्यटन-कर्म-रतो विरतः सुखात् ॥३॥
नियतिनीतिरियं ननु दुर्ग्रहा हरति धीरधियामपि मानसम् ।
हसति योऽद्य परं सुखविह्वलो विलपति श्व इहार्तिपथातिथिः ॥४॥
भरतनीतिपथातिथयो वयं परमसाहसिनः सहसा हसाः ।
जगति सर्वमुपेक्ष्य नरोत्तरैरमरतां करणैर्नितरां गताः ॥५॥
जगति कीर्तिततिर्विमलारसा जनमनोऽहरतेति कथा वृथा ।
अनुभवन्नपि तां वचसाऽधुना क इह हाऽन्यथयेद् गतदृग् न चेत् ॥६॥
वसति सौख्य-सुधोदधिलीनधीस्त्यजति यत्र मुदा त्रिदशालयम् ।
क इह वाञ्छति मोक्षभुवं जड इतरवर्गसुखे विगतस्पृहः ॥७॥
जडवरा अचला अपि यत्र शं नियतमेत्य गता निजनामताम् ।
अभिलषन्ति रिपोः शुभसन्ततिं क इह नेच्छति वा स्वसुखं सुधीः ॥८॥
कुरटनां चपलेति विलापितुं कृतधियेह चला सुखितापि सा ।
स्थितिमतीतरसंगसुखाशयाऽत्यजदमुं प्रकृतिर्ननु दुर्जया ॥९॥
निखिलतत्त्वधियः सुधियः सदा गहनशास्त्र-सृजः परचित्तगाः ।
अपि गताः शमनातिथितां नु तद्रचितशास्त्रवपुस्त्विह राजते ॥१०॥
कविचयस्य यशः-प्रतिमाऽधुना सुवचनं मुकुरं विमलं दृढम् ।
सततमेत्य पुनर्विरहेऽप्यहो न लभते निजनाशदशालवम् ॥११॥

नटति यस्य कलाकलनाऽधुना परिमितिर्गगनस्य यथाऽमिता ।
कलयतां मनसो गमनार्गलां भवति तत्र शिरश्चलनं परम् ॥१२॥
जगति यस्य सदा चरणादरो जनगणो नितरां निजशिष्यताम् ।
अलभतात्र न चित्रमिहापरव्यवहृतावधुना ननु चित्रता ॥१३॥
चरितचित्रण-चित्रकरो मुदा भुजगराड् यदि वै कथकायते ।
तदपि भारतवारिधिपारतां कथमपि प्रथितुं प्रतिभूर्भवेत् ॥१४॥
अहह कालवशादधुना परा जननभूमिरियं भजतेऽस्तताम् ।
भवति योऽभ्युदयाहृतगौरवो रविरिवास्तगतिं लभते पुनः ॥१५॥
सुखपरस्य विभोर्विभुतेदृशो पदभिया हरति स्वजनोन्नतिम् ।
त्रिभुवने यततेऽपरतृप्तये विजहदात्मसुखं कुशलो जनः ॥१६॥
कुरु सखे ! स्वदशां हृदयंगमामनुसराभ्युदये शुभसन्ततिम् ।
भव सदा निजसाररसाग्रही भज सदाऽमलदीप इव स्थितिम् ॥१७॥

---

# आश्रमधर्मः

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः एम., ए. ]

अथ ब्रह्मचारिधर्माः । उपनयनानन्तरं ब्रह्मचारी गुरुसन्निधावेव वसेत् । तथाच विष्णुः—"अथ ब्रह्मचारिणां गुरुकुलवास इति" । अत्र प्राग्गुरुकृत्यमाह मनुर्यथा—

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यञ्च सन्ध्योपासनमेव च ॥ इति ।

शौचप्रयोजनमाह दक्षो यथा—

शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥ इति ।

एवञ्च—

शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥
आशौचाद्धि वरं बाह्यं तस्मादाभ्यन्तरं वरम् ।
उभाभ्यां च शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥ इति ।

शौचस्वरूपमाह स एव यथा—

एका लिङ्गे गुदे तिस्रो दश वामकरे तथा ।
उभयोः करयोः सप्त एतच्छौचं प्रकीर्तितम् ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणन्तु वनस्थानां यतीनान्तु चतुर्गुणम् ॥ इति ।

ततश्च—

दातव्यमुदकं तावन्मृदभावो यथा भवेत् ।
मृदा जलेन शुद्धिः स्यान्न क्लेशो नैव च व्ययः ॥ इति ।

एतच्च पुरीषोत्सर्गानन्तरं शुद्धिविधानम् । एवञ्च दन्तधावनस्नानादीनामपि शुद्धिहेतुत्वं ज्ञेयम् ।

आचारो गुर्वादीनां प्रत्युपस्थानासनदानाभिवादनादिभिरिति मेधातिथिः । प्रत्युपस्थानस्वरूपमाह मनुरेव यथा—

शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् ।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥ इति ।

अभिवादनस्वरूपमाह मेधातिथिर्यथा "येन शब्देन परः सम्बोध्यते आशिषं प्रतिप्रयोज्यते कुशलप्रश्नं वा कार्यते सोऽभिवाद इति" ।

तत्प्रकारमाह मनुर्यथा—

अभिवादात् परं विप्रो ज्यायांसमभिवादयन् ।
असौनामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥
नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥

भोः शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ।। इति ।

अस्यायमर्थः वयोज्येष्ठमभिवादयन् जनोऽहममुकदेवशर्मनामास्मीति ब्रूयात् । यदि केचित् संस्कृतानभिज्ञतयाऽभिवादनार्थं न जानन्ति तान् तथा स्त्रियश्चाभिवादयेऽहमिति ब्रूयात् । तदर्थं मातृभाषया वाऽनूद्य तानभिवादयेत् । स्वनामोच्चारणानन्तरं भोःशब्दश्चोच्चारयेत् । ततश्चाभिवादनेऽभिवादयेऽमुकदेवशर्माहमस्मि भो इति वाक्यं भवति । भोःशब्दोच्चारणेन सम्बोधनस्य फलमाह नाम्नां स्वरूपभाव इत्यादिना ।

अभिवादनानन्तरं प्रत्यभिवादनमप्यभिवाद्येन कार्यमित्येतदाह मनुर्यथा—

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः ।। इति ।

अत्रेदं तात्पर्यम् अभिवादनानन्तरमभिवाद्य आयुष्मान् भव सौम्य अमुकदेवशर्मन्निति वाक्येन प्रत्यभिवादनं कुर्यात् । अत्राभिवादकस्य यन्नाम तस्यान्ते योऽकारादिस्वरः स प्लुतः कार्य इति । प्रत्यभिवादनज्ञानहीनस्याभिवादनं न कार्यमित्येतदाह मनुर्यथा—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ इति ।

ब्राह्मणेन क्षत्रियादयो नाभिवाद्यास्तत्करणे प्रायश्चित्तस्मरणात् । तथाच शातातपः ।

क्षत्रवैश्यावभिवाद्य प्रायश्चित्तं कथं भवेत् ।
ब्राह्मणानां दशाष्टौ वा अभिवाद्य विशुध्यति ।। इति ।
अभिवाद्य द्विजः शूद्रं सचेलं स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति ॥

इति । अभिवादनापवादमाह विष्णुर्यथा —

सभासु चैव सर्वासु यज्ञे राजगृहे तथा ।
नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत् ।। इति ।

एतेषु ब्राह्मणानुद्दिश्य नमःशब्दोच्चारणं कुर्यात् पादस्पर्शपूर्वकं प्रत्येकशो वा न नमस्कुर्यादिति तात्पर्यम्। अभिवादननिषेधमाह स एव यथा—

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम्।
अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति ॥

इति। अहोरात्रोपवासेनेत्यर्थः। वयसा कनीयसामपि केषाञ्चिदभिवादनं न कर्त्तव्यं परन्तु यथाशास्त्रमभिभाषणं विधेयमित्येतदाह मनुर्यथा—

मातुलांश्च पितृव्यांश्च श्वशुरान् ऋत्विजो गुरून्।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ इति।

असाविति स्वनामनिर्देशः। ब्रूयादभिभाषेत न त्वभिवादयेदिति कुल्लुक-भट्टः।

बोधायन आह "ऋत्विक्-श्वशुर-पितृव्य-मातुलानान्तु यवीयसां प्रत्युत्थानाभिभाषणमि"ति। गौतमोऽप्याह—ऋत्विक्-श्वशुर-पितृव्यमातुलानान्तु यवीयसां प्रत्युत्थानमनभिवाद्या इति।

अथ पादोपसंग्रहणप्रकारमाह मनुर्यथा—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥ इति।

पादस्पर्शनञ्चोत्तानहस्तेन कार्यं यदाह पैठिनसिः—

"उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेद्" इति। पादाविति स्पृष्ट्वेत्यध्याहारः। के नाम गुरव इति चेत् तत्राह देवलो यथा—

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महामतिः।
मातुलश्च गुरुस्त्राता मातामह-पितामहौ।
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ॥
माता मातामही गुर्वी पितुर्मातुश्च सोदराः।
पितामही स्वसा ज्येष्ठा धात्री च गुरवः स्त्रियः ॥ इति।

धात्रीति सवर्णा ज्ञेया। उपाध्यायपदञ्चात्राध्यापकपरम्। तेनाचार्योऽपि ज्ञेयः। अनयोर्भेदमाह मनुर्यथा—

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥
एकदेशन्तु यो वेदं वेदाङ्गान्यथवा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यत॥ इति।

वर्णज्येष्ठ इत्यनेन ब्राह्मणः क्षत्रिय-वैश्य-शूद्राणां, क्षत्रियो वैश्य-शूद्रयोः वैश्यः शूद्रस्य चेति बोद्धव्यम्। अभिवादनस्यौपलक्षणिकत्वाद् यदि मातुलादयो यवीयसः स्युस्तदा तेषां पादोपसंग्रहणमपि न कार्यम् अभिभाषणवच्चैषां करशिरःसंयोगादिरूपो नमस्कारः कार्यः।

मनुस्तु स्त्रीणां विशेषमाह यथा—

मातुष्वसा मातुलानी श्वश्रूरथ पितृष्वसा।
संपूज्या गुरुपत्नीवत समास्ता गुरुभार्यया॥
भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि।
विप्रोष्य तूपसंग्राह्या ज्ञाति-सम्बन्धियोषितः॥
पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्यपि।
मातृवद् वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी॥ इत्यादि।

अभिवादननिषेधमाह लघुहारीतो यथा—

जपयज्ञजलस्थश्च समित्-पुष्प-कुशानलान।
उदकुम्भञ्च भैक्षञ्च वहन्तं नाभिवादयेत॥
कुश-पुष्प-समिद्-वारि-मृदन्नकृतपाणिकः।
जपहोमौ च कुर्वाणो नाभिवाद्यः कथञ्चनेति॥

आपस्तम्बश्चाह

समित्-पुष्प-कुशाज्याम्बुमृदन्नाक्षत-पाणिकः।
जपं होमञ्च कुर्वाणो नाभिवाद्यस्तथा द्विजः॥ इति।

भ्रातृजायादयः कनिष्ठा अपि नमस्कार्याः। यथाह नारदः—

मातुः पितुः कनीयांसं न नमस्येद् वयोऽधिकः ।

नमस्येत् तु गुरोर्भार्यां भ्रातृजायां विमातरम् ।। इति ।

यत्तु "गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोरित्या"दिना मनुना नमस्कारो निषिद्धस्तद् युवत्या गुरुपत्न्याः पादोपसंग्रह एव निषिध्यते। तस्या अपि दूरतो नमस्कारे न दोषः ।

अग्निकार्यमिति सायं प्रातरग्नौ समिद्धोमाद्यनुष्ठानम् । ब्रह्मचारिणैतद् नित्यमनुष्ठेयम् । यथाह मनुः

अग्नीन्धनं भैक्षचर्यामधः शय्यां गुरोर्हितम् ।

आ समावर्तनात् कुर्यात् कृतोपनयनो द्विजः ।। इति ।

अग्नीन्धनमग्निकार्यम् । याज्ञवल्क्य आह "अग्निकार्यं ततः कुर्यात् सन्ध्ययोरुभयोरपी"ति तत इति उपनयनानन्तरमित्यर्थः । केचित्तु सायमेवाग्निकार्यमिच्छन्ति तत् शाखान्तरविषयमिति प्रतीमः । तत्र समिदाहरणप्रकारमाह मनुर्यथा

दूरादाहृत्य समिधः सन्निदध्याद् विहायसि ।

सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः ॥ इति ।

वैजवापोऽप्याह यथा "पुरोऽस्तमयात् प्रातः प्रागुदिचीं दिशं गत्वा अहिंसन्नरण्यात् समिधमाहरेदार्द्रामन्नाद्यकामः शुष्कां ब्रह्मवर्चसकाम उभयामुभयकाम" इति ।

अहिंसन् स्वप्रयोजनाधिकमच्छिन्दन् । पुरोऽस्तमयादित्यनेनास्तमिते सूर्ये समिदाहरणं निषिध्यते । तथा चापस्तम्बः "नास्तमिते समिदाहरणायोपगच्छे"दिति ।

समिन्नियममाह स्मृत्यर्थसारे । यथा—

पलाश-खदिराश्वत्थशम्युदुम्बरजा समित् ।

अपामार्गार्कदूर्वाश्च कुशांश्चेत्यपरे विदुः ।

सत्वचः समिधः कार्या ऋजुश्लक्ष्णाः समास्तथा ।

शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु वा ॥

आर्द्राः पक्काः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः ।
अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः ।
ईदृशा होमयेत् प्राज्ञः प्राप्नोति विपुलां श्रियमिति ।

अपरे विदुरित्यनेनापामार्गार्कादीनां समित्तु केषाञ्चिन्मत इत्यायातम् । तथाचाह वायुपुराणे—

पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदलाभेऽर्कवेतसौ ।। इति ।

उक्तालाभे यस्य कस्यचिद् यज्ञीयवृक्षस्य समिद् ग्राह्या। यज्ञीयवृक्षास्तु शमीपलाशन्यग्रोधेत्यादिब्राह्मपुराणीयवचनोक्ता ज्ञेयाः ।

सर्वकर्मसाधारणं समिल्लक्षणमाह कात्यायनो यथा—

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतरा क्वचित् ।
न विमुक्ता त्वचश्चैव न सकीटा न पाटिता ।।
प्रादेशान्नाधिकन्यूना तथा न स्याद् विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥
विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा ।
दीर्घा स्थूला घुणैर्जुष्टा कर्मसिद्धिविनाशिका ॥ इति ।

आसां प्रोक्षणमाहापस्तम्बो यथा "नाप्रोक्षितमिन्धनमग्नावादध्या"दिति ।

अग्निपरिचर्यायां समिदाधानप्रयोजनमाह हारीतो यथा—

पुरा जग्राह वै मृत्युर्हिंसयन ब्रह्मचारिणम् ।
अग्निस्तं मोक्षयामास तस्मात् परिचरेद्धि तम् ।।
ब्रह्मचारी यदा त्वग्नावादध्यात् समिधो नहि ।
गृह्णीयात् तं तथा मृत्युरादध्यात समिधस्ततः ॥ इति ।

सन्ध्योपासनमेव चेत्यनेन मनुना यदुपासनं विहितं तस्यार्थमाह मेधातिथिः, यथा—"सन्ध्यायामादित्यस्योपासनं तत्स्वरूपभावनं सन्ध्योपासनम्" इति । तन्नियममाह मनुर्यथा—

पूर्वां सन्ध्यां जपंस्तिष्ठेन्न सावित्रीमार्कदर्शनात् ।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात् ॥ इति ।

आ अर्कदर्शनात् सूर्यदर्शनं यावत् । आ इत्यभिविधौ । संवर्तश्चाह

सन्ध्यां प्रातः सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् ॥ इति ।

तथा—

तिष्ठन् पूर्वां जपं कुर्याद् ब्रह्मचारी समाहितः ।
आसीनः पश्चिमां सन्ध्यां जपं कुर्यादतोत्वरः ॥ इति ।

तीव्रता त्वरावत्ता सा न विद्यते यस्य सोऽत्वरित इत्यर्थः । सन्ध्याया अकरणे दोषमाह मनुर्यथा—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ इति ।

अथ भैक्षचर्याविधिः । तन्नियममाह मनुर्यथा—

प्रतिगृह्येप्सितं दण्डमभिवाद्य च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥ इति ।

ईप्सितमिति स्वस्ववर्णविहितम् । दण्डग्रहणादित्रयं भिक्षाङ्गतयात्र निर्दिष्टम् । तत्र याच्ञायां प्रार्थनाप्रयोगमाह मनुर्यथा—

भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ इति ।

याज्ञवल्क्यश्चाह—

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मण-क्षत्रिय-विशां भैक्षचर्या यथाक्रमम् ॥ इति ।

गौतमोऽप्याह यथा "आदिमध्यावसानेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येणेति" ।

भिक्षास्थानमाह मनुर्यथा—

वेदयज्ञ रहीनानां प्रसक्तानां स्वकर्मसु ।

२

ब्रह्मचार्याचरेद् भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ।। इति ।

यत्तु याज्ञवल्क्येन "ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये" इत्यनेन ब्राह्मणगृह एव भिक्षाचरणमुक्तं तत्तु सति सम्भव इति बोध्यम् । तदसम्भवे त्वाह व्यासो यथा—

ब्राह्मण-क्षत्रिय-विशश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव च ॥ इति ।

मनुश्चाह यथा—

सर्वं वा विचरेद् ग्रामं पूर्वोक्तानामसम्भवे ।
नियम्य प्रयतां वाचमभिशस्तांस्तु वर्जयेत् ॥ इति ।

गौतमश्चाह "अभिशस्त-पतितवर्जमिति । आपत्काले तु शूद्रगृहादपि ब्रह्मचारिणा भिक्षा कर्तव्या । यदाह विष्णुः—

क्षत्र-वैश्य-गृहेष्वेव क्रियावर्त्तिषु साधुषु ।
चातुर्वर्ण्यं चरेद् भैक्षमापत्काल उपस्थिते ॥ इति ।

शूद्रगृहादामान्नमेव ग्राह्यं तदाहाङ्गिरा यथा—

आममेवाददीतास्मादवृत्तावेकरात्रकम् ।
आमं पूर्यति संस्कारो धर्म्यं तेभ्यः प्रतीच्छताम् ।
तस्मादामं ग्रहीतव्यं शूद्राद्प्यङ्गिराऽब्रवीत् ॥ इति ।

अस्यार्थः अवृत्तौ वृत्यन्तराभावे एकरात्रकमहोरात्रपर्याप्तं तेभ्यः शूद्रेभ्यो धर्म्यम् । पूर्वोक्तमामं प्रतीच्छतां गृह्णतां संस्कारो ब्रह्मचर्यं पूर्यति पूर्णं भवति । अन्यथा नश्यतीत्यर्थः । एतेन शूद्रेतरगृहात् पक्कमप्यन्नं ग्राह्यमित्यर्थ आयाति ।

भिक्षानिषेधमाह मनुर्यथा—

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत ।। इति ।
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमां सा चैनं नावमानयेत ।।

इति मनुवचनस्य प्रथमभिक्षाविषयत्वादविरोधः।

अन्यत्र भिक्षाया अलाभे एतेषां गृहेष्वपि भिक्षा कार्या। तथाच गौतमः "आचार्य-ज्ञाति-गुरुगृहेषु स्वेष्वलाभेऽन्यत्र" इति। स्वेषु बन्धुष्वित्यर्थः। अत्राप्युत्तरोत्तरलाभे पूर्वं पूर्वं त्याज्यम्। अलाभे त्वन्यगेहानामित्यादि-मनूक्तैकवाक्यत्वात्। एकगृहे भिक्षाचरणं प्रतिषेधति मनुर्यथा—

भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृतेति॥

नैकान्नादीति नैकस्यान्नं भुञ्जीत किन्त्वनेकगृहादाहृत्यान्नं भक्षयेत। अथ वैकस्मिन् दिने आहृतमन्नं बहुदिनं न भक्षयेत् किन्तु प्रत्यहं भिक्षां चरेत। तेन प्रचुरभिक्षाग्रहणस्यापि निषेध इत्यायाति। प्रचुरभिक्षाग्रहणे दोषमाह मनुरेव यथा—

आहारादधिकं वर्णी न क्वचिद् भैक्षमाहरेत्।
युज्यते स्तेयदोषेण कामतोऽधिकमाहरन॥
माधुकरीयमानीय ब्राह्मणेभ्यः प्रयच्छति।
स याति नरकं घोरं भोक्ता भुङ्क्ते च किल्विषम्।
तस्मान्नोपहरेद भैक्षमतिरिक्तं कदाचनेति॥

कामत इत्युक्तेरकामतोऽधिकभिक्षाहरणेऽपि तद्व्ययव्यवस्थामाहापस्तम्बः "नोच्छिष्टं कुर्यादशक्तौ भूमौ निखनेदप्सु वा निक्षिपेदाचार्याय वा दद्या-दन्तर्दिने वा शूद्रा"येति। अशक्तौ भोजनाशक्तौ उच्छिष्टं न कुर्यात। प्रथममेवोद्धृत्य पृथक् स्थापयेत्। न्नोच्छिष्टं कस्यचिद्दद्यादित्यनेन मनुना तद्दानप्रतिषेधात्। अन्तर्दिने आचार्यदासायेति। विवक्षया सप्तमी।

भिक्षाचरणकालमाहापस्तम्बो यथा "सायं प्रातरमत्रेण भिक्षाचर्यं चरेदि"ति। अमत्रं पात्रम्। भिक्षाचर्यं विना भोजनप्रायश्चित्तमाह मनुर्यथा

अकृत्वा भैक्षचरणमसमिध्य च पावकम्।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेदिति॥

ब्रह्मचारिभोजनकालमाह कार्ष्णाजिनिर्यथा—

मध्याह्ने गृहिणां भुक्तिर्वर्णिनामपराह्णके ।
सायाह्ने यतीनां प्रोक्ता प्रातस्तु ब्रह्मचारिणामिति ॥

ब्रह्मचारिणां प्रातर्भोजनविधानमपि अष्टवर्षीयब्रह्मचारिविषयकम् । तथा च सुमन्तुः—अश्नीयादष्टवर्षस्तु ब्रह्मचारी प्रगे सदा ।
तदूर्द्ध्वमा द्वादशाब्दादश्नीयात् सङ्गवे सदा ।
तदूर्द्ध्वं गृहिवद् भिक्षां भोजनञ्च समाचरेदिति ॥

गृहिवदिति मध्याह्ने । एषां कांस्यपात्रे भोजननिषेधमाह प्रचेता यथा—
ताम्बूलं व्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेदिति ।

गृहाश्रमिणां शिलादिभाजने भोजननिषधमाहात्रिर्यथा—
करे कर्पटके चैव शिलायां ताम्रभाजने ।
वटार्काश्वत्थपत्रेषु गृही भुक्त्वैन्दवं चरेदिति ॥

अनेन गृहिणां प्रायश्चित्तविधानादन्येषां दोषाभाव इति गम्यते । व्रताध्ययनहीनानां भिक्षाचरणस्य निन्द्यत्वमाह वशिष्ठो यथा—
अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ॥इति ।

हस्तदत्ता तु भिक्षा न ग्राह्या इत्येतदाह मनुर्यथा—
हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च ।
भोक्ताप्यशुचितां याति दाता स्वर्गं न गच्छतीति ॥

भैक्षस्य विनियोगप्रकारमाह शङ्खो यथा—
याचयेद् याचितं चान्नं त्रिधा कृत्वैकभागकम् ।
अग्नौ व्याहृतिभिः स्थाप्य भागमेकं गुरोरपि ॥
एकं भुञ्जीत मतिमान् स्वाध्यायञ्च ततः पठेदिति ।

भोजनप्रकारमाह मनुर्यथा
समाहृत्य तु तद् भैक्षं यावदर्थं समाप्नुयात् ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ।

पूजयेदशनं नित्यमद्याच्चेदमकुत्सयन ।
पूजितं ह्यशनं नित्यं बलमूर्जंश्च यच्छति ।
अपूजितन्तु तद्भुक्तमुभयन्तु हिनस्ति तदिति ।

अशनमन्नम् । याज्ञवल्क्यश्चाह यथा—

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन ॥ इति ।

हारीतोऽप्याह—

"भैक्षमवेक्षितं पर्यग्निकृतमादित्यदर्शितमनुज्ञातममृतसम्मितं प्रातस्तदश्नन ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोती"ति ।

भोजने ग्राससंख्यामाह मनुर्यथा

अष्टौ ग्रासा मुनेर्भैक्ष्यं वानप्रस्थस्य षोडश ।
द्वात्रिंशतं गृहस्थस्य अमितं ब्रह्मचारिणः ॥ इति ।　　(क्रमशः)

---

## कस्याहम् ?

[ निबन्धकः—पि. वि. वरदराजशर्मा ]

"दुःखानामेव केवलानामेकभूमिरहम् । आ पाणिपीडनादद्य यावन्नास्वादित आनन्दलेशोऽपि । परिणयानुपदमेव श्वशुरगेहमानीतया श्वशुरयोर्ननान्दुरन्यस्यापि प्रातिवेशिकवर्गस्य सोढानि सुदुःसहानि वचनशल्यानि । दुराराधाः श्वाशुरा जनाः प्रयत्नोपचरणेनानीतः सौमुख्यपदवीम् । कत्युपवासाः कति प्रजागरास्तनयस्यास्य लाभायानुभूताः । यावद्वेदमाभोजिता विप्राः । शश्वदश्वत्थाः प्रदक्षिणमावर्तिताः । कोऽसौ चत्वरविनायको यो नाम नाराधितो नारिकेलविशरणेन । यावद्दर्शमामन्त्रिता मान्त्रिकाः । अवगाढं प्रभूतोदकेषु पवित्रेषु नदनदोहदेषु । चिराराधितं दैवमन्वग्रहीत् प्रणयसर्वस्वस्यास्य कुलांकुरस्य वितरणेन । परं महत्तरेणेव वैरानुबन्धेन स्नेहसर्वस्वं तद् व्याधिशतैरापीडयदेवावर्तत ।

को नामैकान्तमवगच्छत्वपत्यपोषणपरिश्रमम् । दुग्धदृष्टीनां दृष्टिपाते-नोल्बणवाचां वागशनिनाऽन्यैश्च बालग्रहैः पीडितमेनं कैः कैर्नोपायैर्नीरुज-मकार्षम् । कति नाम जरठा दैन्यालापैरावर्जिताः । सहस्रकृत्वो नीरा-जितोऽसौ हारिद्रेण पाथसा । कुमारभृत्याकुशलैः कतिवारं ससूत्कारं विभूति-प्रक्षेपेणोच्चाटिता डाकिन्यादयो बालग्रहाः । को नाम स्मरतु तत्सर्वम् । विस्मरणशीलो हि बालभाव इत्युपेक्षणीयमेव तत् ।

अपरमपि, उपनीतस्य पठितुं कलाशालां प्रापितस्यास्य कृते कियदनार्य-माचरितं मया पुत्रवात्सल्यात् । गलहस्तिता लज्जा । विमनायितो मानः । धूर्तोऽसावर्थकार्श्यमजानानो मासिकं व्ययमेकेनैव दिनेन व्ययीत । अदीर्घ-दर्शी विद्यार्थिभावः । को वा शमयेदेनम् । पितुर्भीतोऽसौ क्वापि चिर-मवस्थाय प्रसक्ताश्रुरुपह्वरे रुद्यात् । को वा तदात्वे कर्णं अकुरुत । न श्वशुरः । न वा श्वश्रूः, नापि नव्यैषा पिशाचिका यया ग्रस्तोसौ न वेद हस्त-पादम् । मयैव ननु कौटुम्बं धान्यजातं पारिणाह्यमन्यद्वाभरणं विक्रीयाधी-कृत्य वा कथं कथमपि पाठितः । अबलानाम् उपह्वरे साहसोपक्रमः कियन्त-मनेहसमनुवर्तेत । अचिराद्दुद्वेदे को नाम सहतामदभ्रमुपालम्भं वर्जयित्वा अकार्याचार्यां माम् । न केवलमुपालम्भाः सुलभास्तलप्रहाराः कपोलतलयोः । किं किं नासाह्यस्य कृते । किमसौ कस्यापि स्मरति ।

सर्वमेकपद एव विस्मृत्याचिरानीताया दुर्भगाया उपह्वरमन्त्रानेव वेदा-न्मन्यमानः प्रवर्तते । स्त्रीजितोऽसौ वनिताकञ्चुकच्छन्नो लज्जते भाषितु-मपि । नास्मान्मन्त्रयते । किं वृथालापेन । दुग्धदोहाया धेनोरिवैषा कथा अनपेक्षिताया जरठाया मातुः । मा नाम मह्यमसौ दाद्वेतनं गृहीत्वा, न मे प्रदर्शयत्यपि । निभृतमानीय तस्या मलिनवदनायाः पादोपकण्ठे उपदी-करोति । वत्से पश्य मे दुरवस्थाम् ।"

"अस्त्व किमित्यचिरागतामज्ञातभावां च तामेव मे भ्रातृजायामधिकृत्या-वद्यं वदसि । किमनयोपालब्धया । अयमसावग्रजो मे वचनीयः । किमसौ न जानाति कियान क्लेशस्त्वयानुभूतस्तस्य मनुष्यत्वापादन इति । कामं सा न

जानातु या काचित्। अत्रैव गेहे जनिमवाप्य सहैवास्माभिश्चिरं विहृत्य सोदरां मामप्यसौ न यथापुरमालपति। किमहं न जानामि तस्य प्रकृतिम्। पठन् पुनरसौ न विना मां भुञ्जीत। पूर्वोपविष्टः प्रतीक्षेत। गेह-कृत्येष्वपि किमस्ति किञ्चिदनुष्ठेयमिति स स्मेरं पृच्छन् उदकाहरणेन इन्धन-सङ्ग्रहेण, धान्याक-पेषणेनान्येन च हस्तं यच्छन् ईषत्करं पाक-मापादयेत। सर्वमेतद्भवान्तरवृत्तमाभाति। मन्ये गृहीतोऽसौ तया वाग्जाले। उपधानमन्त्रैरुपांशुजप्यमानैरवशीकृतोऽसौ। यदि पुमान् दारेषु न प्रभवति किं ते गणयेयुस्तदनुबन्धिनम्। वृथाऽहमुत्कण्ठे, सोदरो मे राज्यधुरायां नियुक्त इति। नासौ मे सोदरः। न वा पित्रोर्युवयोः। जितो हि पणो जेतृवशो भवति। अयमपि तया जितस्तद्वशगस्तदीय एवेति त्यजा-स्मिन्नात्मीयत्वबुद्धिम्।"

"अयि! ननान्दे, स्थाने कृतनामधेयासि, यन्न नन्दसि सोदरपत्न्या मे समृद्धिम्। सत्यमुच्यते "यस्यार्थास्तस्य मित्राणी"ति। यदद्यैव सोदरस्नेहं प्रदर्शयसि मे प्राणनाथे। क्व नु खलु गतासीः पत्यौ मे निरुद्योगे वर्तनार्थ-मितस्ततो भ्राम्यति। तदा तु तैस्तैर्वचनोपक्रमैरुपांशु कृत्वा भेदोपायं गेहात् प्रस्थापितवत्यसि मे दयितम्। अद्य पुनराज्ञाय मे जीवितसर्वस्वं लब्ध-स्पृहणीयजीविकं 'मे सोदरो मे सोदर' इति आत्मीयत्वमभिनीय विप्रलभसे। जानामि ते हृदयम्। यथा नामाभिहिते भर्तरि मे स्नेहानुबन्धशैथिल्य-मापद्येत तथा कृतकभाषणे निपुणासि। स्त्रियो हि नामाशिक्षितपटवः।

सहधर्मचारिणीनामसौ धर्मो यदनुकूलभाषणैरुपचरणैश्च पत्युराव-र्जनं नाम। नैतद्दूषणं परं भूषणं योषामणीनाम्। यदि मे जीवितेशो मयि स्निह्यति हृदयानुगुणं च मे प्रवर्तते आत्मौपम्येन तोष्टव्यमेव त्वया। पत्युः प्रीणनैकफलं हि स्त्रीणां जीवितं यौवनं च। बालभावे वृत्तं सहभुक्तं क्रीडितञ्चानुस्मृत्य हि त्वया कपटाश्रूणि पातितानि। सत्यं स्वाधीनरोदना रामाः। चिन्तय तावदितो भविष्यत्त्रिरात्रमितं ते ज्ञातेयम्। मम पुनर्नान्य-ज्जीवितम्।

साधारणेऽपत्यस्नेहे पुत्रवतीनाम् अस्तोकं मे तोकवात्सल्यं यदसावेक एव कुलतन्तुः। किन्नाम सन्ति मेऽन्ये तनया दुहितरो वा उपनेतव्याः परिणेया वा। भवत्यापि किं किं नाचरितमेकस्य तनयस्य कृते। भवत्या नन्वभ्यधायि "जितमपत्यस्नेहेन बह्वकार्यं कारितवते"ति। किं मया पारिणाह्य-विक्रयो भूषाविनिमयो वाऽकारि? यथा भवत्यावर्जितं दयितहृदयं तथैव मयापि मे जीवितेश आवर्ज्यत इति साधरणे अपत्यवात्सल्ये कोऽयमप्रतीकारोन्तस्तापः। भर्तुः प्रणयभाजनमहं न प्रतीपवर्तिनी कस्यापि। यच्च बालभावे बहुक्लेशसहनं तदप्रत्यग्रं किमपि कुलवधूनां गुरूपचरणव्यग्राणाम्। दुःखस्यानन्तरं सुखमित्युत्सर्गः। तन्नियच्छत जिह्वां, मा च ददर्शः परीवादवैखरीम्।"

इतोमां दुर्वादवैखरीमाकर्णयन प्रबुद्धोऽहं चिरं शयनतलममुञ्चन्नवर्तिषि। शय्यागृहाग्रभित्तौ "टक् टगि"ति चरन घटिकाहर आयस्या जिह्वया पञ्चकृत्वः प्रत्युपस्थितं प्रत्यूषं स्पष्टमाचष्ट। ईषदरुणा अरुणकिरणाः प्राचीमुखं पाटलेनेव भूषापरागेण पर्यमृजन्। कुलाय-विनिस्सृताः कुक्कुटा व्याधूय पक्षयुगलं मित्रदर्शनोत्कण्ठयेव प्राच्यां प्रधाव्योच्चैस्तरां कूजितैः स्वागतं व्याहार्षुः। प्रबुद्धोऽहमालस्यापनोदनार्थमुद्वर्त्य पूर्वकायं यावदुत्थातुमुदसहे तावदुत्पन्नो जृम्भारवः, अन्तरालपन्त्योऽमूकयन्। का नाम ताः विना जरतीं मे मातरं, स्वसारं, पाणिगृहीतीं च।

आसां वागायोधनहेतुरपि न त्वावेदनीयः। परेद्यवि उपनेष्यमाणस्यात्मजस्योपनयनमहोत्सवे किमसौ शिबिकामारोप्याग्रहारमभितो नेतव्यः, किंवा तदा अग्रहारोपहारः कोऽपि कर्तव्य इत्यस्मादभिन्न एव सः। व्ययाधिक्यसम्भावनया माता स्वसारो नान्वमन्येताम्। दाराः पुनर्ज्येष्ठस्यात्मजस्योपनयने समाहिताधिकश्रद्धा श्रद्दधते। परमन्यतराश्रयणे अन्यतरस्येहितभङ्गः। को वात्र निस्तारः।

अभूच्च मे मनस्यन्यदेव। माता तावद्बहुक्लेशभाजनं तदीयं मां मन्यते। अन्या तु समानोदरजातत्वात्तदीयमवैति माम्। पत्नी पुनर्मया गृहीत-

अथैतयोः किमीयः पन्था गरीयानिति किं विवेचयामि ? सत्याग्रहे साधारण्येन मानवमात्राणां कृते "इह हि चतुर्विधपुरुषार्थसाधनेष्वि"त्यादि-पूर्वोक्तनियमबलेन स्वयमेव विदाङ्कुर्वन्तु सज्जनाः ।

---

# श्रीश्रीअद्वैतचरितम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीकालीहरदास-वसुः भक्तिसागरः ]

[ दण्डप्राप्तिः ]

श्रीमन्महाप्रभुर्बहिर्दशायां श्रीमदद्वैतप्रभुदेवगोस्वामिनं गुरुबुद्ध्या सम्मानयति । अतः श्रीअद्वैतप्रभुः श्रीगौरविधोश्चरणयोः सेवार्थं कमपि सुयोगमप्राप्य मर्मणि सततं दारुणां पीडामनुभवति । परमानन्दः शचीसुतः सर्वान् भक्तानेव एकैकशो दण्डयति यद्वा कृपयति । यतः श्रीप्रभुणा प्रदत्तो दण्डः स्वरूपतो महती कृपैव । श्रीगौरहरिर्गुरुधिया तस्य तादृशं कृपा-दण्डं न संयुनक्तीति दुःखप्राप्तोऽद्वैतचन्द्रो महाप्रभोः क्रोधोत्पादनार्थं सहसा शान्तिपुरमागत्य योगवाशिष्ठपरिगीतं ज्ञानं व्याख्यातुं प्रवृत्तः । स एवमेव प्रचारयामास यद्विष्णुभक्तिर्दर्पणमेव, ज्ञानं नयनमेव । चक्षुर्भ्यां हीनस्य दर्पणेन किम् ? यदि दर्पणं भक्तेरुपमानं स्यात्तर्हि विष्णुभक्ति-साहाय्येन आत्मदर्शनमात्रं भवति । अनेन व्याख्यानेन भक्तिरतीव लघुतामायाति ।

सर्वज्ञः प्रभुः श्रीशचीकुमारः श्रीनित्यानन्देन सह जाह्नवीसलिले जलकेलिरसमग्नोऽभूत् । एवं केलिमिषेण सन्तारं कुर्वन्नब्रवीत्—"निद्रा-सुखं भङ्क्त्वा एष 'नडा' मामिहानीतवान, मामानीयेदानीं भक्तिं संगोप्य ज्ञानं व्याख्याय तस्य मुख्यत्वं स्थापयति । एतेन भद्रं न भविष्यति । अपेक्षस्व हन्त ! ज्ञाननिम्बफलं ते स्वदते किम् ? सद्भक्तिकल्पलताया अमृतफलम् उपेक्षसे किमि"त्युक्त्वा प्रभुराक्रोशति । प्रभुद्वयं तदा शान्ति-पुरधाम्नि लीलया सन्तरति ।

सीतानाथः, प्रभुः क्रुद्ध आयातीति मनसि ज्ञात्वा मत्ततामभिनयन् पूर्वतोऽधिकमपि ज्ञानयोगं प्रशंसति ।

अतः परं प्रभुद्वयम् अद्वैतभवने समागतम् । हरिदास उत्थाय तयोः पादमूले दण्डवन्न्यपतत् । अच्युतानन्दः सम्भ्रमेण ताभ्यां प्रणनाम । सीतादेवी मनसि तथाकरोत् । ज्ञानानन्दभरेणाद्वैतस्याङ्गं दोदुल्यमानमासीत् । किन्तु श्रीभगवतो गौरहरेस्तेजोमयीम् उग्रमूर्त्तिं निरीक्ष्य तत्रत्याः सर्वे भयचकितचित्ता बभूवुः ।

क्रोधेनारक्तवदनः प्रभुरवदत्—"हंहो ! हे नडा ! प्रकाशेन ब्रूहि, भक्तिर्ज्ञानञ्च—एतयोः कतरद् मुख्यं गणयसि" । श्रीअद्वैतः प्रत्यवदत्—"सर्वस्मिन् काल एव ज्ञानं प्रधानमिति" । तच्छ्रवणमात्रमेव क्रोधोन्मत्तः श्रीशचीनन्दनः प्रसह्य वृद्धम् अद्वैतप्रभुमासनादुत्तार्य अङ्गणभूमौ निक्षिप्य च चटचटाशब्देन तं भृशं तलेनाहन्तुमारेभे । अद्वैतगृहिणी पतिव्रता सीता तद्दर्शनेन भीताब्रवीत्—"भो एष वृद्धो ब्राह्मणस्तं मा वधीः मा वधीः । नूनं केनापि प्रेरितस्त्वं मम पतिदेवतामित्थमवमन्यसे । आनन्दकन्दः श्रीनित्यानन्दः केवलमहसत् । प्रभुस्तर्ज्जनेनोचे—"अरे, त्वं ज्ञानव्याख्यानेन वञ्चनया मां निगृह्णासीत्येवं यदि, तदा किमर्थमहमानीतस्त्वया" इत्येवमभिभाष्य श्रीगौराङ्गप्रभुः श्रीअद्वैतपञ्चाननं परित्यज्य निजतत्त्वं प्रकाशयतिस्म । अभीष्टदण्डं प्रचुरं लब्ध्वा श्रीसीतानाथः कृतकृतार्थीभूतः, सानन्दमुद्दण्डं ताण्डवमारेभे । स्वयं प्रभुरेकस्त्रिधा यदि नाभविष्यत्—एवंविधमानन्दकेलिरङ्गं जगति कोऽपि नाद्रक्ष्यत् । श्रीअद्वैतभवनमद्य उद्दामप्रेमामृतोत्सवप्रवाहैराप्लावितम् । सर्वेषां सुखं सीमानमत्यक्रामत् ।

[ शचीदेव्या अपराध-भञ्जनम् ]

एकदा श्रीवासो निजाङ्गणे दण्डायमानस्य श्रीमतो महाप्रभोश्चरणयोरञ्जलिं बद्ध्वा न्यवेदयत् "प्रभुर्यस्मैकस्मैचिदकुण्ठितं वैकुण्ठदुर्लभं प्रेमवैभवमदात् नहि केवलं निजजनन्यै, विस्मयकर एवैष भवल्लीलाव्यापारो मादृगल्पधियो

जनस्य बुद्धेरगम्यश्च। जननी शचीदेवी भवत्प्रेमरसोत्फुल्लतया यथा माद्यति तथाऽस्माकं शतगुणितमानन्दमातनोतु।"

अमृतवृष्टिप्रतिमं श्रीवासवचनं श्रुत्वा देवादिदेवः प्रभुर्भावं संगोप्य प्रत्युवाच—"भो एवं पुनर्मा वद। नहि नहि, तस्यै प्रेमरत्नं न दास्यामि। यतस्तस्या वैष्णवेऽपराधोऽस्ति। अद्वैते महान् अपराधः कृतस्तया इति मस्तकेऽद्वैतदेवस्य श्रीचरणधूलिधारणं विना तस्या अपराधभञ्जनं न भविष्यति, भक्तिसञ्चारश्च न। वैष्णवापराधो हि भक्तिं बाधते। माता सदा अमूलकं दृढविश्वासमेकं स्वमनसि पोषयति यदद्वैतगोस्वामिना तस्याः पुत्रौ एकैकशः परिव्राजिताविति धारणैव तस्या अपराधः।" श्रीगौराङ्ग-प्रभुणा भणितमेतद्वृत्तान्तं भक्ताः सर्वे श्रीअद्वैतप्रभोः कर्णातिथिं चक्रुः।

हस्ताभ्यां कर्णावाच्छाद्य वृद्धः प्रभुर्बभाण—"भो भक्ताः! यूयं सर्वे मां हन्तुकामा इत्यहं पश्यामि। यस्या गर्भे मम प्रभोरवतारः सा मम माता तस्याः पुत्रोऽहमित्युक्त्वा प्रभुरद्वैत आविष्टमना मातुः शचीदेव्या गुणान् कीर्त्तयन्नासीत्। सुयोगं ज्ञात्वा जगन्माता श्रीशची बहिरागत्य आचार्यस्य चरणधूलिं श्रद्धया स्वशिरसि दधौ। धूलिधारणमात्रेणैव माता मन्त्रमुग्धा इव उद्दामप्रेमसञ्चारतो विह्वलामूर्च्छत्। वैष्णवपदरजसां महिमा अनेन प्रचारितः। श्रीगौराङ्गभगवान् निजमातृनिग्रहेण श्रीअद्वैताचार्यमहिमानं जगति प्रसारयामास। अहो, भगवज्जनन्यपि अपराधजनितां दुर्गतिं विना भोगेन नात्येतुमर्हति। (क्रमशः)

---

# निखिल-भारतवर्षीयमेकोनत्रिंशत्तममायुर्वेद-महासम्मेलनम्

अयि भोः! सौजन्यधन्यात्मानश्चिचिकित्सकचूडामणयः!

प्रायो विदितमेव तत्रभवतां भवतां यद् गतवर्षे मुम्बई-महानगरीयेऽष्टाविंशतितम आयुर्वेद-महासम्मेलनेऽस्मत्प्रार्थनयागामिवर्षकृतेऽखिल-भारत-वर्षीयैकोनत्रिंशत्तमायुर्वेद-महासम्मेलनाधिवेशनाय सर्वैः स्वीकृतं योधपुर-

स्थानम् । तदेतन्न शक्यं सुसम्पादयितुं कथमपि विना भवतां सहानुभूति-सुलभं सर्वविधं साहाय्यम्, अत एव साञ्जलिबन्धं प्रार्थ्यते उपचीयन्तां तत्तत्-कार्यवाहाः समुत्साहाः, प्रहीयन्तां तत्तद्विषय-सारगर्भाः सन्दर्भाः, प्रदीयन्तां विविध-वैषम्य-बाधनाय समीहित-समुन्नति-साधनाय च साफल्य-संपादनप्रायाः स्वाभिप्रायाः, सज्जीक्रियन्तां विगतविचिकित्सानि चिकित्सा-निष्पादनानि, प्रचार्यन्तां चिकित्सकचक्रचूडामणीनां चरकादीनां चिकित्साचातुरीचमत्काराः। परिचीयन्तां सञ्चीयन्तां च समीचीनाः प्राचीना अर्वाचीना वा प्रतीचीनाश्चिकित्सा-चमत्कृतयः इति । किं बहुना ।

तदेतत्सर्वमवदातं कार्यजातं भवदनुग्रह एव फलेग्रहि स्यात् । आशंसे तदेतदस्मदीयं निवेदनं सर्वथा स्वीकुर्वन्तः समये पदार्पणेन पवित्री-करिष्यन्ति भवन्त एतदधिवेशनमिति सप्रश्रयं सप्रणयं च प्रार्थयते ।

विनीतः—स्वागत-समिति-प्रधानमन्त्री (योधपुरम्)

---

# संस्कृत-साहित्य-परिषदस्त्रयोविंशतितम-वार्षिकाधिवेशनम्

व्यतीते सौरभाद्रस्य चतुर्विंशतिमिते रविवासरे सायं षड्वादनसमये सुप्रथिते "इउनिभार्सिटि इनष्टिट्युट्" इत्याख्य-भवने, माननीयानां सार् नृपेन्द्रनाथ-सरकार-महोदयानां साभापत्येन संस्कृतसाहित्यपरिषदस्त्रयो-विंशतितमं वार्षिकाधिवेशनं विनिष्पन्नमासीत् । चित्रप्रतिष्ठाद्यभिनयान्तानि सर्वाण्येवानुष्ठानानि यथापुरः प्रवृत्तानि सभ्यानामानन्दं सान्द्रमकुर्वन् । साङ्गान्येतद्वृत्तानि सञ्चिकान्तरे प्रपञ्चयिष्यामः ।

---

# Sanskrit Sahitya Parishat.

## Executive Committee for 1939-40.

**President.**

Mahamahopadhyaya Durgacharan Sankhya-Vedantatirtha.

**Vice-Presidents.**

Mahamahopadhyaya Anantakrishna Sastri.
,, Phanibhushan Tarkavagish
Dr. Adityanath Mukherjee, M. A., Ph. D.
Pandit Dwarikanath Nyayasastri.
,, Sitanath Siddhantavagish.
Maharaja Bhupendra Chandra Singha, B. A. (of Susang).
Raja Bhupendranarayan Singh Bahadur, M.L.C. (of Nasipur).
Sj. Sarat Chandra Bose, Bar-at-Law, M. L. A.
Sj. Baij Nath Bajoria, M. L. A.
Sj. Jatindra Nath Basu, M. A., M. L. A.

**Secretaries.**

Dr. Amareswar Thakur, Vedantashastri, M. A., Ph. D.
Sj. Ganapati Sarkar Vidyaratna.

**Assistant Secretaries**

Pandit Dinabandhu Sahityashastri.
,, Ramkrishna Chakravartty, M. A.
,, Ashokanath Bhattacharjee, M.A., P.R.S., Vedantatirtha.
,, Hemendra Nath Bhattacharjee.
,, Bishnupada Bhattacharjee. M. A., Kavyatirtha.

**Members.**

Pandit Jagadish Chandra Vedavyas
,, Jaganmohan Jyotirvinode.
,, Bamapada Vidyaratna.
,, Dakshinacharan-Bhattacharjee, M. A.
,, Janakinath Sahityashastri.
,, Kalipada Tarkacharyya.
,, Bamacharan Kavyatirtha.
,, Chintaharan Chakravartty, M. A., Kavyatirtha.
,, Jogendramohan Vidyaratna.
Pandit Dakshinacharan Bhattacharjee.
Sj. Kashinath Bhattacharjee, B. Sc. (Engr.)
Dr. Bhupendranath Basu, M.B.
Sj. Rajendra Narain Banerjee, B. L.
Pandit Durgamohan Kavya-Sankhya-Puranatirtha, M.A.
,, Kalipada Vyakaranatirtha.
Dr. Suniti Kumar Chatterjee, M.A., D. Lit.
Sj. Bhupati Roy Chowdhury, Kavyatirtha.
Sj. Brajendrakishore Bhattacharjee.
Pandit Upendramohan Sankhyatirtha.
,, Chandicharan Tarkatirtha.
Dr. Upendranath Ghoshal, M. A., Ph. D.
Sj. Ramaprasad Mookerjee, M. A., B. L.
Kaviraj Bimalananda Tarkatirtha.
Pandit Gaurinath Bhattacharjee, M. A., P. R. S.
Pandit Taranath Nyaya-Tarkatirtha.
Mahamahopadhyaya Haridas Siddhantavagish.
Pandit Haran Chandra Sastri.
Sj. Damodar Das Khanna, B.A.
Pranacharya Kaviraj Sibnath Sen, B. A., M. B.
Kaviraj Jyotishchandra Saraswati.
Pandit Shyamacharan Kavya-Vyakarantirtha.
Sj. Tridib Nath Roy, M. A., B. L.
Kaviraj Janaki Nath Kavyatirtha.
Rai Bahadur Gobin Lal Banerjee B. A.

# कलिकाता ओरियेण्टाल सिरिज

१। **युक्तिकल्पतरुः**—महाराजश्रीभोजविरचितः। पण्डितश्रीईश्वरचन्द्रशास्त्रिसांख्य-वेदान्त-न्याय-दर्शनतीर्थेन संशोधितः। अत्र राजनीतिः, गृह-दुर्ग-नगरादिनिर्माणम्, छत्र-ध्वजचामरालङ्कारादिनिर्णयः, मणिरत्नाश्वगजादिपरीचा, शस्त्र-नौका-यानादिलचणानि च सविशेषं निरूपितानीति तत्तद्विषयमनुसन्धित्सूनां महोपयोगोऽयं ग्रन्थः—२॥०)

२। **चाणक्यराजनीतिशास्त्रम्**—विद्वद्वर-जोहान फ्यान् म्यानेन-कृताङ्गलभूमिका-समेतम्—॥॥०

३। **मुक्ताफलम्**—बोपदेवविरचितम् हेमाद्रिकृतटीकासहितम् वैष्णवानामत्युपादेयतया परिगृहीतं भागवततत्त्वरत्नमिदं डाः श्रीनरेन्द्रनाथ लाहा, पि-एइच. डि.-लिखितवृहदाङ्गल-भूमिकया समलङ्कृतम् खण्डद्वयात्मकम्—६)

४। **चाणक्यकथा**—रविनर्त्तकविरचिता। विशाखदत्तकृत-मुद्राराचससंवादिनीयं कथा सुललितपद्यमयी (द्वितीयाङ्कनावृत्तिः)—१)

५। **वक्रोक्तिजीवितम्**—श्रीराजानककुन्तलविरचितं स्वोपज्ञवृत्तिसमेतमतिप्रमाणभूत-मलङ्कारशास्त्रम् डाः श्रीसुशीलकुमार दे, डि. लिट्. महोदयेन संशोधितम्—३॥०)

६। **पद्मपुराणम्**—स्वर्गखण्डस्य पञ्चाध्यायात्मकः शकुन्तलोपाख्यानम् पातालखण्डस्यैका-दशाध्यायात्मक-रघुवंशवर्णनञ्चात्र वङ्गदेशोपलब्धहस्तलिखितमादर्शमाश्रित्य संशोधितमध्यापक-श्रीहरदत्तशर्म्मणा सुवृहदाङ्गलभाषामयभूमिकायां प्रमाणीकृतञ्च कालिदासीयशकुन्तल-रघुवंशयोर्बीजभूतत्वं पद्मपुराणस्य—२)

७। **जयमङ्गला**—श्रीशङ्कराचार्य्य-विरचिता। ईश्वरकृष्णकृतसांख्यसप्ततिग्रन्थस्य टीकेयं श्रीहरदत्तशर्म्मणा संशोधिता—२)

८। **योगचिन्तामणिः**—श्रीशिवानन्दसरस्वतीकृतिरतिप्राचीनो ग्रन्थोऽयं योगशास्त्रा-म्बुधिरिति शक्यते वक्तुम्—३)

९। **ব্রহ্মসূত্রম্**—শ্রীমদ্ভাগবতভাষ্যসমেতম্। "অর্থোঽয়ং ব্রহ্মসূত্রাণাং শ্রীমদ্ভাগবতাভিধঃ" ইতি গারুড়বচনস্য যাথার্থ্যং প্রদিদর্শয়িষতা পণ্ডিত-শ্রীহরিদাস-বিদ্যাবাগীশেনাত্র শ্রীমদ্ভাগবতগ্রন্থাংশ্চ্যুতা গ্রন্থাংশব্রহ্মসূত্রভাষ্যতয়া নিরূপিতাঃ, ব্রহ্মসূত্রাণি চ বঙ্গভাষয়া বিশেষেণ ব্যাখ্যাতানি—২॥০

प्राप्तिस्थानम्—

**कलिकाता ओरियेण्टाल बुक एजेन्सी**

**९ पञ्चानन घोष लेन, कलिकाता।**

---

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

22-10.25

Reg. No. C 1073

Vol. XXII, No. 6 ] [ October, 1939

१८६१ शकीये आश्विने २२श-वर्षस्य ६ष्ठ-संख्या।

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

**महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री**

सहकारि-सम्पादकः—

**श्रीउपेन्द्रमोहन-सांख्यतीर्थः**

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)

श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,

Shyambazar, Calcutta.

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरकार्त्तिकस्य २२श ( द्वाविंश )-दिवसे बुधवासरे सायं सप्तवादनतो भविष्यतीति तत्र संस्कृतभाषाध्यायिना-मध्यापकानाञ्च समुपस्थितिः प्रार्थनीया ।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—২২শে কার্ত্তিক, ১৩৪৬, বুধবার, সন্ধ্যা ৭টার সময়ে হইবে। সংস্কৃত-ভাষাধ্যায়ী ছাত্র এবং অধ্যাপকগণের উপস্থিতি প্রার্থনীয়।

---

## Opinions on the 'Kalitantram'

( Sanskrit Sahitya Parishad Series No. 2 )

**Amrita Bazar Patrika** (31. 10. 22)—We hail the appearance of a new book-let called Kali-Tantram published by the Sanskrit Sahitya Parishat, Shyambazar, Calcutta. It is annotated and translated by Pandit Satish Chandra Siddhantabhushan. We dare say that the work will prove to be a great help to those who care to make an attempt towards the realisation of the monistic philosophy contained in the *Tantras*. There is no doubt that it will at least serve the public in giving some inkling about the mode of worship enjoined by the Tantras and so hel them from being duped by professional impostors. We hope that the presentment of such works will throw much light into the hitherto neglected Tantra literature. The get up of the book is good. It is priced at *8 as. for members* of the Sanskrit Sahitya Parishad and *10 as.* for the public.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

October, 1939 | १८६१-शकीये आश्विने २२श-वर्षस्य ६ष्ठ-संख्या | Vol. XXII No. 6.

## सारस्वतसर्वस्वम्

( प्रकृतिविलासकाव्ये प्रथमो विलासः )

[ निबन्धकः—कृष्णमूर्ति-शास्त्री ]

सत्यो देवः स दिशतु वचःशुद्धिमाम्नायसिद्धः
संसेवन्ते यमभिदधतः सिन्धवः* सप्त नित्यम् ।
शब्दार्थात्मा स्फुरति सकलो यद्विवर्तः प्रपञ्चः
स्फोटं ब्रह्माऽऽस्थिषत मुनयो यं प्रमाणैः पुराणाः ॥१॥

कश्चिद्विद्याविनयसुभगः स्वां विहायापि वृत्तिं
पश्चात् कांश्चित्क्षपयितुमना दक्षिणस्यां दिशायाम् ।
पारेऽम्भोधेर्महति जनयन्नन्दथुं श्रीकुमार्याः
क्षेत्रं प्रापत्कलिमलहरं विश्वमातुश्चिरत्नम् ॥२॥

पश्यन्नब्धिं सहृदि मुमुदे शैलतुङ्गैस्तरङ्गै-
र्झाङ्कुर्वद्भिः परिसरगतांस्तर्जयन्तं महान्तम् ।

---

* सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥ इति श्रुतिः । सप्त सिन्धवः विभक्तिरूपाः ।

ग्रावस्तोमैः प्रतिहततया फेनिलं सन्निवृत्तौ
भीमावर्तं विदधदसकृद् बिभ्रतं वीचिजातम् ॥३॥

पृक्तस्निग्धं लवणजलधेः शीकरैरूर्मिकीर्णैः
क्षुद्रस्याद्रेशिखरमखरस्पर्शमध्यास्य सायम् ।
आसीत् सोऽयं पवनमुदधेः सेवमानो मरुत्व-
च्छैलारण्यौषधिरसभृताश्लिष्टमार्द्रानिलेन ॥४॥

दर्शं दर्शं धरणिदिविषन्निर्निमेषोऽर्णवं सः
स्वैरं क्रीडन्मकरनिकरं भीकरं नक्रचक्रैः ।
गच्छद्भिश्च प्लवसमुदयैर्धीवराणां कुमारै-
र्हृद्यं पाथोविहगविरुतैर्मोदवार्धौ न्यमज्जत् ॥५॥

अब्धिच्छायामचलदुहितुः सर्वदाऽध्यासधैर्याद्
अप्रत्यूहं प्रकृतिविहितं बिभ्रतं स्वाधिकारम् ।
हर्षोद्रेकादुदधिमवदत्सोऽपि सम्बोध्य शश्वद्
भेदं पश्येन्न रसिकजनश्चेतनाचेतनेषु ॥६॥

श्रीशानस्य श्वशुर बिभयामासिवांसं सुरेशाद्
मैनाकाद्रिं शरणमभयाय प्रपन्नं ह्यरक्षः ।
बन्धं सेतोः स्वयमसहथा रामकैङ्कर्यलोभाद्
माहात्म्यं ते जगति गदितुं ढौकतां पाण्डितीं कः ॥७॥

कूले ज्योत्स्नाधवलपुलिनैर्मञ्जुले बालिशानां
स्तोमं शुक्त्याहरणविधये सम्भ्रमेण भ्रमन्तम् ।
रक्तश्वेतासितसिकतिलान् भूविभागाननेकं
व्रीह्याकारा अपि च मसृणा वालुकाः सन्ददर्श ॥८॥

शेतामेको हरिरविरतं दुग्धपाथोधिमध्ये
सङ्ख्यातीतानभिनवघनश्यामलाब्धश्रीसमेतान् ।
विष्णून् वीक्षध्वमिह सततं सञ्चरिष्णून् समन्ताद्
इत्यूर्मीन् स्वाञ्छिखरिसदृशोऽदीदृशद्वारिराशिः ॥९॥

नावासासीदनिलचलिता नीलकल्लोलमाला
प्रत्युद्गच्छन्त्यविरलतमालावलीवातिवेलम् ।
फेनोत्तंसा कलहमतुलं कर्तुकामेव गर्ज-
न्त्याबिभ्रत्या सितघनततिं मूर्ध्नि नीलाद्रिपङ्क्त्या ॥१०॥

पातुं पाथः सरिदधिपतौ किं न्ववप्लुत्य वेगात्
खेलन्त्युच्चैः क्वचितनभःप्रान्ततो वारिवाहाः ।
इत्यम्भोधिर्धियमचकलद्दूरमुद्वीक्ष्यमाणैः
फेनप्रायैः समुदितरङ्गैश्च कर्पूरगौरैः ॥११॥

छायावृक्षैः क्वचितमुखेष्वण्डजानां निवासै-
र्व्याप्तैः कीर्णेष्वनुपमपयःपातचेतोहरेषु ।
शैलेन्द्राणां तटभुवि सदा कन्दरेषु प्रतिश्रुद्
वाचामभ्र्याभ्युपगतवतामाढ्यसांयात्रिकाणाम् ॥१२॥

राजन्त्युच्चैर्नरपतिगृहाश्चन्द्रशालाभिरामाः
पारे वार्धेरमरनगराखर्वगर्वं हरन्तः ।
यत्र स्त्रीणां विजयिषु मुखेष्वेव वातायनस्थे-
ष्विन्दुर्लज्जालवविरहितो दीप्यते व्योम्नि रात्रौ ॥१३॥

अत्युच्छ्रायं जलधिजठरे स्तम्भमम्भोमयं द्राग्
झंझावातः कलयतितरां दारुणः कालयोगात् ।
नावः कृष्टा भृशरयवशात्संचरन्त्यो विवर्ते
मज्जन्त्याशु प्रगुणितभयैर्नाविकैर्दुर्निरोधाः ॥१४॥

क्षेत्रे धर्मं चरत ! जगतीमातुरत्यन्तमिष्टं
स्तोकं दत्त ! द्रविणमनघा ! भाग्यभाजो भवेत ।
इत्थं स्वार्थप्रवणधिषणो यात्रिकानर्थिसार्थो
व्यर्थाशीर्भिर्व्यथयति धनायार्दितोऽनुजिहानः ॥१५॥

स्नातुं वार्धावुचितवसनाः प्रेक्षणीयास्तरुण्यः
सुभ्रूवृन्दैः सरसविहृतौ लालसेनानिलेन ।

विस्पष्टाङ्गास्समजनिषताभीक्ष्णमक्ष्णां तु यूनां
सायं सायं जयति मिलतामुत्सवो भाग्यभाजाम् ॥१६॥

क्रीडत्सुभ्रूस्तनभरहता मन्दवेगास्तरङ्गाः
शीर्णाः श्रान्तास्तटमुपगताः फेनमप्युद्वमन्तः ।
शान्तारावाः सपदि सिकतास्वेव लीना भवन्ति
ह्यत्युच्छ्रायो निधनमवनौ कस्य वा नादधीत ॥१७॥

स्वैरं नीलोर्म्युदरविहरत्केरलारालकेश्यो
दूरीकुर्वन्त्यभिनवघनद्योतिविद्युच्छ्रियं द्राक् ।
ऐन्द्रं चापं बत विदधते चित्रवर्णं हरिद्रा-
चूर्णैर्नेत्राञ्जनशबलितैः कुङ्कुमैः क्षाल्यमानैः ॥१८॥

आपः प्रापुर्लवणपरिणामञ्च तूर्णं विशीर्णा
वातस्पर्शाज्जलधिविलसद्गण्डशैलोपरिष्टात् ।
तान्याहर्तुं शबरवनितास्सङ्गता वासरान्ते
स्तन्यं भूरिस्नुतमह ! शिशून् पाययन्त्यश्चरन्ति ॥१९॥

वीचिक्षोभा वसनममलं मा सिचन्नित्यधीरा
उत्क्षिप्योर्ध्वं निजकरयुगेनोरुदघ्नं मृगाक्ष्यः ।
सोपानेषु व्यदधत शनैः पञ्चषेषु स्वपादान्
पारावारः सरसहृदमूरार्द्रयामास सद्यः ॥२०॥

अब्ध्युद्धृतां मम सहचरीं भार्गवीं माऽवमंस्थाः
काले तस्मिन्मम नयनयोः सा हि हृद्या ललास ।
निस्सन्देहं त्वमिह विजयेथास्तथापि क्षमस्वे-
त्यङ्घ्योर्मूर्तौ हरिरिव तटे सुभ्रुवोऽपप्तदूर्मिः ॥२१॥

धून्वन् वासांस्युदधिपवनः कामिनीनां सहेलं
यूनां स्वान्तैर्युगपदधिकं यत्र नार्यां व्यहार्षीत् ।
सभ्रूभङ्गं किमपि निगदन्त्यात्मना लज्जया सा
स्त्रैणे लीना कमपि तरुणं लोचनाभ्यामधासीत् ॥२२॥

चन्द्रः काङ्क्षन समयमुचितं त्वद्विमर्दं कल्लोलैः
श्रृङ्गार्यैकः कुमुदमुकुल ! त्वां सुजातं समेयात् ।
प्रोवाचेत्थं कमपि तरुणी सस्मितं वीक्षमाणा
क्षौमं वक्षःस्थलविलसितं स्रंसयन्ती कथञ्चित् ॥२३॥

कैश्यं पिङ्गं कतिचन वहन्त्योऽपि सन्दर्शनीयाः
पुंभिः सार्धं सरसविहृतौ निस्त्रपा गौरवर्णाः ।
मार्जाराक्ष्यः स्थलकमलरुग्गण्डपालीमनोज्ञाः
सायं क्रामन्त्युदधिपवनं सेवितुं हूणनार्यः ॥२४॥

क्षिप्ता रोधस्यभिनवतराः शुक्तिका वीचिपङ्क्त्या
पांसुच्छन्ना अपि च सुचिरं प्रापिताश्च प्रकाशम् ।
यत्नात्सारस्वतमपि समाहृत्य सद्वस्तुजातं
विक्रीणन्ति प्रतिदिनमधोजातयो जीविकायै ॥२५॥

रत्नान्यन्तर्जठरमभितो वार्धिमाबिभ्रतं त्वां
केचिद्गाढं स्वयमनिपुणा भूरिधैर्याद्विगाढुम् ।
निन्दन्त्यापो लवणमिलिताः पातुमर्हा नहीति
स्वासामर्थ्यं परगुणतृणीकारहेतुर्हि लोके ॥२६॥

अन्तः शान्तोऽस्यधिकमुदधे ? कर्मवीरोपकृत्यै
यन्मज्जन्ति त्वयि कतिपये प्रत्ययान्मौक्तिकेभ्यः ।
बाह्याटोपस्तवसमुचितो धीरलोकान् विवेक्तुं
प्रेक्षावन्तो ददति भुवने नह्यकृत्वा परीक्षाम् ॥२७॥

एह्येहीतश्चरति मकरः पश्य हन्त ! स्थवीयान्
निक्षिप्यैतद्बडिशमधुना तूर्णमेनं गृहाण ।
इत्यन्योन्यं गदितुमभितो धावतां धीवराणा-
मेधामासुस्तटभुवि वचांस्यश्रसोच्चावचानि ॥२८॥

अब्धेरन्तस्सलिलमभितो निर्निरोधं चरन्तः
केचिज्ज्ञात्याः क्षुधितमकरा दङ्मयूखावलीः स्वाः ।

विद्युद्वल्लीरिव समधिकं भासयन्तीः प्रसार्य
क्षुद्राञ्जक्षत्यह ! जलचरानक्षिसात्कृत्य सद्यः ॥२९॥
अम्भःकूलौषधिदलगतान् पक्षिणो वर्तिकादी-
ल्लक्ष्योकृत्याधिकतररयं वारिधारोक्षणेन ।
तूर्णं वारिष्वहह ! मकरास्सन्निपात्य ग्रसन्ते
स्वैरं केचित्सततमृगयालम्पटाः पर्यटन्तः ॥३०॥
ओषध्योऽप्सु प्रसृतदलसंश्लिग्धभावाः प्ररूढा
मांसाशिन्यो मधुकरमुखान् पत्रलग्नांश्च कीटान् ।
आच्छाद्य द्रागहह ! विगतासून् क्षणेन ग्रसित्वा
पूर्वावस्थां नयनसुभगां दर्शयन्त्येव भूयः ॥३१॥
वालाघातैरधिजलनिधि क्रोधना मज्जयन्तः
क्रूराकाराः प्रबल-तिमयस्तूर्णमभ्यर्णनौकाः ।
उच्छ्वासार्थं प्लवनसमये तीक्ष्णकुन्तैः समन्ताद्
आपीड्यन्ते ग्रहणनिपुणैर्धीवरैरप्रमत्तैः ॥३२॥
यादांस्यद्भिस्सह निपतितान्यास्यगर्तेष्वयत्नाद्
उद्वम्यापः सपदि तितउ-प्रक्रियामावहन्तः ।
द्राघीयांसः कतिचन गजाकर्षणेऽपि प्रवीणा
जक्षत्यत्युद्भटपटुजवव्राजभाजस्तिमीन्द्राः ॥३३॥
पाथोवर्त्म प्रहतमसकृत्संविदन्तः स्वनौकाः
पूर्णा नानाजनसमुदयैरायसीः कर्णधाराः ।
गूढोत्मभ्योऽप्स्वविरतमयःकान्तकुध्रव्रजेभ्यः
कामं भीताः स्वयमगमयन् सर्वथा जागरूकाः ॥३४॥
द्वीपभ्रान्त्या जरठ-कमठ-प्रेष्ठपृष्ठे ऽवतीर्णाः
पान्थाः केचिज्जठरपिठरक्षुत्प्रशान्त्यै पचन्तः ।
चुल्ल्यग्न्यौष्ण्याच्चलितवपुषा पातितास्त्वव्ययनेन
स्वामिन्यासज्जति हि विहितः स्वाश्रितैर्हन्त मन्तुः ॥३५॥

( क्रमशः )

# आयुर्वेदे धान्वन्तरीयं तन्त्रम्

[ निबन्धकः—कविराजः श्रीज्योतिषचन्द्र-सरस्वतीः ]

( पूर्वतोऽनुवृत्तम् )

अयमेव हि विरुद्धवादिनां द्वितीयस्तर्को यत् साम्प्रतं ये नामायुर्वेदग्रन्था आसाद्यन्ते, तेषु च यत् किञ्चन शारीरतन्त्रमुपलभ्यते, तद् अनया कारण-परम्परयाऽकिञ्चित्करं भवितुमर्हति। न तेन किमपि कार्यं सम्पादयितुं शक्यते केनापि। इत एव आलोचयितव्ये शल्ये शालाक्ये वा पाश्चात्त्यं शारीरतन्त्रं पूर्णतयाऽध्येतव्यम्, अन्यथा तदालोचनं शारीरकज्ञानविहीनस्य प्रहसनवन्निष्फलं भवेदिति।

सैषा कारणपरम्परा—

( १ ) संहितासु यच्चाणोरणीयःशारीरमुपलभ्यते, तत्र मानवदेह-गतानि प्रत्यक्षसिद्धानि बहून्यङ्गप्रत्यङ्गानि नोल्लिखितानीति।

( २ ) यानि चोद्दिष्टानि तेषामपि स्थानसंस्थानादौ भ्रमप्रमाद-बाहुल्यात्, प्रत्यक्षविरोधाच्च, "शारीरे सुश्रुतो नष्ट" इति कथयितुं प्रचोदयत्य-स्मानिति।

( ३ ) शिरा-धमनी-स्रोतो-नाड्यादि-शब्दास्तत्र तथैव निरङ्कुशतया प्रयुक्ताः, येन पदार्थनिर्णयो दुरूह एव सञ्जातः। विशेषतः शिराया धमन्या वा वर्णना तथैव प्रमादबहुला, येन सुश्रुतस्य तदर्थबोधकाध्यायद्वयं पूर्णतयाऽनुपयोगीति वक्तुमुत्सहते जनः इति।

( ४ ) देहस्य सर्वक्रियाणां कर्तृस्वरूपं मस्तुलुङ्गं तत्संसृष्टा नाड्यो वा ( Nerves ) न वर्णितमायुर्वेदे इत्यकिञ्चित्करत्वं तस्य ख्यापयति इति।

( ५ ) नाभेर्ग्रहण्याः क्लोम्नश्च प्रकृतिविकृतिस्थानादिकं नात्र वर्णितं सम्यगिति।

सत्स्वपि विवादिनामेवं बहुषु तर्केषु पञ्चैवैते प्रधानतया विचार्या भवन्ति। यथाक्रममेषामयौक्तिकतां प्रदर्शयामः।

( १ ) तत्रादिमस्य तर्कस्योत्तरम्—अङ्गप्रत्यङ्गानां संज्ञया निर्देशस्य शारीरपरिचयस्य वा चिकित्सिते किन्नाम प्रयोजनम् ? इति जिज्ञासायां, मन्ये, तत्रैकमेवोत्तरं स्याद् यत्, संज्ञाभिरनभिहितेष्वङ्गप्रत्यङ्गेषु, अकृतेषु वा तत्परिचयेषु, व्याधीनां निदानमुपक्रमञ्चावबोद्धुं न कोऽपि शक्नोति। यथाहि ग्रहणीनिदाने "ग्रहणीमपि दूषयेत्" इति वचनमवगन्तुं का नाम ग्रहणीति जिज्ञासा स्वत एवोदेति, तस्याः स्थानसंस्थानकर्माणि चावश्यं ज्ञातव्यानि। एवं चिकित्सायामपि—

ग्रीवायान्तु विवृत्तायां प्रविष्टायामधोऽपि वा।
अवटावथ हन्वोश्च प्रगृह्योन्नमयेन्नरम्॥

इति वचनावबोधे ग्रीवावटुहनूनां ज्ञानमत्यावश्यकमेव। अतो निदानोपक्रमबोधायैव शारीरस्य प्रयोजनं वर्तते, नान्यत्र। टीकाकृद्भिरपि शारीरस्य प्रयोजनं विवक्षुभिरेतदेव समाधानं कृतम्। एष एव सर्वतन्त्रसिद्धान्तः। अत आयुर्वेदस्यैव निदाने चिकित्सिते वा यान्यङ्गप्रत्यङ्गानि कण्ठत उक्तानि, तेषामेव विवृतिरायुर्वेदशारीरेऽवश्यं कर्तव्यैव। यद्येष एव सिद्धान्तस्तर्हि, आयुर्वेदस्य चिकित्सिते निदाने वा यान्यङ्गप्रत्यङ्गान्युक्तानि, तानि चेद् अद्यत्वेऽपि नानाविप्लवध्वस्ते (?) शारीरे पूर्णतया विद्यमानानि उपलभ्यन्ते, तर्हि शारीरतन्त्रस्य कुत्र न्यूनता वर्तते, कृपया प्रदर्शयन्तु विवादिनः। अस्माभिस्तु कुत्राप्यस्य न्यूनता नोपलक्षिता। आयुर्वेदे अनुल्लिखितानामपि, 'कपालमूल चुलिका' 'वलय दन्तिकादीनाम्' अङ्गप्रत्यङ्गानां वर्णनया चेच्छारीरं भाराक्रान्तं स्यात्तर्हि तत्राधिकतादोषापात एव दुर्निवारो भवेत्। पाश्चात्त्य-शारीरतन्त्रेऽपि निदाने चिकित्सिते वाऽनुल्लिखितानां केषाञ्चित् प्रत्यङ्गानां विवृतिर्न दृश्यते। तेषां हि निदाने चिकित्सिते चैवं परःसहस्राणां प्रत्यङ्गानामुल्लेखो वर्तत एवेत्यतस्तेषां शारीरतन्त्रं परःसहस्राणां विभिन्नाभिधेयानां विवृत्यैतादृक् कण्टकितं यत्, तद् विद्यार्थिनां भीतिप्रदमेवाभून्। अतस्तत्तन्त्रनिष्णातानां पाश्चात्त्यतुलनया प्राच्यतन्त्रं बिन्दुमात्रमिति प्रतिभातुं शक्यत एव। एवं तर्कोत्थापन्ने

कञ्चुकमात्रानुसन्धित्सूनां तेषां न कश्चिद्दोष उपलभ्यते। पाश्चात्त्यशिक्षाया इयमेव हि प्रणाली।

(२) सुचिरमनालोचितेषु ग्रन्थेषु लिपिकरप्रमादः सम्भवत्येव। तेन तु यत्र यत्रैव ये ये अंशाः पाश्चात्त्यशिक्षितैरगम्या उपलभ्येरन् पाश्चात्त्य-तन्त्रतुलनया वा विसदृशा अनुभूयेरंस्त एवांशाः प्रामादिका इति निर्देशो न खलु पण्डितानां भवितुमर्हति। किं वयं तथैव प्रयतमानाः प्राच्यरीत्या मृतकखण्डनाय ? जीवितशरीरे पदार्थानां यथैव सन्निवेशो दृश्यते, मृत-शरीरे तथैव किं स्यादुतान्यथा भवति ? देशभेदेन, कालभेदेन, वयोभेदेन वा शरीरगतपदार्थानां तारतम्यं भवितुमर्हति न वा ? तत् सर्वमप्रणिधाय, यत् किञ्चित् प्राच्यं तदेव प्रामादिकमिति दृढं निश्चित्य चेदनुसन्दध्युर्जना-स्तर्हि सर्वत्रैव प्रमाद इति भ्रान्तिरवश्यम्भाविनी स्यादेव। अतो लिपि-करप्रमादो न वेति, पृथग् ग्रन्थधृतान् पाठान् तुलनयालोच्य, समे पाठे आदौ सर्व एव भ्रान्ता इति सिद्धान्तं नानुसृत्य पुनर्गवेषणैव कर्तव्या। अयमेवाभिप्रायोऽन्येषां तर्काणामुत्तरे प्रतिपिपादयिषिष्यते। आशास्यते च विरुद्धवादिभिः सुस्थिरेण मनसा तदनुप्रणिधातव्यमिति।

(३) नाडी शिरा धमनी स्रोतांसीति सर्वे चैते शब्दाः पर्याय-वाचकाः। आत्रेयसम्प्रदायैर्हि कायचिकित्सकैस्तन्निदाने चिकित्सिते चैतासां प्रणालीनां विशेषप्रयोजनाभावात्, सामान्यपरिचयेनैव क्रियासम्पादनानु-कूलत्वाच्च, एतासां वैशेष्यप्रदर्शने प्रयोजनाभाव एवोपलब्धः। तैः खलु तेषां शब्दानामेकधैव निरुक्तिमुपलभ्य, यस्याः कस्याश्चित् प्रणाल्या अव-बोधाय, शिरा वा धमनी वा स्रोतो वेति शब्दा निरङ्कुशतया प्रयुक्ताः। कुत्रापि वा नाडीशब्दस्य नालीशब्दस्य च प्रयोगो दृश्यते। अत एव चरक आह—

"स्रोतांसि शिरा धमन्यो रसायन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशया आलया निकेताश्चेति शरीर-धात्ववकाशानां लक्ष्यालक्ष्याणां नामानि भवन्ति।" इति ( विमानं ५अ )

एवं परिस्थितौ, तेषां यच्च किञ्चिद् वैशिष्ट्यं वर्तते, तस्योल्लेख आवश्यकत्वेन नोपलब्धः। इत एव ते पदार्थमेकमुद्दिश्य, तं शिराशब्देन धमनीशब्देन स्रोतःशब्देन वाऽभिधातुमकुण्ठिता एवाभवन्। धात्वादीनां गमनागमनमार्गरूपेण प्रोक्तशब्दत्रयेण एकस्मिन्नेवार्थे प्रयोगश्च निरुक्त्या संगमयामास। तद् यथा "ध्मानात् धमन्यः" "स्रवणात् स्रोतांसि" "सरणात् सिराः" इति ( चरक सूत्र ३० ) ते हि स्रवणसरणधमनानि गत्यर्थकानीति तथा प्रयोगो न प्रमादावह इत्याहुः। पाश्चात्त्येऽपि तन्त्रे नायं दृष्टान्तो विरलः। तेऽपि एकेन नार्भ ( Nerve ) शब्देन ज्ञानवहां नाडीं, स्नायुं कण्डरां वाऽभिदधति। अत एव कैश्चिद् नार्भशब्दानुवादे स्नायुशब्दः प्रयुक्तः।

धान्वन्तरीयास्तु तत्तन्त्रे शिराव्यधादिकर्मवैशेष्यं विचिन्त्य, न खलु शिरापदेन याः काश्चित् प्रणाल्योऽभिधातुं शक्नुवन्तीति, प्रोक्तं चरकमतं न्यक्कृत्य, शिराधमनीस्रोतसां पार्थक्यं कर्मवैशेष्यञ्च प्रतिपादयामासुः। यदुक्तं तत्रैव—

"अत्र केचिदाहुः शिराधमनीस्रोतसामविभागः शिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्, अन्या एव हि धमन्यः स्रोतांसि च शिराभ्यः। कस्माद् व्यञ्जनान्यत्वात्, मूलसन्नियमात्, कर्मवैशेष्यादागमाच्च। केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामपि अविभागः कर्मसु भवति।" इति ( शां ९ )।

कर्मवैशेष्यन्तु शिराणां वातादिरक्तवाहित्वम्, धमनीनां शुषिराशुषिरत्वभेदेन, रसवाहित्वं शब्दादिवाहित्वञ्च, स्रोतसान्तु प्राणान्नादिवाहित्वञ्च लक्षणीयम्। इत एवैतासां प्रणालीनां स्थानसंस्थानकर्मवैशेष्येषु ज्ञातेषु, येन केनचिच्छब्देनोल्लेखेऽपि, योग्यपदार्थ एव अवबुध्येतायुर्वेदज्ञैः। शब्दबोधरहितास्तु प्रयोगेऽयं निरंकुश इति अवबुध्यमाना अपि, शब्दशक्तिबोधसम्पन्नास्तु नैवं तर्कयेयुः। ते हि इतरप्रसिद्धपदसान्निध्यादिवशाद् बह्वर्थानां शब्दानामेकत्रार्थे नियमनशैलीष्वभ्यस्ता नैवमसारं तर्कमुत्थाप-

यन्ति। देवभारत्या एषैव रीतिः। ये खलु विवादिनस्ते पाश्चात्यतन्त्र-निष्णातास्तत्तन्त्ररीत्या चानुप्राणिताः पाश्चात्यशारीरस्य भेदबुद्धिं पुरस्कृत्य रक्तवाहिनीषु प्रणालीषु काश्चिद् अन्तर्मुख्यः का वा वहिर्मुख्य इति दृष्ट्वा तस्या द्विधा भेदं प्रकल्प्य, अन्तर्मुखी शिरेति, वहिर्मुखी धमनीति संज्ञां चिकीर्षन्तः प्राच्यतन्त्रे विप्लवमानिन्युः। न खलु तत्त्वतस्तत्तथा। प्राच्यानां ग्रन्थाः प्रायः सर्व एव सूत्राकारेणैव निबद्धा इत्यतः स्वल्पाभिरेव संज्ञाभिः शारीरं रचितम्। पाश्चात्यास्तु हीनबुद्धीनामपि बोधसौकर्याय व्यासतः शारीरं रिरचयिषवः संज्ञाबाहुल्यमाद्रियन्तेस्म, इत्येतत् पार्थक्यं पाश्चात्य-शिक्षितैः प्राच्यं शारीरम् आलुलोचयिषुभिः सदैव स्मर्तव्यम्।

(४) तर्कस्यास्योत्तरमंशतः प्रागेव प्रदत्तम्। प्राच्यप्रतीच्ययो-स्तन्त्रयोः सादृश्यरक्षणेप्सुभिरेवायं तर्क उपस्थापितः। न खलु ते जानन्ति, अत्र खलु प्राच्यप्रतीच्ययोः शारीरयोर्महदन्तरं वर्तत इति। तयोः क इव सिद्धान्तो यथार्थत्वेन ग्राह्य इति निर्णयस्त्वधुना सुदुष्कर एव। समासत एष एव निर्णयो भवितुर्महति, यत् प्राच्यैर्हि योगदृष्टिभिर्यत् सुसूक्ष्मं तत्त्वं समुद्भावितम्, न खलु तत् स्थूलदृष्टिभिः प्रतीच्यैः कथमप्युपलब्धम्। ते तु मस्तुलुङ्गसहायैः ज्ञानवहतन्तुभिरेव (nerves) ज्ञानं शारीरी क्रिया च सम्पद्यते इत्याहुः। प्राच्यास्तु शरीरातिरिक्तं किमपि चेतनं वस्तु ददृशुः, यत् खलु स्थूलदृष्टिभिर्न कथमप्यवबोद्धुं शक्यते। यदुक्तं सुश्रुते शव-व्यवच्छेदप्रकरणे—

"न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥" इति (शाः ५)

तदेवाव्यक्तं, चेतनः, आत्मा सर्वदेहानां नियामकः परिचालकश्च। तस्य च स्थानं हृदयमेव। स एव तत्रस्थ इन्द्रियद्वारेण देहे प्रविष्टान् शब्दादिविषयान् अन्तर्मुखीभिर्ज्ञानवाहिनीभिर्धमनीभिर्हृदयमागतान् गृह्णाति। मनसा च सङ्कल्पयति, बुद्ध्या चाध्यवस्यति। एवं वहिर्मुखीभि-श्चेष्टावाहिनीभिर्धमनीभिः प्रवृत्त्या निवृत्या वा कर्मेन्द्रियैः सर्वकर्माणि कारयति

जीवनयोन्या च चेष्टया शारीरयापनौपयौगिकानि कर्माणि कुर्वन्, शरीरं धारयति यापयति च। न खल्वेता धमन्यः स्वयं कर्त्र्यः, तासां परिचालिका शक्तिस्तु वायुरेव। अत एवैता वातवाहिन्यो धमन्य एव प्रतीच्यानां नार्भ-पदवाच्याः। यदुक्तं डल्वणेन धमनीशब्दनिरुक्तिप्रसङ्गे "ध्मानादनिल-पूरणादित्यर्थः" इति। सर्वविधप्रेरणा जीवितप्राणिनो हृदयस्थाद् आत्मन एव जायत इति, मस्तुलुङ्गस्य किमपि क्रियाकारित्वं प्राच्यैर्न स्वीक्रियते। तच्च स्नेहबाहुल्याद् वातप्रशमनायेति, शिरश्चानेकेषामिन्द्रियाणां स्थानमिति च, तत्र क्रियाबाहुल्यात्, सर्वक्रियाप्रयोजकस्य वायोः प्रत्यनीकस्य स्नेह-रूपस्य मज्जापरपर्यायस्य मस्तुलुङ्गस्य शिरस्याधिक्येन स्थितिरिति प्राच्यसिद्धान्तः। अन्यथा मृतशरीरेऽपि मस्तुलुङ्गसद्भावात् क्रियाकारित्वं स्यादेव। एष एव प्राच्यसिद्धान्तः पाश्चात्त्यसिद्धान्तवैसादृश्याद् भ्रान्त इति साहसवचनम् अस्मादृशां स्थूलदृष्टीनां शोभते नवेति सुधीभिर्विभाव्यम्। एवं विमलविपुलबुद्धेरपि बुद्धेराकुलीकरणयोग्यया भारत्या निबद्धस्य, सुश्रुतशारीरस्य मर्मावबोधे अशक्ताश्चेत् केचन विद्वांसः सर्वमेव शारीरं प्रमादबहुलं ब्रुवन्ति तान् प्रति न किञ्चिद् वक्तव्यमस्ति। यदि ते आयु-र्वेदे पूर्णामास्थां विभृत्य, जिज्ञासवः स्युस्तर्हि निष्कपटं तैः सदालोचयितुं तेषां पुरतो वर्तमानो भवेयम्। अभिभाषणप्रसङ्गेन विस्तरशस्तर्कावसरो नास्ति। मत्संगृहीते संस्कृतया गिरा निबद्धे शारीरविनिश्चयाख्य-ग्रन्थे विस्तरशो द्रष्टव्यम्।

(५) यथार्थतत्त्वस्याननुसन्धित्सैवैवं तर्कमुत्थापयति यत् प्राच्यतन्त्रे नाभेः ग्रहण्याः क्लोम्नश्च विवृतिर्नास्ति, सत्यामपि च सा तथैव विकृता यया पदार्थनिर्देशः सुदुष्कर एवेति। तर्कस्यास्योत्तरे तेषां पुरतो मदीयशारीर-विनिश्चयाख्यग्रन्थस्याङ्गभेदीयनाम्नस्तृतीयाध्यायस्य कियदंशमुपस्थापयामि। तत्र चेत् कस्यापि संशयः स्यात्तर्हि तैः सह निष्कपटमालोचयितुं सदैवाहं बद्धपरिकरोऽस्मि।

"अत्र नाभिरिति चरकोक्त-पञ्चदशकोष्ठाङ्गानामन्यतमत्वेन नासौ

वाह्यनाभिः प्रत्येतव्या। इयं हि पाचकाग्नेः प्रधानं स्थानम्, यदुक्तं वृद्ध-वाग्भटे "तस्यां नाभ्यां विशेषतः प्राणा व्यवस्थिताः। यतश्च साऽन्त-रग्नेरधिष्ठानम्" इति ( शां ६ ) शार्ङ्गधरेऽपि "ऊर्द्ध्वमग्न्याशयो नाभेर्वाम-भागे व्यवस्थितः" इति ( ५ अः )। इन्दुव्याख्यायामपि—"अन्तरग्नेः स्थानमामाशय-पक्वाशययोर्मध्यं नाभेरर्द्धाङ्गुलमात्रेण वामपार्श्वे" इति ( सू २१ अं )। इत्यतः सा अग्न्याशयोऽपि कथ्यते। सा च आमपक्वा-शययोर्मध्यवर्तिनी ग्रहण्या अधः पक्वाशयस्योर्ध्वं वर्तते। सा च चतुरङ्गुल-माना। ग्रहण्या अधो नाभेः स्थानमिति परस्तात् प्रतिपादयिष्यते। सुश्रुते चोक्तम् "पक्वामाशययोर्मध्ये नाभिर्नाम" इति ( शां ६ )। एतस्याः प्रमाणमपि तत्रैवोक्तम्—

"हृद्वस्तिकूर्चगुदनाभि वदन्ति मूर्ध्नि चत्वारि पञ्च च गले दश खानि च द्वे। तानि स्वपाणितलकुञ्चितसम्मितानि"......इति। पुनरपि "नाभे-रूर्द्ध्वं हृदयादधस्तादामाशयमाचक्षते" इति छान्दोग्यभाष्यानुसारतोऽपि आमाशयादधस्तात् नाभेः स्थानं ज्ञायते। अत्रैवान्तर्विद्रधिर्भवति। वाह्य-नाभ्याञ्चेद् विद्रधिः स्यात्, न सा अन्तर्विद्रधिरिति कथयितुं युज्यते। अस्याश्च सद्यः प्राणहरमर्मत्वात्तद्गतविद्रधेः पक्वावस्थायामसाध्यत्वं शस्त्र-पातनायोग्यत्वञ्च सुश्रुते चोक्तम्—

"हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन॥"

अत्रैव संसक्ततया ग्रहणीमप्यत्रैव व्याख्यास्यामः। तथा च ग्रहणी-वर्णनायां वृद्धवाग्भटः "षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था, सा ह्यन्त-रग्न्यधिष्ठानतया आमाशयात् पक्वाशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयन्ती पचति। पक्वञ्च विमुञ्चति, दोषाधिष्ठिता दौर्बल्यादाममेव, अतोऽसौ अन्नस्य ग्रहणात् पुनर्ग्रहणीसंज्ञा।" ( शां ३ )। सुश्रुते च "षष्ठी पित्तधरा नाम या कला परिकीर्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्तिता।" इति ( उत्तर ४० )। पुनस्तत्रैव 'षष्ठी पित्तधरा नाम या

चतुर्विधमन्नपानमुपयुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति।" इति। चरकेणोक्तम्—

"अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता।
नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता॥
अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः।
दुर्बलाग्निबलाद् दुष्टा त्वाममेव विमुञ्चति॥" ( चि १५ अः )

लघुवाग्भटेऽप्युक्तम्—

"स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा॥'

इत्याकरग्रन्थपरम्परासंवादाद् ग्रहणीवर्णनमुपलभ्य तस्याः स्थाननिर्देशः सुगम एव स्यात्। अन्वर्थालोचनाद् "ग्रहणाद् ग्रहणी मता" इति, "अपक्वं धारयत्यन्नम्" इति, "भुक्तमार्गार्गलेव सा" इति वचनाच्च आमपक्वाशयान्तरे नाभेरुपरि एवं कश्चिदंशविशेष उपलभ्यते, यस्य अन्नावस्थाभेदाद् अधरगुदवत् कदा मुद्रितावस्था, कदा वा विकाशावस्था स्यादिति ज्ञायते। आमाशयस्यान्तिमे भागे एवं किञ्चिद् मुद्रिकाद्वारं वर्तत इति सर्वतन्त्रसिद्धान्तः। असति तथैव द्वारे यत् किञ्चिद् भुक्तं सततोद्घाटितमुखतया आमाशयात् तत्क्षणमेव पक्वाशये प्रच्युतं भवेत्। अत एव आमाशयस्यान्तिमद्वारम् एतदन्नग्रहणाद् ग्रहणीसंज्ञितमिति युज्यते। तस्याधो नाभिः क्षुद्रान्त्रस्योर्द्ध्वं चतुरङ्गुलस्थानमेवाभिप्रेयते। जाते च ग्रहणीव्याधौ द्वारमेतद् अंशतः सर्वशो वा सर्वदा समुद्घाटितं तिष्ठेत्, तेन च किञ्चिदुद्घाटिते कियदेवान्नम् आमावस्थायां ततः प्रच्युतं पक्वाशयमेति, तस्य च तत्र पाकासम्भवाद् बहुतरपक्वसंसर्गात् पक्वमपि शकृत् स्वल्पतरेणामेनापि मिश्रिततया सरुजं पूति च ग्रहणीव्याधितो मुञ्चति। सततमत्युद्घाटिते च कदा कदा सर्वमेव खाद्यम् आमावस्थायां पक्वाशयगतम्, अविकृतमेव शकृद्रूपेण निर्गच्छति। ग्रहण्या अपि अग्न्यधिष्ठानत्वं पाचकाग्नेः प्रधानस्थानरूपाया नाभेरूर्द्ध्वं सन्निविष्टतया, ऊर्द्ध्वज्वलनस्वभावस्याग्नेः प्रभावाज् ज्ञातव्यम्। यदुक्तं चरके 'सा ह्यग्निबलोपस्तम्भबृंहिता' इ। ति

अस्यार्थः हि यतः सा ग्रहणी अग्निबलेनैव मृदुना अग्निना उपस्तम्भिता क्षीणबला अमुद्रणस्वभावेति यावत, तीक्ष्णेन च उपबृंहिता सबला च भवति। एवमेव सा दुष्टेनाग्निना दुष्टा सती स्वक्रियास्वसमर्था भवतीति भावः। एवं परिस्थितौ सर्वे एवावबोद्धुं शक्नुवन्ति यद् आमाशयस्यान्तिमं द्वारमेतत्। यत्तु पाश्चात्यैः पाइलोरिक अरिफिस् (Pyloric orifice) इत्यभिधयाभिधीयते, तदेव प्राच्यैर्ग्रहणीति कथ्यते। तस्याधस्तात क्षुद्रान्त्रस्योर्द्ध्वं चतुरङ्गुलं स्थानं यत्तैः 'डिओडिनाम' (Duodenum) इति संज्ञया संज्ञितम् तस्यैवोर्द्ध्वदेशं नाभिरिति कथयन्त्यायुर्वेदज्ञाः। अत्र केचित प्राच्यपाश्चात्यचिकित्सातन्त्रनिष्णाता विद्वांसस्तदेव द्वारं मुद्रिकाद्वारमभिधाय तदधो वर्तमान तैर्डिओडिनाम इत्याख्यातं ग्रहणीति कथयन्ति। संज्ञैषा युक्ता न वेति सुस्थिरेण मनसा तैरेव विद्वद्भिर्विचारिते समवबोद्धुं शक्ष्यते।

क्लोम नाम कोष्ठाङ्गविशेष उदरगुहायामामाशयस्य पश्चादधोऽन्तर्नाभेर्वामपार्श्वे वर्तत इति निश्चिनुमः। सुश्रुतेऽप्यस्य स्थानं हृदयस्याधः शरीरदक्षिणपार्श्वे निर्दिदेश "तस्य (हृदयस्य) अधो दक्षिणतो यकृत क्लोम च" इत्युक्त्या। एतद् यन्त्रमपि शोणितजम्, यदुक्तं वृद्धवाग्भटे—"रक्तादनिलयुक्तात् कालीयकम्" इति। अत्र कालीयकं क्लोम च अनर्थान्तरम्। केऽपीदं तिलयन्त्रं तिलकं वाहुः। 'क्लोमतिलकम्' इति डल्वणः। पुनश्च "क्लोम कालखण्डादधः स्थितं दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम्" इति। कालखण्डाद् यकृत इत्यर्थः। दक्षिणपार्श्वस्थमित्युदरस्येति शेषः। तथा च कोष्ठाङ्गानां स्थाननिर्देशे शार्ङ्गधरः "श्लेष्माशयः स्यादुरसि तस्मादामाशयस्त्वधः। ऊर्द्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः। तस्योपरि तिलं ज्ञेयम्" इत्याह। भावमिश्रोऽपि "जलवाहिशिरामूलं तृष्णाच्छादकं तिलम्" इत्याह। अत्र तृष्णाच्छादकं तृष्णाया निरोधकमित्यर्थः। जलवाहिशिरामूलत्वाद् यावत्तत्रस्थसञ्चितजलेन शारीरी क्रिया निष्पद्यते न तावत् पिपासोत्पत्तिः; यदाऽत्यर्थं शारीरवारिव्ययेन तु सञ्चितजलाधारं क्लोम शुष्यति तदैव पिपासोत्पत्तिर्भवतीति भावः। चक्रपाणिरपीदं पिपासा-

स्थानमाह। रक्तबाहुल्यादत्र विद्रधिरपि भवितुमर्हति। एवं पूर्वापरं समालोच्य वयमिदं कोष्ठाङ्गं पाश्चात्त्यानां प्यांक्रियाख्यं (Pancreas) यन्त्रमेव क्लोम इत्यत्रबोद्धुं शक्नुमः।

अत्र केचित् 'क्लोम स्याद् गलनाडिका', इति याज्ञिकभाष्यवचनात् कोमलास्थिमयीं श्वासनालिकां क्लोम इत्याहुः। न तत् समीचीनत्वेन मन्यन्तेऽन्ये। कोष्ठाङ्गरूपे हि क्लोम्नि विद्रधिर्भवतीति ध्रुवम्। नास्यां श्वासनाड्यां वाह्येंऽशेऽस्थिमयत्वाद् विद्रधिर्भवितुमर्हति। तदन्तस्तु श्लैष्मिक्यां कलायामर्हन्त्यामपि विद्रधौ तत्र श्वासकृच्छ्रतैवाद्वितीयं लिङ्गं स्यान्न च पिपासाधिक्यम्। क्लोम्नि तु पिपासाधिक्यं नूनं भविता। यदुक्तं सुश्रुते—"× × × × अन्तः कुर्वन्ति विद्रधिम्।

वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि वा तथा।

× × × × पिपासा क्लोमजेऽधिका॥" इति (निं ६ अः)

अतश्चात्र विद्रधेरसम्भवान्नास्याः कोष्ठाङ्गक्लोमत्वेन परिग्रहो युज्यते। परं पाश्चात्त्यानां प्यांक्रियाख्ये यन्त्रे प्यांक्रियाटाइटिस, (Pancreatitis) इतिसंज्ञा विद्रधिर्भवतीति सिद्धान्तः तदेव यन्त्रं क्लोम इति समर्थयति। एतदपि जलवाहिशिरामूलत्वेन सारमलविवेके आवश्यकं जलं समाहरतीति स्पष्टं ज्ञायते। शुष्के वा तस्मिन् कर्मान्तरेण वा तत्र सति जलाभावे प्रकृत्यैव जलाकाङ्क्षा भवतीति तृष्णानिदाने 'शुष्क-क्लोम-गलाननः' इति पाठस्य सामञ्जस्यं स्यात्। श्वानं युवानं मघवानमिति पदत्रयस्य वैयाकरणिकैरेकत्र सूत्रे ग्रथनाद् युवानं मघवानं वा स्वसमीपवर्तिनं निर्णेतुं समीहावद् गलाननसमीपवर्त्यैव क्लोम इति निर्णयः पण्डितानां भवितुं नार्हति। याज्ञिकभाष्योक्तं क्लोम कण्ठनाडी वा भवतु, एकेन शब्देन पदार्थद्वयावबोधश्चेत् प्रतिबध्येत तर्हि देवभाषेयमचला भवेत्। सुश्रुते "हृदय-क्लोम-निबद्धासु नाडीषु" इति वाक्यस्य बलाच्च सा कण्ठनाडी क्लोम-निबद्धा इति ज्ञायते न तु सैव क्लोम इति। (क्रमशः)

———

# मानसस्थैर्योपायः

[ निबन्धकः—श्रीशशिभूषण-स्मृतिज्योतिस्तीर्थः ]

इह खलु संसारे मनःस्थैर्यमन्तरेण न किमपि कार्यं सफलतामुपैति। विषयानुरागिणां वैषयिकेषु, ब्रह्मचारिणां ब्रह्मचर्येषु, व्रतिनां व्रतेषु, पाठकानां पाठेषु, जापकानां जपकृत्येषु, योगिनां योगेषु, भोगिनां भोगेषु, ध्यानशीलानां ध्यानेषु, छात्राणामध्ययनेषु, किं बहुना, सर्वेषां सर्वेष्वेव विषयेषु मनःस्थैर्यं विना नाभिलषितसिद्धिः कथमपि भवितुमर्हति। मनोविजयार्थैव शास्त्रे यमनियमासनध्यानधारणाप्राणायामादयोऽनुष्ठेयत्वेन विहिताः, सतत-चञ्चलस्य बलवतो मत्तमातङ्गकल्पस्य मनसोऽपि योगशास्त्रोक्तनियमेन स्वल्पायासेनैव स्थैर्यं भवितुमर्हति।

स उपायो यथा—यस्य यादृशमासनमभ्यस्तं जातं स तेनैवासनेन समुपविश्य समकाय-शिरोग्रीवः सन नाभिमण्डलन्यस्तदृष्टिः कञ्चित् कालं निमेषोन्मेषरहितोऽवतिष्ठेत। नाभिमण्डले दृष्टिमनःसंयोगेन क्रमशो निश्वासलाघवं भवति। यावन्निश्वासलाघवं तावन्मनसोऽपि स्थैर्यमुपजायते। अनेनैव नियमेन कियतकालं नाभिमण्डले दृष्टिमनःस्थापनेन अनायासत एव मनसः स्थैर्यं जायते। मनःस्थिरीकरणाय नैतादृशोऽपर उपायो विद्यते। प्रत्यहं सन्ध्योपासनायाः प्राग् यथाविधि प्रागुक्तनियमेन मनःस्थिरीकरणमवश्यं करणीयम्। दृष्टफलिका चेयं प्रक्रिया। क्रमशोऽभ्यासेन स्वयमपि प्रत्यक्षीकर्तुं शक्नुयादिति नात्र सन्देहलेशः। अथ चेद् विषयविशेषे समासक्तचित्तस्य स्वेष्टदेवताध्यानधारणादिषु मनसो नियोगे शक्तिराहित्यं भवति, तदा मनो यं यमेवाभिनिविशते स एव विषय इष्टदेवत्वेन ध्येयस्तस्मिन्नेव चित्तधारणा कर्तव्या। एवं कृते इष्टदेवता-विषययोरैक्यभावनया चित्तधारणा वर्धमाना भवतीति। अनेनैवोपायेन सत्वरं कृतकार्यो भवितुमर्हति। अस्मादन्यः सुगमः पन्थाश्चित्तजयाय नावलोक्यते।

अपरश्च त्राटकयोगश्चित्तस्थैर्यनिदानं विद्यते। तेन च न केवलं चित्तस्थैर्यमपि तु नानाविधशक्तिलाभोऽपि भवति। त्राटकयोगप्रकारश्चायम् —सुखोपविष्टेन स्थिरकलेवरेण धातुप्रस्तरान्यतरनिर्मितसूक्ष्मद्रव्योपरि निर्निमेषं दृष्टिः स्थापनीया। दर्शनसमये यथा शरीरं न चलति मनश्च न चाञ्चल्यमुपैति तथा यतितव्यम्। यावन्नयनं जलप्लुतं न भवति तावदेवमेव दृष्टिः स्थापनीया। अभ्यासक्रमेण बहुकालं यावत् तादृशदृष्टिस्थापने शक्तिराविर्भविष्यति। भ्रूद्वयमध्यबिन्दावेकाग्रचित्तेन दृष्टिविन्यासेऽपि पूर्ववत् त्राटकयोगो भवति। त्राटकयोगसिद्धौ च नेत्रदोषोपशमो निद्रातन्द्रादयः स्वायत्ता भवन्ति, दृष्टिशक्तिः समेधते। किं बहुना हिंस्रजन्तवोऽपि वशीभूता भवन्ति। हिंस्रजन्तूनां नयनोपरि त्राटकसिद्धानां दृष्टीनां संस्थापनेन तेषां हिंस्रप्राणिनां नयनरश्मयः संयता भवन्ति। तत्संयमेन च ते वशीभूताश्च भवन्ति। पाठकानां मध्ये केनचित् परीक्ष्येत चेत्तदा प्रत्यक्षेण सर्वं प्रत्येतव्यमिति नात्र संशयावकाशः।

त्राटकयोगफलं मया यत् प्रत्यक्षीकृतं तद् यथायथं वर्ण्यते। खुलनाजनपदे कपोताक्षनदीतीरेऽध्यापनसमये क्वचिन्निरुद्धोभयपार्श्वेन पथा गच्छता मयाऽभिमुखं सवेगमागच्छन् विलोलरसनः कश्चित् सरमातनयोऽवलोकितः। तत्पश्चाद्गतैर्लगुडपाणिभिरनेकैर्जनैरुच्चैरुच्यतेस्म, महोदय! क्षिप्रोऽयं सारमेयः प्रयाति, सत्वरं प्रत्यावर्ततास् प्रत्यावर्ततामिति। प्रायः सम्मुखीनमेव तमवलोक्य पलायनाक्षमो भीतभीतः प्रसारितातपत्रमाकुञ्चयन् भूमौ संस्थाप्य त्राटकयोगफलपरीक्षणोत्सुक इवैकाग्रचित्तो दृढाध्यवसायेन भगवच्चरणार्पितमानसो लब्धसाहसः सम्मुखमागच्छतः सारमेयस्य नयनोपरि स्वीयनयनरश्मिमाहितवान्। अनया प्रक्रिययैव स सरमानन्दनः कियत्कालं मामवलोक्य स्थिरकलेवरः स्थिरदृष्टिरासीत्। व्यतीते पुनः कियति काले उदरतलन्यस्तपुच्छः पूर्वकायप्रविष्टपश्चार्द्धः पथिपार्श्वेन मन्दं मन्दं भीतचित्त इव पलायितुं प्रवृत्तः। महाभीतिहेतुभूते तस्मिन् सारमेये दूरं प्रस्थिते सति महासङ्कटादुत्तीर्णोऽहमिति मन्यमानः सानन्दं पुनरातपत्रं प्रसार्य स्वाभीष्ट-

ग्राममभिगन्तुं समुद्यतः। प्रागुक्ता लगुडपाणयो बहवो ग्रामीणाः समस्वरं-मुक्तवन्तः, महाशय! परमसाहसिको भवान्, यत् क्षिप्तस्य सारमेयस्य सम्मुखभागे जीवनमप्यवहेलयन् कृतान्त-कृतान्त इव समवस्थितवान्। भवान् परः-सहस्रं धन्यवादानर्हति। मयोक्तं—भद्रमहोदयाः! पलायनासमर्थेन मयैतद् दुःसाहसं समाश्रितम्। मामकीनोऽयं व्यवहारो न कस्यापि प्रशंसनीयः। तथापि तैः सर्वैरेव बहुधा समभ्यर्थितोऽहं संवृत्तः।

त्राटकयोगसिद्धौ क्षिप्तसारमेयवशीकरणं नैव कष्टसाध्यमपि तु प्रबलहिंस्रजन्तूनपि व्याघ्रादीन् दृष्टिमात्रेण वशीकर्तुं शक्नोति। मानवाः पुनरनायासेनैव वश्यतां गमिष्यन्तीति नात्र किमपि चित्रम्। त्राटकयोगारम्भसमये प्रथमं मनश्चाञ्चल्यमधिकमेव भविष्यतीति मत्वा न तस्माद् विरामो युक्तः। क्रमेणाभ्यस्ते चित्तमपि स्वाभाविकचाञ्चल्यं विहाय क्रमेणैव स्थैर्यमाप्नुयादिति। सामान्यशिक्षयापि यादृक् फलमवाप्तं तदपि मादृशानां नाल्पतरं मन्यते। कश्चित् पाठको यदि त्राटकयोगाभ्यासे कृतश्रमो भवेत्तदावश्यमेव स तदीयफलं लप्स्यत इति नात्र संशयलेशोऽपि।

---

## संस्कृत-साहित्य-परिषदस्त्रयोविंशवर्षीय-कार्यविवरणम्

[ निबन्धकः—श्रीअमरेश्वरठाकुर-वेदान्तशास्त्री ]

आदौ तावन्निखिलविद्याधिष्ठात्रीं वाग्देवीं भूयो भूयः प्रणम्य संस्कृत-साहित्यपरिषदः परिपोषकान् समागतान् सुधीवर्यांश्च यथायोग्यमभिवादन-प्रमोदपरिष्वङ्गं विज्ञाप्य सभापतिमहोदयस्य समाज्ञया संस्कृत-साहित्यपरिषदस्त्रयोविंशवर्षीयकार्यजातं विवरीतुमुत्सहामहे।

प्रारम्भ एव शोकभारपर्याकुलमानसैरस्माभिः परिषदं प्रत्यकृत्रिमम् अनुरागं प्रकटितवतां केषाञ्चन महापुरुषाणां वियोगवार्त्ता भवतां पुरतः समवतार्यन्ते। ये नामासन् महामहोपाध्यायपदभाजो मनीषिणामग्रण्यो-

ऽसामान्यप्रतिभासम्पन्नाः पद्मनाथ-भट्टाचार्य एम्.ए. महोदयाः, तेऽस्मान् शोकाम्बुधौ निमज्ज्य स्वकर्मार्जितं स्थानं समापन्नाः। तेषां लोकान्तर-प्रस्थानेन परिषदः पण्डितसमाजस्य किं बहुना भारतवर्षस्याप्यपूरणीया क्षतिः समपद्यत। परिषदः परमोपकारका महाराज-स्यार-मन्मथनाथ-राय-चतुर्धुरीण-महोदयाः, नगेन्द्रनाथ-वसुज-प्राच्यविद्यामहार्णव-महोदयाश्च परिषत्संसृष्टानस्मान् दुःखमहाम्बुधौ निमज्जितान् कृत्वा वर्षेऽस्मिन् लोकान्तरं प्रस्थितवन्तः। परिषदः परमबान्धवानामेषां वियोगेन या हानिः संवृत्ता, न जानीमः पुनस्तस्याः पूर्तिः कथं भविष्यतीति।

मान्या भद्रमहोदयाः, चतुर्विंशतिवर्षेभ्यः प्राग् अस्यामेव नगर्यां केषाञ्चन दरिद्राणामध्यापकानां छात्राणाञ्च प्रयत्नेन परिकल्पितेयं संस्कृत-साहित्य-परिषत्। जानन्त्येव भवन्तः कीदृक् प्रयत्नो वर्तते सर्वदैव विद्वत्सु तत्तद्-देशीयभाषाणां समुन्नत्यर्थम्। या संस्कृतभाषा श्रुतिस्मृतिपुराणादिशास्त्राणां धात्रीरूपा, या च भारतीयभाषानिवहानां जननी, या भाषा सर्वावयव-परिपुष्टा सर्वसमृद्धिशालिनी, या भाषा सौन्दर्येण गौरवेण भावगाम्भीर्येण च जागतिकभाषाजातेषु कामपि प्रतिष्ठां किमपि वैशिष्ट्यञ्चाधिकरोति, या भाषा देवभाषेति भारतीयैरार्यैराद्रियते च पूज्यते च, या खलु भाषा तत्तत्प्रदेशवासिन आर्यान् एकस्मिन्नेव सूत्रे ग्रथितुं प्राभवत्, यया खलु भाषया निखिलानाम् आर्यधर्मावलम्बिनाम् आजन्ममरणानुष्ठानानि सम्पाद्यन्ते, तस्या भाषायास्तन्निबद्धसाहित्यस्य च प्रसारसंरक्षणे कर्त्तव्ये एवेति संस्कृत-साहित्यपरिषत्-प्रतिष्ठापकानामुद्देश्यमासीत्। तदुद्देश्यं साधयितुं परिषदियं काश्चनोपायान् अवलम्बितवती। उपायेषु तेषु प्राधान्येन वर्तन्ते—

(१) साधारणसभाधिवेशनविधानम्, बाहुल्येन संस्कृतभाषया कार्याणां परिचालनम्, मासिकाधिवेशनेषु संस्कृतभाषोपनिबद्धानां निबन्धानां पाठश्च।

(२) चतुष्पाठीसंस्थापनेन शास्त्राध्यापनम्।

(३) ग्रन्थागारस्थापनम्, तत्र मुद्रितानां हस्तलिखितानाञ्च संस्कृत-ग्रन्थानां संरक्षणम्।

(४) अप्रकाशितपूर्वाणां संस्कृतग्रन्थानां प्रकाशः ।

(५) संस्कृतभाषामय्याः पत्रिकायाः प्रचारः ।

(६) संस्कृतरूपकाभिनयः । (७) संस्कृतप्रतिष्ठानान्तरयोगश्च ।

महाभागाः, उपायानिमानुपजीव्य परिषदियं विगते वर्षे किं किं कर्म कृतवती साफल्यञ्च कियल्लब्धवती, तत् सर्वं भवतां विज्ञानार्थम् उपन्यस्यते ।

(१) सभाधिवेशनानि ।

(क) वार्षिकसभा—विगते वर्षे सौराश्विनस्य चतुर्थदिवसे 'युनिभार्सिटो-इनष्टिटिउट' इत्याख्ये भवने परिषदो द्वाविंशवार्षिकमहोतसवो यथारीत्यन्वष्ठीयत । तत्राऽऽध्यक्ष्यमासीत् सुगृहीताभिधानानां संस्कृतभाषायां संस्कृतशास्त्रे च श्रद्धावतां नाटोराधिपतीनां श्रीमतां महाराज-योगीन्द्रनाथ-राय-महोदयानाम् । सभापतिमहोदयेन, स्वर्गतानां भारतविश्रुतनैयायिकानां कामाख्यानाथतर्कवागीशमहोदयानां प्रतिकृतेरावरणोन्मोचनं कृतम् । महात्मनाममीषां विद्यावत्त्वं दाक्षिण्यं दृढचित्तताम् अन्यांश्च बहून् सद्गुणान् समुत्कीर्त्य बहव एव विद्वांसस्तत्र सामाजिकानां चेतांसि श्रद्धायुक्तान्यकुर्वन् । अन्ते च परिषत्सदस्यैः क्षेमीश्वरकविकृतेश्चण्डकौशिकम् इत्याख्यस्य, वत्सराज-कविकृतस्य 'मत्तविलासम्' इत्याख्यस्य च रूपकस्याभिनयेन सर्वेषां चेतांसि समावर्जितानि, समुपार्जिताश्च भूयांसः साधुवादाः इति ।

(ख) साधारणसभा—विगते वर्षे साधारणसभाधिवेशनानि यथारीति सञ्जातानि । तत्र तत्राधिवेशनेषु विपश्चिद्भिः सारगर्भाः संस्कृतभाषामया निबन्धाः पठिताः सम्यक् पर्यालोचिताश्च ।

(ग) कार्यनिर्वाहकसमितिः—विगते वर्षे कार्यनिर्वाकसमितेरधिवेशनेषु तदधिकृताः प्रायः सर्वे एव सदस्याः साग्रहं सम्भूय परिषदः कृत्यजातं सम्पादितवन्तः परिचालितवन्तश्च कर्तव्यमप्रमादेन ।

साहाय्यप्राप्तिः—साम्प्रतं देशव्यापिन्यर्थबाधा वर्तते । तेन च सदस्येभ्यः समुत्तिष्ठन्ती भूतपूर्वा मासिकी वृत्तिरद्यत्वे ह्रासमुपेता परिषदं बाधतेतराम् । ततश्चर्णेनेदानीं चलति परिषदित्यपि वक्तुमर्हामः । परं वङ्गीयशासकैर्वर्षे-

ऽस्मिन् रूप्यकाणां नवशती यथापुरं परिषदः साहाय्यकीकृता। तदिदं 'घनान्धकारेष्विव दीपदर्शनम्' परिषदं कथञ्चनानन्दयति।

(२) चतुष्पाठी—पण्डितप्रकाण्डानां श्रीमतां सीतानाथसिद्धान्त-वागीशमहोदयानां परिषदाचार्यत्वमस्मिन्नपि वर्षे यथारीत्यवर्ततैव। आलोच्य-वर्षे काव्य-व्याकरण-दर्शनादिशास्त्रेषु त्रिंशदधिकाश्छात्राः कृतपरिश्रमा वर्तन्ते। तेषु पञ्चदश गभर्णमेण्टपरिगृहीतपरीक्षायामवतीर्णाः दश चोत्तीर्णाः। श्रीयुक्तसिद्धान्तवागीशमहोदयानां साहाय्यकार्थं श्रीयुक्तरामधनभट्टाचार्यकाव्य-व्याकरणपुराणतीर्थः सहकार्यध्यापकपदे वर्तमानः सयत्नं शिष्यानध्यापयं-स्तेषां सार्वत्रिकोन्नतिविधौ सर्वथा दत्तावधानो विजयते।

विद्यार्थिनः खलु गुरुगृहमेत्य तत एव आहार्यं वासस्थानञ्चासाद्य विद्या-ग्रहणसौकर्यं लभन्त इति सुप्राचीनेयं भारतीया रीतिः। साम्प्रतम् अध्यापकानां दारिद्र्यातिशयेन क्रमशो विलोपमापद्यमानाया अस्या रीतेः कथञ्चित् संरक्षणार्थं परिषत् प्रतिवर्षं छात्रेभ्यो यथाशक्ति वृत्तिं प्रददाति। परन्त्विदानीमपि प्रयोजनानुरूपार्थागमविरहाद् वृत्तेः परिमाणं वर्धयितुं नैव शक्नोति। अत्रार्थे वदान्यतमानां समवधानं दीयमानमभ्यर्थयामहे। चतुष्पाठीसाहाय्यकविधौ "कलिकाताकर्पोरेशन" इत्याख्यसंसद् अस्मभ्यं चत्वारिंशदधिकां मुद्राणां द्विशतीं प्रायच्छत्, एतदर्थं तदधिकृताः पुरुषा अस्माकं धन्यवादान् अर्हन्ति।

(३) ग्रन्थागारम्—ग्रन्थागारस्य परिपुष्टिः समुन्नतिश्च यावच्छक्ति विधीयेते। अन्यत्र दुष्प्रापा बहवो ग्रन्था अत्र वर्तन्ते। अनुसन्धान-निरताश्छात्रा अध्यापका अन्ये च विद्वांसः स्वाभिमतग्रन्थप्राप्तौ प्रायो वैफल्यं न भजन्त इत्यनल्पमिदं प्रमोदपदं परिषत्परिचालकवर्गाणाम्। परिषद्-ग्रन्थानां सुविस्तृतं विवरणं यथा प्रकाशमुपगच्छेत्, तदर्थमस्माभिः प्रयत्यते। परम् अर्थकृच्छ्रनिबन्धनः प्रत्यूहः कथमप्यतिक्रमितुं न शक्यते। कलिकाताकर्पोरेशन-इत्याख्यसंसदः परिषद् विगते वर्षे ग्रन्थागारोन्नयनार्थं रौप्यकाणां सार्द्धषट्शतीं प्राप्तवती। अतस्तदधिकृतेभ्यो हार्दिकान् धन्य-

-वादान् वितरामः। ग्रन्थागारिकपदमध्यासीनः श्रीयुक्त-जानकीनाथ-साहित्य-शास्त्रिमहोदयोऽस्य ग्रन्थागारस्योन्नत्यै यथावज्जागरूको वर्तत इति तस्मा अप्यस्माभिर्धन्यवादो दीयते।

(४) ग्रन्थप्रकाशः—श्रीयुक्त-कालीपदतर्काचार्य-प्रणीतं "प्रशान्तरत्नाकरं" नाम नाटकं वर्षेऽस्मिन् प्रकाशितम्।

(५) परिषत्पत्रिका—द्वाविंशतिवत्सरान् यथारीति प्रचरद्रूपं संस्कृत-साहित्यपरिषन्नाम परिषदो मासिकं मुखपत्रं भारतवर्षीयनानाप्रदेश-वास्तव्यानां सुधियां निबन्धजातैः परिगुम्फितं विनोदयति संस्कृतरसास्वाद-लुब्धचित्तानां विदुषां चेतांसीति विदितमेव सर्वेषाम्। इयं पत्रिका कलिकाताविश्वविद्यालयाध्यापकेन नानाशास्त्रेषु लब्धप्रावीण्येन महामहो-पाध्यायपदभाजा पण्डितप्रकाण्डेन श्रीमता अनन्तकृष्णशास्त्रिमहोदयेन सम्पाद्यमाना संस्कृतपत्रिकानिवहेष्वनन्यविलक्षणां प्रतिष्ठाम् अर्जयन्ती वैशिष्ट्यं किमपि धत्त इत्यत्र नात्युक्तिरस्माकम्।

(६) रूपकाभिनयः—सुरभारतीं प्रति जनानामनुरागसञ्जननार्थं परिषदा तत्सदस्यै रूपकाणामभिनयो विधीयते। अद्य यावद् ऊनविंशति-संख्याकानि नाटकप्रहसनान्यभिनीतानि। तेषु अनेकान्येवानभिनीतपूर्वाणि। प्राचीननाट्यकलायाः समुत्कर्षसाधने सर्वत्रैव परिषत्सदस्या अपूर्वं नैपुण्यम् आविष्कृतवन्तः, येन वङ्गविषयेभ्यो बहिरपि तैरासादितः समादरातिशयः।

(७) प्रतिष्ठानान्तरयोगः—पूर्वेष्विव वर्षेषु विगते वर्षेऽपि पूर्ववङ्ग-सारस्वतसमाजाधीनपरीक्षा परिषदः परिचालनेन निरपद्यत। अत्रास्माकं धन्यवादान् वहन्ति काशीमवाजार-पलिटेकूनिक-विद्यालयाध्यक्षाः, यतस्ते तद्विद्यालयभवने परीक्षास्थानव्यवस्थां विहितवन्तः।

अर्थाभावप्रपीडिता परिषद् गृहकोषादृणमादाय अधुनापि कथञ्चित् कार्यं निर्वाहयति। 'कर्पोरेशन' सकाशात् प्राप्ते स्थाने वर्षद्वयाभ्यन्तरे परिषदः स्वकीयभवननिर्माणमत्यन्तमेवापेक्षितं वर्तते। भवनाभावाद् दिने दिने परिपोषमापद्यमानस्य सुविशालग्रन्थागारस्य तथा चतुष्पाठीविभागस्य

च कृत्यावलीपरिचालना क्रमशो दुष्करतामवगाहते। महता प्रयत्नेन संगृहीतानां मुद्रितामुद्रितानाममूल्यग्रन्थरत्नानाम् तथा महतो द्रविणराशेर्विनियोगेन विनिर्मितानां तैलचित्राणाञ्च संरक्षणं संभविष्यति न वेति महतीयं चिन्ता समाक्रामत्यस्माकं चेतांसि।

मान्याः सदस्याः, भवद्भ्यः पुनरपि यथायोग्यमभिवादन-सम्भाषणादिकं विज्ञाप्य विरमामो वयम्। केवलं प्रार्थयामहे—सुरक्षन्तु भवन्तो भवदीयामेव कन्याकल्पां परिषदमिति।

---

त्रयोविंशतितमे वार्षिकाधिवेशने

## संस्कृत-साहित्य-परिषदोऽभिनयः

[ दर्शिका—कुमारी श्रीलीलावती दासजा ]

मान्याः पाठकमहाभागाः, कौतुकाद् बालभावात् संस्कृतप्रणयितया चाभिनयदर्शनोत्सुकाहं व्यतीते संस्कृतसाहित्यपरिषदस्त्रयोविंशतितमे वार्षिकमहोत्सवे यथास्थानं सम्मिलितवत्यासम्। इतः पूर्वमदृष्टसंस्कृताभिनयाया ममाभिनववस्तुदर्शनेन काममासीद् विस्मेरविमूढा चित्तवृत्तिस्तथापि यथादृष्टमभिनयं यथाशक्ति यथास्वादं वेदयितुमुद्यताहं न जाने भवतां हास्यं वा कोपं वेर्ष्यां वा जनयिष्यामीति।

प्रथमतस्तावन्मम ग्राह्यवचस्त्वप्रत्यायनायेदमेव मन्ये पर्याप्तं स्याद्, यदबलाः काममन्यत्रान्वर्थाभिधाना अपि न खलु कलायामप्यबला इति। नाविज्ञातञ्चैतत् पुराणान्यनुशीलयताम् इतिहासमालोचयतां लोकवृत्तान्तं वा साभिनिवेशं विश्लेषयतां विमलाशयानां पाठकमहाभागानाम्। अतोऽत्र भवन्तो वक्तृविशेषनिस्पृहाः सन्तः सदयमाकर्णयन्तु ममाभिनयिकीमालोचनामिति साञ्जलिबन्धमभ्यर्थये।

प्रथमतस्तावदकुण्ठेन कण्ठेनोपकण्ठं भवतामिदमेवाभिधानीयं यदीदृशोऽभिनयः संस्कृतनाटकानां सम्भवतीति नासीन्मे मानसी वृत्तिः। धन्या

संस्कृतसाहित्यपरिषद् धन्यास्तत्सभ्या धन्या नाट्याभिनयाधिकृता धन्याश्च शैलूषाः। ओद्बोधनसङ्गीतादा सभाकार्यत आ च जर्जरोत्सवात् सर्वमेव कृत्यं सुश्रृङ्खलसुविहितं परिषदधिकृतानां महतीं कर्मनैपुणीमनुमापयति। प्रीता चाहम् ईदृश्याः परिषदो गृहनिर्माणाय वदान्यानां वित्तविसर्जन-प्रतिश्रुत्येति च प्रसङ्गतः प्रकटीकरोमि।

सुसज्जितस्य शैलूषस्य साहायकेनानुसंहितो जर्जरोत्सवो यावत्स्वेव कर्मस्वार्याणामलौकिकताबुद्धिं द्रढयन्नस्माकमपि चेतांसि तदात्वे भावान्तर-जर्जरितान्यकार्षीत्। पुष्पामोदवासिता धूपसुरभी रङ्गभूमिः क्षणं पूजा-मण्डपमिव व्यभात्।

जर्जरोत्सवात् परतश्च मयूरनृत्यम्। अत्रेदमादौ वक्तव्यं, किमिदं नृत्यं दिङ्नागेन कविनैव स्वकृतौ निरूपितं ? येन नाट्यान्तर्भावभावनया जर्जरोत्-सवात् परतोऽस्यानुष्ठानकालो व्यवस्थापितः ? जर्जरोत्सवो नाट्याङ्गमित्य-श्रृणवम्, तदन्तश्चानुष्ठितं नृत्यमपि तथैव गृह्णीयाज्जनः। संशयोऽयमद्यापि मामनुवर्तते, अनुगृह्णन्तु संस्कृतसाहित्यपरिषत्सभ्याः प्रकृततथ्यावेदनेन संशयानां माम्। नृत्यञ्चेदं किं मायूरमुत टैट्टिभमाहोस्विद् भैल्लमिति न प्राभावि मया तदानीमवबोद्धुम्। अत्र चांशतः संस्कृतसाहित्यपरिषत्-परिचालका अप्यपराध्यन्ति, ये यथाकालं विवरणपुस्तिकामवितरन्तो मामिवान्यानपि पात्रपरिचयादौ च कार्यविज्ञानेन च चिराय तिमिरायेव व्यतरन्। विवरणपुस्तिकालम्भात् परतश्च मया चिन्तितं किमिदं "रवीन्द्र-सरकारेणा"नुष्ठितं मयूरनृत्यं मयाऽवलोकितम् ? बाढमस्य व्याधनृत्यमिति नाम मह्यं रोचते। दृष्टमस्माभिरुदयशङ्करभ्रातुरिदमेव मयूरनृत्यम् अपूर्वं नाम तदद्यापि स्मरन्त्या मे चेतसि कमप्यानन्दमातनोति। अस्तु नाम तत्, नूनमङ्गहारे प्रकारभेदो नर्तकयोर्द्वयोर्भवितुमर्हत्येव, परं तालस्यापि व्यतिक्रमस्तत्र मया क्वचित् क्वचिदनुभूत एवेति महदेव मे विस्मयस्थानम्।

अनिन्द्या नान्दी सभ्यानामानन्दं सन्दीपयन्त्यन्वर्थनामैवासीत्। सुभग-शरीरः सूत्रधारः कविगोत्रादीनामावेदनव्याजेन यन्नामाभिनयकौशल-

मात्मीयमाविरकरोत् दुर्लभमेव तन्नाट्यकलासमलङ्कृतानामपि वस्तूनामभिनायकेष्वन्यत्र शैलूषेषु।

अत्र हि रूपके प्रधानभूमिकानिर्वाहकतया वा नटकर्मनैपुण्याद्वा कारणान्तरेण वा ये नाम शैलूषा मन्मतेन प्राधान्यमर्हन्ति तेष्वन्यतमतामापन्नोऽपि लक्ष्मण आङ्गिकाभिनये साभिनिवेशः प्रेक्षकाणां हृदयं नाधिकृतवान्। अन्तरान्तरा प्रकृतोपयोगिनं रसमुद्भावयन्नप्युच्चारणदोषादनुपादेयवचनतया प्राप्येणापि साधुवादेनात्मानमवञ्चयत्। परम् अभिनेयांशस्य करुणरसप्राधान्येन शरीरसौभाग्येन तत्र तत्राऽऽविष्क्रियमाणेनाभिनयकौशलेन च श्रीमाल्लँक्ष्मणः स्थूलतः स्वं कर्तव्यं साध्वेव समाहितवानिति मे प्रतिभाति। मनोजिघ्राः केचन चास्यापेक्षितमपि विनयमभिनयांशेऽप्रकाशमानमभिसन्धाय मन्मतेन विरुध्यन्ते।

सीता नामास्मिन्नायिका नाटक इति यथा समपेक्ष्यते तादृशं कलाकौशलमनाविष्कुर्वत्यपि रसविरोधि किञ्चन नानुष्ठितवतीति प्रशस्तिमर्हत्येव लब्धुम्। केचित् पुनरिदमप्यभिप्रयन्ति यत् कामं काम्यत एव कविभिस्तन्वीत्वं नायिकायां न पुनरीदृशं नाम तत्। सीता चेयं ससत्त्वापि कृशविरसां मूर्तिमादधाना चितोत्थितामिव स्वामनुस्मारयन्ती कथमिव दर्शकानां हृदयं प्रविशत्विति।

इदानीं वाल्मीकेर्वारः समापतितः। अनवद्यमस्याभिनयकौशलम्, उच्चारणशैली च ततोऽप्यनवद्यतरा दृढमस्मान् विस्मापयते स्म। अयथा मुखरायमाणे तस्मिन् दर्शकसमाजे अस्यैवैकस्य वाल्मीकेः सूत्रधारस्य च वचनमानुपूर्व्येण मया गृहीतं नान्यस्य कस्यापि। परं सीतादर्शनावसरे गङ्गातीरे दृश्यताऽनेन या नामास्थिरता प्रकाशिता दुर्वासो-विश्वामित्रमुखान् द्वित्रान् मुनीनपहाय नान्यत्र गालवादिष्वपि सा शोभते, किं पुनस्तादृश आदिकवौ। यस्य च तात्कालिकीमवस्थमालोचयता पीयूषमयलेखनीमुखेन कविनोक्तम्—"निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः" इति। सेयं दुःखस्य दशा वाल्मीकेर्नानन्दस्येति शोकानुभावे प्रकटयितव्ये

सुखानुभावरूपं तथाविधं चाञ्चल्यं प्रकाशयन्नयं रसभङ्गमस्माकमजनयत्। न जाने दिङ्नागस्य स्थूलहस्तेन कीदृशो बाल्मीकिर्विरचितः।

रामो मध्यमतां विगाहते। कुशलवसन्निधौ चानेन प्रकटीकृतमपत्य-वात्सल्यं मामार्द्रीकरोति स्म। कश्चित् पुनरस्याभिनयमधमं मन्यते। शोकप्रकाशापदेशेन तेन कुतोऽव्यक्तशब्दविशेष उद्वेगमेवापादयदिति तन्मतम्।

तापस्या गीतं श्रवणाञ्जलिपुटपेयमासीत। यदीयं सौकुमार्यं वेशे च तथाऽभविष्यत्, नूनं सुवर्णे सौरभं समरोक्ष्यत्। यज्ञवेदी प्रतिज्ञात-पारितोषिकापि न मह्यं तथात्वेनारोचत। माध्यम्यं पुनरस्या मयापि काम्यत एव। कुशलवौ बालकावपि यथाऽभिनीतवन्तौ नूनं तेन तौ प्रशंसा-मर्हत एव। शिष्टानां शैलूषाणां यन्नाम पदं कविनोपदीकृतं योग्या एवासंस्ते तत्पदमध्यारोढुमिति किमितः परा प्रशंसा तेषां कर्तव्या स्यात। तेषु पुनः कौशिको विशिष्योल्लेखमर्हति। समुपभुक्ता सामाजिकैस्तस्य निरुपधिहास्यरसपरिपाटीति। एवञ्च केषाञ्चिच्छैलूषाणां क्वचित् क्वचिद् मात्रया दोषसद्भावेऽपि वर्तुलतः पुनः प्रशंसनीय एवाभिनयः सञ्जात इति पुनरप्युद्घोषयामि।

तृणीकृतकायक्लेशास्तद्दिवसीयाभिनयनिर्वाहकाः शैलूषमहाभागाः, न खलु न जानामि भवतां परिश्रमञ्चोत्साहञ्च कालक्षेपञ्च, तथापि यत्तत्र तत्र भूतार्थनिवेदनव्यग्रतया भवतां प्रातिकूल्यमाचरं तदर्थं साञ्जलिबन्धं भवतः क्षामये, स्मारयामि च सूक्तिरत्नानीमानि—"न खलु सर्वः सर्वं जानाति" इति, "भिन्नरुचिर्हि लोकः" इति, "यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः" इति च। ततश्च यन्मया भवतां वचनेषु दोष आविष्कृतस्तदिदं ममानभिज्ञतया वा रुचेर्भेदेन वा वाचां स्वभावेन वेति निरपवादा एव भवन्तः सर्वत्रेति शम्।

---

# संस्कृत-साहित्य-परिषदो १३४६ वङ्गाब्दीय-

## कार्य-परिचालकाः

सभापतिः

महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-सांख्य-वेदान्ततीर्थः ।

सहकारि-सभापतयः

१ । महामहोपाध्याय-श्रीयुक्त-अनन्तकृष्ण-शास्त्री ।

२ । ,, श्रीयुक्त-फणिभूषण-तर्कवागीशः ।

३ । डक्टर-श्रीयुक्त आदित्यनाथ-मुखोपाध्यायः, एम. ए., पि-एइच. डि.

४ । पण्डित-श्रीयुक्त-द्वारिकानाथ-न्यायशास्त्री ।

५ । पण्डित-श्रीयुक्त-सीतानाथ-सिद्धान्तवागीशः

६ । महाराज-श्रीयुक्त-भूपेन्द्रचन्द्र-सिंहः, बि. ए. ( सुसङ्ग )

७ । राजा श्रीयुक्त-भूपेन्द्रनारायण-सिंह-बाहादुरः, एम्. एल. सि. ( नसीपुर )

८ । श्रीयुक्त-शरच्चन्द्र-वसुः, बार-अयाट-ल, एम. एल. ए.

९ । ,, वैजनाथ-वाजोरिया, एम. एल. ए.

१० । ,, यतीन्द्रनाथ-वसुः, एम. ए., एम. एल. ए.

सम्पादकौ

१ । श्रीयुक्त-अमरेश्वरठाकुर-वेदान्तशास्त्री, एम. ए., पि-एइच. डि.

२ । श्रीयुक्त-गणपति-सरकार-विद्यारत्नः

सहकारि-सम्पादकाः

१ । पण्डित-श्रीयुक्त-दीनबन्धु-साहित्यशास्त्री ।

२ । ,, ,, रामकृष्ण-चक्रवर्ती, एम. ए.

३। पण्डित-श्रीयुक्त-अशोकनाथ-शास्त्री, वेदान्ततीर्थः, एम. ए., पि. आर. एस.

४। ,, ,, हेमेन्द्रनाथ-भट्टाचार्यः

५। ,, ,, विष्णुपद-भट्टाचार्यः, काव्यतीर्थः, एम. ए.

कार्यनिर्वाहक-समितेरपरे सदस्याः

१। पण्डित-श्रीयुक्त-जगदीशचन्द्र-वेदव्यासः।

२। ,, ,, जगन्मोहन-ज्योतिर्विनोदः।

३। ,, ,, ग्रामापद-विद्यारत्नः।

४। ,, ,, दक्षिणाचरण-भट्टाचार्यः, एम. ए.

५। ,, ,, जानकीनाथ-साहित्यशास्त्री।

६। ,, ,, कालीपद-तर्काचार्यः।

७। ,, ,, वामाचरण-काव्यतीर्थः

८। ,, ,, चिन्ताहरण-चक्रवर्ती काव्यतीर्थः, एम. ए.

९। ,, ,, योगेन्द्रमोहन-विद्यारत्नः।

१०। ,, ,, दक्षिणाचरण-भट्टाचार्यः।

११। ,, ,, काशीनाथ-भट्टाचार्यः, वि. एस्-सि. (Engr.)

१२। श्रीयुक्त-भूपेन्द्रनाथ-वसुः, एम. वि. ( काउन्सिलर, कलिकाता करपोरेशन )

१३। श्रीयुक्त-राजेन्द्रनारायण-वन्द्योपाध्यायः, वि. एल्. ( काउन्सिलर, कलिकाता करपोरेशन )

१४। पण्डित-श्रीयुक्त-दुर्गामोहन-काव्य-सांख्य-पुराणतीर्थः, एम. ए.

१५। ,, ,, कालीपद-व्याकरण-तीर्थः।

१६। श्रीयुक्त-भूपति-राय-चतुर्धुरीणकाव्यतीर्थः।

१७। ,, सुनीतिकुमार-चट्टोपाध्यायः, एम. ए., डि. लिट्.

१८। पण्डित-श्रीयुक्त-उपेन्द्रमोहन-सांख्यतीर्थः।

१९। श्रीयुक्त-व्रजेन्द्रकिशोर-भट्टाचार्यः।

२०। पण्डित-श्रीयुक्त-चण्डीचरण-तर्कतीर्थः ।

२१। श्रीयुक्त-उपेन्द्रनाथ-घोषालः, एम. ए., पि-एइच. डि.

२२। ,, रमाप्रसाद-मुखोपाध्यायः, एम. ए., बि. एल.

२३। कविराज-श्रीयुक्त-विमलानन्द-तर्कतीर्थः ।

२४। श्रीयुक्त-गौरीनाथ-भट्टाचार्यः एम. ए., पि. आर. एस.

२५। पण्डित-श्रीयुक्त-तारानाथ-न्याय-तर्कतीर्थः ।

२६। महामहोपाध्याय-श्रीयुक्त-हरिदास-सिद्धान्तवागीशः ।

२७। श्रीयुक्त-दामोदर-दास-खान्ना, बि. ए.

२८। पण्डित-श्रीयुक्त-हारानचन्द्र-शास्त्री ।

२९। कविराज-श्रीयुक्त-शिवनाथ-सेनः, बि. ए., एम. बि.

३०। ,, ,, ज्योतिषचन्द्र-सरस्वतीः ।

३१। श्रीयुक्त-श्यामाचरण-काव्य-व्याकरणतीर्थः ।

३२। ,, त्रिदिवनाथ-रायः, एम. ए., बि. एल.

३३। कविराज-श्रीयुक्त-जानकीनाथ-काव्यतीर्थः ।

३४। रायबाहादुर-श्रीयुक्त-गोविनलाल-वन्द्योपाध्यायः, बि. ए.

---

संस्कृत-साहित्य-परिषदो त्रयोविंशवर्षस्य ( १३४५ वङ्गाब्दस्य )

आय-व्यय-निष्कर्षः

# (१) साधारण-कोषः

## आयः

| | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| हस्ते | ... १७=१० |
| ष्ट्याम्प | ... ६।।।-१० |
| वृत्तिरूपेण प्राप्तः | |
| ( कलिकातातः ) | १०६७।।।= |
| ( स्थानान्तरात् ) | ...३४५।।० |
| सामयिक-दानरूपेण | |
| दातृभ्यः | ...२३०) |
| गवर्नमेराटसकाशात् | |
| ( १९३८-३९ ) | ...९००) |
| कर्पोरेशन-सकाशात् | |
| पुस्तकालयार्थम् | |
| ( १९३७-३८ ) | ...६५०) |
| चतुष्पाठीसाहाय्यरूपेण | |
| ( १९३७-३८ ) | ...२४०) |
| पुस्तकादि-विक्रयात् | १००।≡१० |
| प्रावेशिक-रूपेण | ... १।० |
| भि. पि. शुल्कपत्रात् | ... ८।।।=१० |
| कुशीदरूपेण | ... ५७।≡१० |
| अन्यतः | ... ४६।।।- |
| ऋणात् | ... ५००) |
| अग्रिमादि-प्रत्यर्पणात् | ... १९०।।।≡ |
| | ४३९३≡१० |

## व्ययः

| | |
|---|---|
| पत्रिकार्थम् | ... ९४२-० |
| पुस्तकालयार्थम् | ८४२।=१५ |
| पुस्तकप्रकाशार्थम् | ... ५२।।≡१० |
| सभाभिनयाद्यर्थम् | ... २४६।।-० |
| शिक्षाविभागार्थम् | ... ११०।।।=५ |
| गृहभाटकालोकार्थम् | ७२९।।।=१० |
| वर्तनाद्यर्थम् | ... ४३३।।।० |
| गृहोपकरणाद्यर्थम् | ... १८।-५ |
| पाथेयार्थम् | ... ४०।=१० |
| पत्रादि-शुल्कपत्रार्थम् | ... १३।।।१५ |
| शुल्कार्थम् | ... ३४।=१० |
| सारस्वतपरीक्षार्थम् | ... २३= |
| भि. पि. शुल्कपत्रार्थम् | ... १४।० |
| विविधविषयार्थम् | ... ४४।।- |
| ऋण-प्रत्यर्पणार्थम् | ... ४२८।- |
| गृहकोषस्य ऋण-प्रत्यर्पणार्थम् | २२।।० |
| अग्रिमादि-प्रत्यर्पणार्थम् | ... २३२) |
| स्थायि-कोषे प्रदानार्थम् | ... १००) |
| ग्रन्थालय-कोषे प्रत्यर्पणार्थम् | ३९।।।= |
| | ४३६९।।।= |
| उद्वृत्तः | |
| हस्ते | २२=५ |
| ष्ट्याम्प | १≡५ |
| | ४३९३≡१० |

## (२) गृहकोषः

( १३४५ वङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

( १६४५-५५ ) ५%

गवर्नमेराट-लोनपत्रे ...१०००)

हस्ते ... ५)

१००५)

प्राप्तः ... ५५१)

साधारणकोषात् प्रत्यर्पितम् २२॥०

१५७८॥०

व्ययः ... २२॥०

उद्वृत्तः१५५६)

उद्वृत्तस्य विवरणम्—

पूर्वोक्ते गवर्नमेराट-लोनपत्रे १०००)

सेराट्राल-व्याङ्कागारे ... ५५६)

१५५६)

## (३) ग्रन्थालय-कोषः

( १३४५ वङ्गाब्दे )

गतवर्षस्य प्रत्यर्पणावशेषितः ५०८)

१३४५ वङ्गाब्दे न्यासरूपेण प्राप्तः ६४)

५७२)

१३४५ वङ्गाब्दे प्रत्यर्पितः ८४)

उद्वृत्तः ४८८)

उद्वृत्तस्य विवरणम्—

गृहकोषे ऋणरूपेण दत्तम् १२२)

सेराट्राल व्याङ्कागारे ... ११~१०

पोष्ट आफिसागारे ... १०।१०

हस्ते ... २०७।१०

साधारण-कोषे ऋणरूपेण दत्तम् ... १३७।~१०

४८८)

## परिषदः साधारण-कोषस्य

ऋणम्

१३३३ वङ्गाब्दात् १३४४ वङ्गाब्द-पर्यन्तं गृहकोषात् गृहीतम् ४१७८॥०

अग्रिमादिरूपेण ... १३०।१५

ग्रन्थालयकोषात् गृहीतम् १७७≡१०

४४८६ )५

१३४५ वङ्गाब्दे वृद्धिः ... १६~१०

४४६६॥।=१५

श्रीरामकृष्ण चक्रवर्ती
आय-व्यय-लिपि-रक्षकः

श्रीअमरेश्वर ठाकुरः
सम्पादकः ।

जे. सि. चक्रवर्ती
आय-व्यय-लिपि-परीक्षकः ।

# Sanskrit Sahitya Parishat

## Departmental Office-bearers for 1939-40.

*Editor of the Journal*

Mahamahopadhyaya Pandit Ananta Krishna Shastri

*Sub-Editor of the Journal*

Pandit Upendramohan Sankhyatirtha

*Librarian*

Pandit Janakinath Sahityashastri

*Asst. Librarians*

Pandit Ramdhan Bhattacharyya,
Kavya-Vyakarana-Puranatirtha
Sj. Hemendra Nath Bhattacharyya

*Acharyya of the Tol*

Pandit Sitanath Siddhantavagish

*Asst. Professor of the Tol*

Pandit Ramdhan Bhattacharyya,
Kavya-Vyakarana-Puranatirtha

*Dramatic Secretary*

Pandit Jaganmohan Jyotirvinod

*Asst. Dramatic Secretaries*

Sj. Kartic Chandra Chakravartty
Sj. Brajendra Kishor Bhattacharyya

*Accountant*

Pandit Ramkrishna Chakravartty, M. A.

*Auditor*

Sj. Janardan Chakravartty, B. Com., G. D. A., R. A.

---

# সংস্কৃত-সাহিত্য-পরিষৎ

## গৃহ-তহবিলের জন্য

## আবেদন

সবিনয় সমাবেদন,

সংস্কৃত-সাহিত্য-পরিষৎ একটি বিশিষ্ট জাতীয় সাহিত্যিক প্রতিষ্ঠান। আজ দুই যুগ ধরিয়া এই প্রতিষ্ঠানটি নানা বাধা বিঘ্ন উপেক্ষা করিয়া একনিষ্ঠভাবে সুরভারতীর অর্চ্চনায় আত্মনিয়োগ করিয়া রহিয়াছে। সম্প্রতি কলিকাতা কর্পোরেশনের কর্ত্তৃপক্ষ রাজা দীনেন্দ্র ষ্ট্রীটস্থ অষ্টাঙ্গ আয়ুর্ব্বেদ বিদ্যালয়ের দক্ষিণদিকে প্রায় পাঁচ কাঠা জমি পরিষৎকে নামমাত্র খাজনায় প্রদান করিয়াছেন। দানের একটি সর্ত্ত এই যে, আগামী দুই বৎসরের মধ্যে উক্ত স্থানে পরিষদের গৃহ নির্ম্মাণ করিতে হইবে। পরিষদের গৃহনির্ম্মাণার্থ ন্যূনাধিক পঞ্চাশ সহস্র মুদ্রার প্রয়োজন। বিগত ১০ই সেপ্টেম্বর পরিষদের ত্রয়োবিংশ বার্ষিকাধিবেশনের সভাপতিরূপে সুপ্রসিদ্ধ ব্যবহারাজীব স্যর শ্রীযুক্ত নৃপেন্দ্রনাথ সরকার মহোদয় স্বয়ং সহস্র মুদ্রা প্রদানের প্রতিশ্রুতি দিয়া বঙ্গের তথা ভারতের প্রত্যেক হিন্দু অধিবাসীর নিকট আবেগপূর্ণ ভাষায় এই মর্ম্মে আবেদন জানাইয়াছেন—"আমরা এতগুলি হিন্দু বর্ত্তমান থাকিতে যদি পরিষদ্ভবন অচিরে নির্ম্মিত না হয়, তাহা হইলে উহা নিতান্ত লজ্জা ও দুঃখের কথা।"

আপনার বদান্যতা ও সহৃদয়তার কথা লোকপ্রসিদ্ধ। তাই পরিষদের পক্ষ হইতে আপনাকে সনির্ব্বন্ধ অনুরোধ জানাইতেছি—সংস্কৃত-সাহিত্য-পরিষদের ভবন-নির্ম্মাণার্থ সানুগ্রহ যথাশক্তি অর্থসাহায্য করিয়া বাগ্দেবীর উপাসনায় সহায়তা করুন। নিবেদক ইতি—

(মহামহোপাধ্যায়) শ্রীপ্রমথনাথ তর্কভূষণ, (মহামহোপাধ্যায়) শ্রীদুর্গাচরণ সাংখ্য-বেদান্ততীর্থ, (মহামহোপাধ্যায়) শ্রীবিধুশেখর শাস্ত্রী, (মহামহোপাধ্যায়) শ্রীফণিভূষণ তর্কবাগীশ, (মহামহোপাধ্যায়) শ্রীঅনন্তকৃষ্ণ শাস্ত্রী, শ্রীসুভাষচন্দ্র বসু, শ্রীশরচ্চন্দ্র বসু, (স্যর) শ্রীমন্মথনাথ মুখোপাধ্যায়, (স্যর) শ্রীবদ্রিদাস গোয়েনকা, (ডক্টর) শ্রীশ্যামাপ্রসাদ মুখোপাধ্যায়, (মহারাজ) শ্রীযোগীন্দ্রনাথ রায়, (মহারাজ) শ্রীভূপেন্দ্রচন্দ্র সিংহ, (রাজা) শ্রীকমলারঞ্জন রায়, (কুমার) শ্রীবিমলচন্দ্র সিংহ, (কুমার) শ্রীজগদীশচন্দ্র সিংহ, (কুমার) শ্রীবিষ্ণুপ্রসাদ রায়, শ্রীবৈজনাথ বাজোরিয়া, শ্রীদামোদর দাস খান্না, শ্রীহরিহর শেঠ, (ডক্টর) শ্রীদ্বারকানাথ মিত্র, শ্রীরমাপ্রসাদ মুখোপাধ্যায়, (Sir) Sarvapalli Radhakrishnan, শ্রীকিরণচন্দ্র দে, (বেদান্তরত্ন) শ্রীহীরেন্দ্রনাথ দত্ত, W. C. Wordsworth (The Statesman), (ডক্টর) শ্রীহরেন্দ্রকুমার মুখোপাধ্যায়, (ডক্টর) শ্রীআদিত্যনাথ মুখোপাধ্যায়, শ্রীগিরিজাকিশোর ঘোষ, শ্রীহেমেন্দ্রপ্রসাদ ঘোষ (বসুমতী), শ্রীতুষারকান্তি ঘোষ (অমৃতবাজার), শ্রীভূপেন্দ্রকৃষ্ণ ঘোষ, শ্রীযতীন্দ্রনাথ বসু, (ডক্টর) শ্রীসুনীতিকুমার চট্টোপাধ্যায়

সম্পাদক—শ্রীঅমরেশ্বর ঠাকুর ও শ্রীগণপতি সরকার

সংস্কৃত-সাহিত্য-পরিষৎ, ১৭, আর. জি. কর রোড, কলিকাতা।

---

দ্রষ্টব্য—যদি কেহ মনি অর্ডারে টাকা পাঠাইতে ইচ্ছা করেন, তাহা হইলে গৃহ-তহবিলের সম্পাদক 'শ্রীযুক্ত অশোকনাথ শাস্ত্রী, এম. এ., পি. আর. এস.—৪১, বাগবাজার ষ্ট্রীট, কলিকাতা,'—এই ঠিকানায় পাঠাইলেই উহা ধন্যবাদের সহিত গৃহীত হইবে এবং তজ্জন্য পৃথক্ রসিদ পাঠাইয়া দেওয়া হইবে।

Reg. No. C. 1073

# संस्कृतसाहित्यपरिषत्

Vol. XXII, No. 7 ] [ November, 1939

१८६१ शकीये कार्त्तिके २२श-वर्षस्य ७म-संख्या

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरअग्रहायणस्य (२३श) त्रयोविंश-दिवसे शनिवासरे सायं सप्तवादनतो भविष्यतीति तत्र संस्कृतभाषाध्यायिना-मध्यापकानाञ्च समुपस्थितिः प्रार्थनीया ।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—২৩শে অগ্রহায়ণ, ১৩৪৬, শনিবার, সন্ধ্যা ৭টার সময়ে হইবে। সংস্কৃত-ভাষাধ্যায়ী ছাত্র এবং অধ্যাপকগণের উপস্থিতি প্রার্থনীয় ।

---

## Opinions on the 'Kalitantram'

( Sanskrit Sahitya Parishad Series No. 2 )

**Amrita Bazar Patrika** (31. 10. 22)—We hail the appearance of a new book-let called Kali-Tantram published by the Sanskrit Sahitya Parishat, Shyambazar, Calcutta. It is annotated and translated by Pandit Satish Chandra Siddhantabhushan. We dare say that the work will prove to be a great help to those who care to make an attempt towards the realisation of the monistic philosophy contained in the *Tantras*. There is no doubt that it will at least serve the public in giving some inkling about the mode of worship enjoined by the Tantras and so help them from being duped by professional impostors. We hope that the presentment of such works will throw much light into the hitherto neglected Tantra literature. The get up of the book is good. It is priced at *8 as. for members* of the Sanskrit Sahitya Parishad and *10 as.* for the public.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| November, 1939 | १८६१-शकीये कार्त्तिके २२श-वर्षस्य ७म-संख्या | Vol. XXII No. 7. |


## श्रीश्रीदुर्गाष्टकम्

[ निबन्धकः—श्रीकैलासचन्द्र-स्मृतितीर्थः ]

कल्पादौ विधिविष्णुशङ्करमुखान् सृष्ट्वा सुराँल्लीलया
सर्ग-स्थित्युपसंहृतीर्नियमतः कर्तुं क्षमाञ्छाश्वतीः ।
कल्पान्ते जगता सहैव च पुनः संजह्रुषी स्वात्मनि
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥१॥

विष्णोः कर्णमलोद्भवौ दमयितुं दैत्यौ मधुं कैटभं
चैनं बोधयितुं तथैव विधिना निद्रायमाणं विभुम् ।
आकृत्या रहिता क्वचिच्च सहिता संप्रस्तुता तामसी
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥२॥

देवानां महिषासुरेण बलिना संपीड्यमानात्मनां
तेजोराशिसमुद्भवा क्षयकरी तस्यासुरस्याञ्जसा ।
नाके निर्जरवृन्दवन्दितपदा शान्तेः पुनः स्थापनाद्
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥३॥

धूम्राक्षादिविनाशपूर्वकमहो शुम्भं रणे सानुजं
हत्वा तीव्रपराक्रमञ्च दनुजाधीशं सुरेन्द्रार्दनम् ।
कुर्वाणा सुरराजशासनगतं स्वर्गं पुनः शान्तिदं
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥४॥
श्रीकाली भुवनेश्वरी च बगला धूमावती भैरवी
तारा छिन्नशिरस्तथैव कमला मातङ्गिनी षोडशी ।
गन्तुं दक्षपुरं पुरा धृतवती रूपाण्यमूनि क्षणाद्
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥५॥
श्रुत्वा श्रीशिवनिन्दनं पितृकृतं यज्ञानले विग्रहं
हुत्वा जन्म पुनर्धराधरवरान्नित्याऽप्यवाप्य स्वयम् ।
शम्भुं प्राप्तवती तमेव च पतिं तप्त्वा तपो दुश्चरं
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥६॥
विघ्नाध्यक्ष-षडानन-प्रसविनी पञ्चानन-प्रेयसी
भक्तानां विपदां विनाशनकरी सर्वार्थसिद्धिप्रदा ।
गौराङ्गी त्रिगुणात्मिका त्रिनयना तापत्रयोन्मूलिनी
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥७॥
दक्षं पादसरोरुहं विनिहितं सिंहस्य पृष्ठे समं
वामञ्चापि वरासुरोपरि लसत्कान्ति क्वणन्नूपुरम् ।
यस्या देवसुरेन्द्रमौलिमणिभाप्रोद्भासितं भाति सा
दुर्गा दुर्गतिहारिणी भवतु मे दीनस्य विश्वेश्वरी ॥८॥

---

# सनातनधर्मस्य प्राचीनता च महत्ता च

[ निबन्धकः—श्रीदीनानाथशर्मा शास्त्री सारस्वतः ]

'न जातु कामान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः'।

केचित् सुधारकाभासा जना आचक्षते यत्—'सनातनधर्म' इति शब्दस्य रचनाऽर्वाचीना। प्राक् त्वस्मद्धर्मस्य 'वैदिक' इति विशेषणमासीद् न खलु 'सनातन' इति। तस्माद् 'वैदिकधर्म' इति वा 'आर्यधर्म' इति वा नाम स्थापनीयं न 'सनातनधर्म' इति। अथ च ये भवन्त आत्मनः सनातनधर्मण आचक्षते, ते भवन्तः सर्वे पौराणिका एव। पौराणिकधर्मश्चाऽर्वाचीन इति।

अत्र प्रश्ने वयं मीमांसामहे। तथाहि—वादिनामुक्तः प्रश्नो निर्मूल एव। अस्माकं धर्मस्य 'सनातनधर्म' इति सञ्ज्ञा सृष्टिप्रक्रमकालादेव वर्तते। अस्मदीयधर्मस्य नाम 'सनातनधर्म' इत्यपि वर्तते, 'पुराणधर्म' इत्यपि च। तत्र सनातनधर्मस्य द्विविधो विग्रहः, सनातनस्य धर्म इति, सनातनो धर्म इति च।

तत्र 'सनातन' इति परमात्मनो नाम। तस्य धर्मोऽयम्। अत्र वेदस्य साक्ष्यं श्रूयताम्—'सनातनमेनमाहुः' [अथर्ववेदे १०।८।२३] 'यो देवमुत्तरावन्तमुपासातै सनातनम्' [अथर्व० १०।८।२२] श्रीमद्भगवद्गीतास्वपि उक्तम्—'त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे' [११।१८] एतदादौ 'सनातन' इति परमात्मनो नाम। तस्य धर्मत्वात् सनातनधर्म इति नाम। सना भवः इति सनातनः। सना इति 'सदा' इत्यर्थे अव्ययम्। तस्मात् 'अव्ययेभ्यष्ट्यु ट्युलौ तुट् च' [४।३।२३] इति पाणिनिसूत्रेण च ट्युल् तुडागमश्च। 'युवोरनाकौ' [पा० ३।१।१] इति सूत्रेण च योरनादेशः। एवं 'सनातन'-शब्दसिद्धिः। तस्य धर्म इति सनातनधर्मः। अथवा सनातनश्चासौ धर्मश्चेति कर्मधारयः [२।१।५७ पा०]।

अन्ये ये धर्मास्ते न नित्याः, न च परमात्मप्रणीताः। परमात्मप्रणीत-धर्मनियमानामियत्ता न भवति। तत्र उत्सर्गापवादादयोऽनेके नियमा भवन्ति, सार्वभौमिकता सार्वकालिकता च भवति। अत एव तत्र परीवर्तो न भवति। मनुष्यनिर्मित एव धर्मे दशद्वादश नियमा भवन्ति, स धर्म ऐकदेशिको नियतकालिकश्च भवति। परं परमात्मप्रणीते धर्मे सर्वविधाधिकारिणां हिताय विविधा नियमा भवन्ति। परमात्मनः समकाल एव सनातनो धर्मः। अत एवास्य पुराणधर्म इत्यपि नाम। अत एव वेदे 'धर्मं पुराणमनुपालयन्ती' [अ० १८।३।१] 'अयं पन्था अनुवित्तः पुराणः' [ऋग्वेदे ४।१८।१] इति श्रूयते। 'पुराणधर्म' इत्यपि अस्मद्धर्मस्य नाम। आर्य-समाजो नामार्वाचीनसम्प्रदायोऽस्मदीयधर्मस्य नाम 'पुराणधर्म' इति द्वेषवशा-देव समाचष्टे कदर्थनार्थं वा सनातनधर्मणाम्, परं वेदेनैव तन्नामाभिहित-मस्मद्धर्मस्य। तेन नात्र द्वेषलेशस्यापि प्रयोजनीयता।

'पुराणधर्म'स्यापि 'सनातनधर्म'स्येव विग्रहः। पुराणस्य धर्म इति, पुराणो वा धर्म इति। पुराण इति परमात्मनो नाम। तथा च महाभारते 'पुराणपुरुषो विभुः' [ वनपर्वणि १८९।५४], श्वेताश्वतरोपनिषदि 'वेदा-ऽहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात्' [३।२१], 'प्रत्नमिन्द्र! हवामहे' [अथर्ववेदे २०।२४।६] अत्र इन्द्रस्य परमात्मनो विशेषणं 'प्रत्न' इति, पूर्वत्र 'सनातन' इति। अतस्तत्प्रवर्तितधर्मस्यापि 'सनातनधर्म' इति 'पुराण-धर्म' इति वा नाम।

'मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट' [ऋ० ८।३०।३], हे देवाः! अस्मान् पितृपरम्पराप्राप्तात् पथो मा दूरीकार्ष्ट यूयम्। तादृशः पित्र्यधर्मः सनातनधर्म एव। 'वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम्' [श्रीमद्भागवत-पुराणे ७।११।४], 'सनातनस्य धर्मस्य मूलमेतत् सनातनम्' [ महाभारते आश्वमेधिकपर्वणि ९१।३४], 'मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः' [भागवतं १०।४।३९], एतदादिप्रमाणैर्यत्र 'सनातनधर्म'शब्दस्य प्राचीनता, तत्र सनातनधर्मस्यापि प्राचीनत्वं परमात्ममूलकत्वञ्च सिद्ध्यति। एवं

'त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव' [ श्रीमद्भागवत० ३।१६।१८ ]। अत्रापि परमात्मावतारैः सनातनधर्मस्य रक्षा प्रोक्ता। 'अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्' [ मनुस्मृति० ६।६४ ] इति नियोगस्य सनातनधर्मविरुद्धता प्रोक्ता मनुना। 'भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम्' [ वाल्मीकिरामायणे किष्किन्धाकाण्डे १८।१८ ]। अत्रापि भ्रातृभार्यया सह व्यभिचारः सनातनधर्मविरुद्धः प्रोक्तः।

'प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः' [मनुस्मृतौ ४।१३८], 'भगवन्! श्रोतुमिच्छामि नृणां धर्मं सनातनम्' [भागवत० ७।११।२], 'श्रुतिगणान् यथा। तपसा ऋषयोऽपश्यन् यतो धर्मः सनातनः' [ भागवत० ८।१४।४], 'सनातनोऽमृतो धर्मः' [महाभारत० वनपर्व० ३१३।६६]. इदमादिभिः प्रमाणैः सनातनधर्मस्य सर्वादिता, परमात्मप्रणीतता, श्रुतिमूलकता च सिद्धा भवन्ति। तेनास्य शब्दस्यार्वाचीनताऽपास्ता।

सनातनधर्मणां त्वयं स्वकीय एव, अत एव त एतच्छब्दं प्रयोक्तुमधिकृता एव। ये आर्यसमाजिकसंस्कारापन्नाः सनातनधर्मद्विषश्चैतच्छब्दप्रयोगेऽयुक्ततामवगच्छन्ति, ते स्वनेतर्यपि ध्यानं निदधतु। स्वा० दयानन्देनाऽपि एषोऽस्माकं शब्दः प्रयुक्तः। तथा च—'हम देह की रक्षा के लिये सनातनधर्म को नहीं त्यागेंगे' [श्रीमद्दयानन्दप्रकाशे संगठनकाण्डे १० सर्गे ३७८ पृष्ठे ]। अत्र स्वा० दयानन्देन 'सनातनधर्म'-शब्दः प्रयुक्तः। यदि स्वा० सत्यानन्दप्रणीत-स्वा० दयानन्दचरितस्थमिदं वाक्यं स्वा० दयानन्दस्य न मन्येत, तर्हि तदीयस्वमुखतः प्रोक्त एष एव शब्दो द्रष्टव्यः। तथा च सत्यार्थप्रकाशे—'पुरुषों के न्याय को सनातनधर्म के आश्रय करके क्रिया करें' [षष्ठसमुल्लासे १०२ पृष्ठे ]। आर्यसमाजिकाः 'सातवलेकर'प्रभृतयोऽपीमं शब्दं प्रयुञ्जते। एतेनास्य शब्दस्य जनसम्मतत्वादप्यदसीयाऽर्वाचीनता परास्ता।

वैदिकधर्म इति त्वेकदेशि नाम। यथा च—वैदिकधर्मः, श्रौतधर्मः, स्मार्तधर्मः, पौराणिकधर्म इत्यादि। परन्तु सर्वेषां समुचिता संज्ञा तु

'सनातनधर्म' इति। 'आर्यधर्म' इत्यपि न व्यापकं नाम, यत आर्या ब्राह्मणा एव मताः। तेषामेव चोपलक्षणेनानेन क्वचिद् द्विजमात्रमप्यभिप्रेयते। परं शूद्रास्तज्ज्ञा अवर्णा जातयश्च आर्या न भवन्ति, 'उत शूद्रे उत आर्ये' [अथर्ववेदे १९।६२।१] इत्यादौ शूद्रस्य आर्यस्य च पृथग्ग्रहणाल्लिङ्गात्। 'आर्यधर्म' इति शब्दस्थापनेन तदीया सार्वदेशिकता न स्यात्। परं सनातनधर्मे तु शूद्रादीनां वर्णानां चाण्डालादीनाञ्चावर्णानामपि धर्मवर्णनम्, अतः स एव व्यापकशब्दः।

संसारस्थसकलसम्प्रदायाः सनातनधर्मस्यैव शाखाः। तत्र काश्चित् त्रुटिताः काश्चिच्च जीर्णाः कीटव्याप्ताश्च; काश्चिद् भग्नाः। आर्यसमाजो नामार्वाचीनतमसम्प्रदायोऽस्यैव सनातनधर्मस्यार्वाचीनशाखारूपः, परन्तु बहुविधत्रुटिपूर्णः। अर्वाचीनत्वादेवास्य हारित्यं दृष्ट्वा जना अस्मिन् मुह्यन्ति। तत्साम्प्रदायिका अस्मान् 'पौराणिकाः' इति द्वेषवशादेव आह्वयन्ति, यत इमे पुराणैकाश्रया इति। परं नैवम्—सनातनधर्मस्य आदिमपुस्तकं वेदः, ततो धर्मशास्त्राणि, ततः पुराणेतिहासाः। आर्यसमाज एव नियोगादिसिद्ध्यर्थं पुराणाद्याश्रयमवलम्बते तदीयपूर्वापरप्रसङ्गं हित्वा। परं सनातनधर्माणस्तु वेदमूलकत्वादेव सर्वं वर्णयन्ति।

सनातनधर्मणामेव इदं कथनम्—'श्रुति-स्मृति-पुराणानां विरोधो यत्र दृश्यते। तत्र श्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरा' [व्यासस्मृतौ १।४] 'श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ। उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः' [मनु० २।१४]। वैदिक्योः परस्परविरुद्धवार्तयोरुभयोर्मननस्य रहस्यमिदम् यद्—वेदो द्विजजनहितैषी। स परस्परविरुद्धावप्युपायौ वक्ति परमुभावेव तौ हितजनकौ भवतः। यथा—विषदूरीकरणस्य मार्गद्वयमस्ति, एको मार्गो विषविरुद्धपदार्थैर्विषनाशः, अपरो विषेणैव विषदूरीकरणम्। एवमुष्मणो दूरीकरणं शीतौषध्याऽपि भवति उष्णौषध्याऽपि। इमावुपायौ मिथो विरुद्धावपि उभावेव जनानां हितप्रदौ उपायौ; तथैव वेदे परस्परविरुद्धोपायावपि जनानां लाभप्रदावेव;

अत एवोभयोर्देशकालानुकूल्येन स्वानुकूलस्यान्यतरमार्गस्यावलम्बनं विधेयमिति रहस्यम् ।

अस्य धर्मस्य सनातनत्वाद् अर्थाद् अत्यन्तप्राचीनत्वाद् एतत्कर्ता वक्तुं न शक्यः। नायं धर्मो भगवता श्रीकृष्णचन्द्रेण उत्पादितः, किन्तु ततः प्रागपि आसीत्। श्रीकृष्णेन तु तद्रक्षा कृता, न तु तन्निर्माणम्। नायं धर्मो भगवतो रामचन्द्राद् अवतारान्तरेभ्यो वा प्रचलितः; तेभ्यः पूर्वमपि तत्सद्भावात्। नायं धर्मो मनु-व्यास-याज्ञवल्क्यादिभिः प्रणीतः, किन्तु ग्रन्थबद्धः कृतो व्याख्यातो वा। वेदप्रकाशनाद् अप्ययं प्राचीनोऽस्ति यतस्तत्राप्यस्य वर्णनम्। यस्य वस्तुनो नियतः स्वामी न दृश्येत, तस्य स्वामी राजा भवति। एवं सनातनधर्मस्य कोऽपि स्वामी न दृश्यते, तेन परमात्मैव तत्स्वामी, अत एवापौरुषेयः। स एव परमात्मा सनातनः, तस्य चायं धर्मः, तेन सनातनधर्मः। यतः सृष्ट्यारम्भकर्ता परमेश्वरः, स एव आदिमऋष्यादिसृष्ट्यै स्वधर्मशिक्षां ददौ। ईश्वरस्य च सनातनत्वात् पुराणत्वाच्च स धर्मः 'सनातनधर्म-पुराणधर्म'-शब्दवाच्यो बभूव। ईश्वरस्य निर्भ्रान्तताकारणाद् एष धर्मोऽपि निर्भ्रान्तोऽत एव आप्तोऽसिध्यत्।

वर्तमानधर्मास्तु अर्वाचीना एव। तदीयमिदमेव लक्षणं यत्तेषां कर्तारः स्मर्यन्ते, तेषां वत्सरा अब्दा वा प्रसिद्धा एव। एषु केचित् शतवर्षतः, केचित् सहस्रवर्षतः प्रचलिताः। तेषु केचित् १३०० वर्षतः, केचिद् १६०० वर्षतः, केचन २५०० वर्षतः प्रवृत्ताः। एष्वधिकप्राचीनोऽपि पञ्चसहस्रवर्षतो नाधिकप्राचीनः। परमस्माकं सनातनधर्मस्त्वत्यन्तं प्राचीनः। अस्यारम्भे वर्षसङ्ख्याया इयत्तैव न वक्तुं शक्या। प्रत्युत एतदेव वक्तव्यं यत्—तत्र सङ्ख्यैव समाप्तिं गच्छति। अत्र विषये मम 'कल्पः सृष्टिसंवत्सरश्च' इति लेखो जयपुरीय'संस्कृतरत्नाकरे' [५।३-४] द्रष्टव्यः।

अर्वाचीनधर्मेषु जैनबौद्धनास्तिकादयो बहवः सम्प्रदायाः प्रचलिताः।

तत्र जैना अस्माकं मूर्तिपूजादिसिद्धान्तेषु किञ्चिन्निकटाः। समस्तेऽस्माकं साहित्ये वेददर्शनादि यत् किमपि वर्तते, तत्राऽप्येकस्य दर्शनस्य योग-दर्शनस्य, तस्याप्येकस्य पादस्य साधनाख्यस्य, तस्याप्येकस्य सूत्रस्य 'यमनियमासन' [२।२९] इत्यस्य प्रथमं योगाङ्गं यमं, तस्यापि भेदानाम् 'अहिंसा सत्यमस्तेय'—[२।३०] इत्यादीनां प्रथममहिंसाख्यं भेदं प्राधान्ये-नावलम्ब्य प्रवृत्ताः। अत इमेऽस्मदेकदेशभूता एव। एषां प्रवर्तको महावीरस्वामी। बौद्धानां प्रवर्तको गौतमबुद्धः। नास्तिकमत-प्रवर्तक-श्चार्वाकः। इमे सर्वे भारतीया अपि बह्वंशेषु सनातनधर्मविरुद्धा एव। एषामब्दा निश्चिता एव। नैते बहु-प्राचीनाः। अत्र जैना वैक्रमाब्दात् ४०० वर्षपूर्वं, बौद्धाश्च ६०० वर्षेभ्यः पूर्वमारब्धाः। एवमन्येऽपि हिन्दु-सम्प्रदायाः सनातनधर्मस्यैव कञ्चिदेकदेशं मुख्यतया आश्रित्य स्वसार्द्ध-तण्डुलकृशरां पृथक् पचन्ति।

तत ईशवीयधर्मः प्रचलितो वैक्रमाब्दस्य प्रथमशताब्द्याम्। तस्य प्रचलतः १९३८ अब्दा वर्तन्ते। तत्प्रचालक ईशुख्रिस्तः, तन्नाम्नैव स धर्मः। अत्र बौद्धधर्मस्य छाया पतिता। ततो मौहम्मदधर्मस्य आरम्भो वैक्रमसंवत्सरस्य षष्ठशताब्द्यामभवत्। अस्य प्रचलतः १३५७ वर्षाणि जातानि। मोहम्मदश्च तत्प्रवर्तकः। ततः सिक्खधर्मः प्रचलितः, तत्प्रचालको नानकमहोदयः। अस्य जन्म-संवत १५२६ वैक्रमः, कार्तिकान्ते मृत्युः १५९६। स गुरुः कथ्यते स्म। तदीयाश्च 'शिष्याः' मूर्धन्यषकारस्य 'ख'कारोच्चारणकारणात् 'शिख्य' इति कीर्त्यन्ते स्म। ततः क्रमशोऽपभ्रंशे जाते 'सिक्ख' इति अमीषां सञ्ज्ञा स्थिता, शकारस्य सकारोच्चारणं प्रसिद्धमेव। अयं नानको विष्णुभक्त आसीत्। स विष्णुं 'श्रीवाहगुरुः' इत्यवोचत। 'श्रियं-लक्ष्मीं वहतीति श्रीवाहः, स चासौ गुरुः। शिवभक्तोऽपि आसीत्। शिवञ्च 'अकालपुरुष' इति आचष्टे स्म। स ओङ्कारप्रेम्यपि वव्रृते। ततस्तच्छिष्यैरपभ्रंशं कृत्वा 'श्रीवाहे गुरु' इति एवमन्येऽपि अपभ्रंशाः प्रचालिता रूढाश्च कृताः। एवं

गोविन्दसिंहो दुर्गाभक्त आसीत। मौहम्मदैः सह युद्धे कतिचनावश्यक-वस्तूनि तेन निधाप्यन्ते स्म, ततस्तच्छिष्यैस्तत्र साम्प्रदायिकतारूपं प्रापितम्। इमे प्रवर्तकाः स्वयं वेदपुराणादिभक्ता देवपूजका एवमस्मन्नैकटिका अविद्यन्त। ततः कालक्रमाद् एतेष्वपि साम्प्रदायिकतावादो रूढो जातः, स्वप्रवर्तकप्रणीतग्रन्थमेव ते ततो वेदवदपूजयन्। ग्रन्थपूजातिरिक्तमूर्ति-पूजापि शनैः शनैः शिथिलीकृता तदीयशिष्यैः।

ततो नानकतनुजनुषा श्रीचन्द्रेण स्मृतिपुराणादिषु कलियुगकृते संन्यास-निषेधं दृष्ट्वा तमाश्रमं पुनः प्रकारान्तरेण प्रचालयितुं तदपेक्षया भूयिष्ठ-सौविध्योपेत उदासीनधर्मः प्रचालितः। एतेनापि धर्मेण सनातनधर्मस्य नैकट्यं प्राप्य संस्कृतभाषाञ्चाऽधीत्य सनातनधर्मस्य भूयसी सेवा कृता। परन्तु अद्यत्वे अस्मिन्नपि रूढिवादः प्रवर्धमानो दृश्यते, आत्मानञ्च संन्यासाश्रमात् प्राचीनं साधयितुं चेष्टते। एषां सर्वेषामब्दसंख्या नियता। १४५६ वैक्रमे संवत्सरे कबीरधर्मः, १६०१ वैक्रमे वत्सरे दादूधर्मः—इत्येव-मादयो बहवः सम्प्रदायाः प्रचलिताः। परमेषां व्यापकता न जाता। ततः १८४७ वि० ब्राह्मसमाज-प्रार्थनासमाजदेव-समाजादयः सम्प्रदायाः प्रवृत्ताः। परमेषां वेदेन सह सम्बन्धाभावाद् व्यापकता न जाता।

तत इमानेव समाजान् अनुकृत्य आर्यसमाजोऽर्थाद् दयानन्दधर्मः प्रचलितोऽर्वाचीनतमः। अस्य प्रवर्तकः स्वा० दयानन्दो जन्मना ब्राह्मणः कथ्यते। श्रूयते यदयं काण्डी ब्राह्मण इति। अस्य जन्म १८८१ वैक्रमसंवत्सरः, मृत्युश्च १९४० वि०। अस्याऽद्य यावत् त्रयाणां पितॄणा-मनुसन्धानमजनि आर्यसमाजिकानां द्वारा। अद्यत्वे दयानन्दाब्दः ११५। स्मर्तव्यं यद्—अयमब्दः सनातनधर्मिदयानन्दस्यैव। यतोऽयं तदीय-जन्माब्दः। स जन्मत आरभ्य बहुवर्षपर्यन्तं सनातनधर्मा एव अतिष्ठत्। प्राक् तदीयाः शिष्यास्तस्य मरणाब्दं लिखन्ति स्म, ततस्तस्य जन्मशताब्दी १९८१ वैक्रमे वत्सरे मथुरायां जाता। ततो भूयिष्ठे विवादे जातेऽनन्तत-स्तज्जन्माब्द एव दयानन्दाब्दो निरणीयत। एवं शताब्दी अपि सनातन-

धर्मिदयानन्दस्यैव जाता ससमारोहम्, अङ्कोऽप्यधुना सनातनधर्मिदयानन्दस्यैव लिख्यते। आर्यसमाजिकस्य दयानन्दस्य तु अद्यावध्यपि शताब्दी न व्यतीता। १८८१ वैक्रमे वत्सरे तज्जन्माभवत्। ततो मार्गप्रदर्शकमूषकमहाशयकृपया तस्य किञ्चिज्ज्ञानं जातं यत्—स मूर्तिपूजां तत्याज। तथापि शिवभक्तो रुद्राक्षमालाधारी भस्माङ्कितललाटतटश्चाऽऽसीत्।

प्रागयं सनातनधर्मे सुधारमात्रमैच्छत्; परं पुनः प्राचीनसिद्धान्तेषु क्रान्तिकरणे बह्वीमसंयतां सुविधाप्रियां च जनतां स्वपक्ष्यां भवन्तीं दृष्ट्वा स्वसम्प्रदायप्रवर्तनेच्छुरभवत्। 'अस्माकं समाजस्य ब्राह्मसमाज-देवसमाजादीनामिव कदाचिद् अव्यापकता न भवेद्' इति विचिन्त्य आडम्बररूपेण वेदेन सह स्वसम्बन्धमस्थापयत्। तत्राप्यर्थे स्वैराचारमेव व्यवस्थापयत्। अन्यानि च सनातनधर्मपुस्तकानि वेदानुकूलत्वेनैव मान्यानि निरधारयत्; परन्तु वेदानुकूलतायामपि तेन स्वेच्छैव विनिगमिका स्थापिता। यस्य पुस्तकस्य यमंशं स्वानुकूलमकलयत्, तं वेदानुकूलमाचष्ट, स्वानभीप्सितांशश्च वेदविरुद्धमघोषयत्।

एतस्य फलमिदं जातं यत्—स यस्य कस्यचिदपि पुस्तकस्य प्रमाणं दातुं शक्तो जातः, यदि वयं तस्यैव पुस्तकस्य प्रमाणं दद्याम; तर्हि तैस्तद् वेदविरुद्धं प्रोच्यते। ईदृक्षे कूटजाले बहवो मुग्धा जिज्ञासुमृगा आगत्य बद्धा बभूवुः। ततः सं० १९३३ वैक्रमे तेन आर्यसमाजोऽर्थाद् दयानन्देच्छाधर्मः प्रचालितः, तस्मात् पूर्वं तन्नामापि नासीत्। तस्मिन्नपि समयेऽयं मृतकश्राद्धं मेने। अन्यानन्यांश्चापि सनातनधर्मसिद्धान्तान् मेने १८७५ ईशवीयप्रकाशिते स्वसत्यार्थप्रकाशे।

पश्चादयम् ईशवीयादिप्रवाहपतित इहत्यानां स्वतन्त्रविचारवतां प्राचीनतापराङ्मुखाणां च जनानां स्वसमाजे बाहुल्यं वीक्ष्य ताँस्तत्र स्थिरीकर्तुं, तादृक्षजनानां कृते असुविधोपेतान्, सनातनधर्मस्य बहून् सिद्धान्तान् अमान्यान् अघोषयत् स्ववक्तृतासु, प्राक्तने च स्वपुस्तके तेषां मुद्रणद्वारा

प्रक्षिप्ततामुद्घुष्य वर्तमानार्यसमाजसम्प्रदायस्य आधारस्तम्भं द्वितीयसत्यार्थ-प्रकाशं निरमिमीत। तस्य मुद्रणप्रकाशनं तु तन्मरणस्य पश्चादजनि। अत एव केषाञ्चिद् विचारोऽस्ति यत्—तदनुयायिभिस्तत्र स्वमन्तव्यान्यपि प्रक्षिप्तानि।

( क्रमशः )

---

( प्रकृतिविलासकाव्ये प्रथमो विलासः )

## सारस्वतसर्वस्वम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—साहित्यभूषण-कृष्णमूर्ति-शास्त्री ]

त्वामाश्रित्य प्रबलशफराः क्षुद्रमत्स्याश्च सर्वे
स्वैरं क्रीडन्त्यविरतमविज्ञातदुःखाः समन्तात्।
नैवोत्साहः स्थलतनुभृतामीदृशः स्यान्महाब्धे
संक्रामन्त्याश्रयगतगुणा ह्याश्रितान्निर्विशेषम् ॥३६॥

नैल्यं व्योम्नः स्वयमयमहो! निर्मलापोऽप्युदन्वान्
ऊरीकृत्य प्रतिवितरति श्रेयसे स्वामृतांशुम्।
सत्यप्येवं त्यजति न वियत्स्वीयमालिन्यदोषं
रिक्तात्मानो न खलु भुवने सन्निवर्त्या महद्भिः ॥३७॥

स्निग्धाम्भोधे शृणु मम गिरं दूरमुत्सार्य गर्वं
पश्य व्योम त्वदपि विभवैः श्रेष्ठमत्यन्तशान्तम्।
उच्चस्थानं जगति भजते मौनमालम्बमानो
व्यर्थालापैर्व्रजति सुमहानप्यधस्तादवस्थाम् ॥३८॥

अद्भिः सिन्धुर्दिनकरकरैरुद्धृताभिः समन्तात्
सिञ्चन् कृत्स्नामपि वसुमतीं क्षेममाधाय भूयः ।
गृह्णात्युज्जीवयितुमखिलानापगारूपिणीस्ता
दत्तादानं भवति महतामन्यनिःश्रेयसाय ॥३९॥
कालेऽनादौ प्रवहति विपर्यासहेतौ समेषा-
मेकोऽम्भोधिः प्रकृतिवशगोऽप्यभ्रवन्निर्विकारः ।
निर्मर्यादं चरितुमपथे न व्यवस्यत्यपीशो
धीरो लोके न हि विकुरुते जातुचित्कारणेषु ॥४०॥
संहृष्येयुः सरसहृदयाः शुष्कनीरः समुद्रः
स्याच्चेद्दीनं प्रचुरतरमुद्वीक्ष्य सद्रत्नजातम् ।
मेर्वादेः किं जगति विलसेत्ख्यातिरुच्चैस्तदानीम्
औदासीन्यं दधति नितरामन्यकीर्तौ महान्तः ॥४१॥
शब्दैरब्धे किमपि किमपि श्राम्यसीव प्रवक्तुं
कस्तेऽनर्घं हृदयपिहितं वेद भावं रसार्द्रम् ।
लोकः कामं वदतु जडधिं त्वां ततो मा व्यथिष्ठाः
शाठ्यादारोपयति हि जनः स्वात्मदोषं परत्र ॥४२॥
गृह्णन्नर्णः सदयहृदयाद्वारिवाहस्त्वदब्धे
वर्षत्युच्चैर्जलद इति च ख्यातिमाप्नोति पृथ्व्याम् ।
दत्ते साक्षाद् य इह भुवने स्तौति लोकस्तमेव
द्रव्यस्वामी त्वहह ! लभते नैव चित्तेऽवकाशम् ॥४२॥
नेत्रानन्दं मनसि कलयन्नात्मरत्नाकरत्वं
पारावार ! त्वमिह भुवनेऽदर्शयिष्यः समेषाम् ।
लोकोऽनङ्क्ष्यत्सपदि तरसाऽन्योन्यघातं विनिघ्नन्
साधूनामप्यहह ! कृपणानर्थहेतुः प्रवृत्तिः ॥४४॥
त्वत्सञ्जातं सकलजगदुन्मूलने मूलभूतं
त्र्यक्षः कश्चिद्विषमपि पिबन् धर्मराजं व्यजेष्ट ।

सत्येवं ते मधुरममृतं शश्वदास्वाद्य देवाः
प्रापुर्नैर्जर्यमिति नतरामद्भुतं नः पयोधे ॥४५॥
खर्वः पूर्वं सलिलमखिलं ह्याचचाम प्रभावा-
दौर्वोऽद्यापि स्थगयतितरां सन्ततं ते प्रवृद्धिम् ।
नो चेल्लोकं खलु कवलयेः सर्वमप्याशु दर्पाद्
न क्षन्तव्यो भुवि हि महतामप्यनल्पोऽवलेपः ॥४६॥
क्षेमं कर्तुं सकलजगतां बद्धदीक्षः सरस्वन् !
प्रीत्या सर्वस्वमपि दिशसि त्वं महात्मैव सत्यम् ।
सत्यप्येवं तव पुनरिमामार्भटीं नाद्रिये यत
त्यागः कीर्तिं हरति महताऽडम्बरेण प्रयुक्तः ॥४७॥
अप्राधान्यं नियतिवशतः प्रापिताः स्वाभिधेयैः
शब्दास्सर्वे व्यवहृतिजुषोऽप्यर्थतादात्म्यभाजः ।
प्राधान्यं ते पुनरुपगताः पाणिनिप्रोक्तशास्त्रे
निर्वर्णा अप्युपरि गणिता न्यक्कृतार्थास्तु तेऽब्धे ॥४८॥
नानादिग्भ्यः स्वयमुपगता माननीया मनोज्ञा
उच्चैर्भूभृत्प्रवरदुहितृरर्णव ! त्वां वृणानाः ।
शब्दैरेते सरभसमये ! दुःश्रवैर्मा विभीषः
स्त्रीणां भीरूण्यबलहृदयान्यन्तरेणैव हेतुम् ॥४९॥
संस्कार्याम्भस्तव जलधरैः स्वादयोग्यं दधत्यः
पुष्णत्यः क्ष्मां द्रुमनिबिडितां जीवराशीनवन्त्यः ।
पूता देवायतनशतसंसेवनान्निर्झरिण्य-
स्त्वामाश्लिष्यन्त्यमितसुकृतैर्वर्धसे धर्मदारैः ॥५०॥
सिन्धुर्गङ्गा तपनतनया हृद्य-गोदावरी च
श्रीकावेरी निरुपमरसा शर्मदा नर्मदाऽपि ।
अन्तर्वाहिन्यपि च पतितान पावयन्त्यस्तटिन्यः
प्रेयांसं त्वां परमरसिकं कामयन्ते महान्तम् ॥५१॥

यत्रागाधस्त्वमसि जलधे ! तत्र वातस्तरङ्गा-
नुत्थाप्य त्वां प्रकृतिचलितं नैव शक्नोति कर्तुम्।
तत्राऽऽधत्ते विकृतिममितां यत्र नैवंविधस्त्वं
दुश्चेष्टानामणुरपि कदाप्यप्रदेयोऽवकाशः ॥५२ ॥
सौन्दर्याणां जगति लसतां देवतां मूलभूतां
पद्मामब्धे ! दधिथ तनयां स्वस्य पुंसे परस्मै ।
अत्यन्ताय ह्यजनि युवयोः श्लाघ्य एषोऽनुबन्धः
सद्भिः सङ्गो भवति हि सतां सर्वसंप्रीणनाय ॥५३॥
लब्धुं वार्धेऽहमहमिकया संप्रहत्याऽऽत्रजद्भ्य-
स्तुष्यन्त्वेते सुमनस इति श्र्यादिभावान्वितीर्य ।
पर्यक्षिप्ता अपि पशुपतिं कालकूटं प्रदाय
स्थाने शक्तिं जगति महतां ज्ञातुमन्ये ह्यशक्ताः ॥५४॥
किं त्वं क्ष्मायां वहसि बहुलं भागमाक्रम्य किं वा
त्वय्युर्वीयं प्लवत इति मे संशयं वारिराशे !
मित्रस्याद्य व्यपनय परं प्रष्टुमिच्छामि नैवं
प्राज्ञंमन्याकुलितभुवने ज्ञानवान् दुर्लभो नु ॥५५॥
अप्येकस्या जगति जलधे ! क्षुद्रशुक्त्याः स्वरूपं
ज्ञातुं शक्तो भवति नतरां हन्त ! वैज्ञानिको यः ।
द्वित्रैः शब्दैः किमपि कथयन् स प्रसिद्ध्यत्यनथ-
र्वक्तुः कीर्त्यै क्वचन समये कल्पतेऽर्थाग्रहोऽपि ॥५६॥
उड्डीयोच्चैर्विदधति जलाभ्यन्तरोत्थाः शकुन्ताः
श्रेणीबन्धं नयनसुभगं त्यक्तदुःखानुबन्धाः ।
खे हित्वाऽन्योन्यमुदितकथाः पञ्चषांस्ते निमेषान्
संभूयाम्भस्यमितकुतुकाः सन्निमज्जन्ति भूयः ॥५७॥
द्वीपान्युद्भान्त्यमितविभवैः श्रेष्ठवस्वोकसारा-
स्पर्धान्यद्रिद्रुमवनसरित्स्तोमचेतोहराणि ।

क्षुक्ष्माणीवाम्बरतलमलं कुर्वते सर्वथा त्वां
प्राज्ञो रत्नाकर ! हि महिमा मानहीनस्तवायम् ॥५८॥
विद्युत्वन्तो भवति नितरां हन्त वर्षन्त्युदग्रा-
स्तप्तेऽत्यन्तं जगति दिनकृद्दृष्टिपातात्समन्तात् ।
रुन्त्स्व स्वैरं त्वमिदमुदधे ! पक्षपातप्रयुक्तं
दत्त्वादानं पुनरपि ततो नैव कल्पेत भूत्यै ॥५९॥
व्योमश्यामं सजलजलदश्यामलः पद्मनाभ-
स्त्वं च श्यामः कुवलयदलश्यामला शैलकन्या ।
स्थेम्ने भूमेरधिकृतवतां किम्वधीकारचिह्नं
किं वा नैल्यं परममहिमव्यञ्जकं रञ्जकं वः ॥६०॥
चेतः शान्तिं मम वितरतात्संप्रसन्नः प्रचेता
वर्धस्वाब्धे ! त्वमपि मुदितश्चन्द्रसन्दर्शनेन ।
कुर्वन् सन्ध्याप्रणतिमुपयाम्यालयं श्रीकुमार्याः
सर्वस्वं स्तादुपरि सततं स्निग्ध ! सारस्वतं मे ॥६१॥

---

# श्रीजीवदेवभक्तिभागवतम्

[ निबन्धकः—श्रीकरुणाकर-काव्यव्याकरणतीर्थः, एम्. ए ]

नाविदितमेतद् भवतां यदुत्कल-भूमिरियं बहुविद्यवंशजातैर्गजपतिरित्युपाधिधारिभिर्नरपालैर्बहुकालं शासिताऽभूदिति । एषाञ्चोत्कलभूखण्डाधिपानां कुलपरम्परागतप्रथया समुद्गीतकीर्तिकलापका भुवि सुविदिता वत्सवंशावतंसा भूमिदेवतनयाः कुलगुरवोऽभूवन् ।

प्रादुरभूदस्मिन् वत्सान्वयेऽसीमशेमुषीकः कविसमाजशिरोमणिर्जीवदेवाभिधानो द्विजो यस्तु कविसार्थसार्थकी-कृत-पदवीकः कवि-डिण्डिम

इति विख्यातिं भुवि लेभे। अयं हि उत्कल-भू-भागस्य तदानीन्तन-नरपते-ररिकक्षहुताशनस्य प्रबलप्रतापस्य प्रतापरुद्रदेव-वर्मणः कुलगुरुरभूत्। नरपतिरयं श्रीचैतन्यागत-पथ-पान्थो जातः। राजवंशोऽयं स्वशासनसमयस्य चतुर्दशहायने ( सप्तदशाङ्के ) दाक्षिणात्ये प्रख्यातप्रतापं कृष्णदेवनामानं कर्णाटकभूखण्डस्य तदानीन्तनमहीपालं विजेतुं सैन्यसामन्तसहायस्तदभि-मुखः प्रतस्थे। समयेऽस्मिन् मध्येऽध्वनो राज्ञाऽनेन कविरयं संप्रार्थितो यत्किल श्रीमद्भागवताख्यग्रन्थस्य दुरधिगमतया तत्त्वजालावबोधने प्रायो न प्रभवन्ति साधारणमतयो मनुष्याः। अतः कृपया तत्रत्यं सारसार्थं समुद्धृत्य सुखबोधाय कमपि ग्रन्थमेकं विरचयन्त्वत्रभवन्त इति। एवं हि स्वशिष्येण सम्यगनुरुद्धः पञ्चत्रिंशद्वर्षीयोऽयं विपश्चिदपश्चिमो जीवदेवो गोदावरीसरितसमीपं वेङ्कटाख्यशिखरिशिखरे वसतिं विधाय मासेनैकेन मकरेण काव्यमिदं निबबन्ध। काव्येऽस्मिन् श्रीमद्भागवतस्य दशमस्कन्धस्था विषयाः श्लक्ष्णया गिरा निर्वर्णिता आसते।

काव्यरत्नमिदं साहित्यनिबन्धनिचयेषु कविगोष्ठीगरिष्ठस्य श्रीहर्ष-प्रणीतस्य निरुपमस्य नैषधीयाख्यस्य महाकाव्यस्य सर्वथा समकक्षतां यास्यतीत्याकलयामि।

काव्यस्यास्य भाषापद्धतिस्त्वतीव शोभनाऽपि च मनोहारिणी वर्तते। वर्णिताश्च विषयाः साक्षान्मूर्तिमन्त इव राजन्ते। नायं काव्य-शेवधिरद्यापि मुद्रणसरणिमुपगतः। सुरगवीसमुपासकानां सचेतसां चेतां-स्यत्र सम्यगावर्तयितुं ग्रन्थस्यास्य भूमिकायां तथा प्रान्तलेखे यद् वर्णितं वर्तते तत्सर्वमविकलं संक्षेपतो मयाऽत्र निगद्यते। तथाहि भूमिकायां कविनाऽनेन ग्रन्थस्यास्य प्रणयनप्रयोजनं निरधारि, प्रान्तलेखस्तु उत्कले-ऽस्मिन् धर्मपद्धतौ कदा कथंकारं कस्य मतं समादृतं जनैरिति तदुदन्त-जातसंपृक्त आस्ते।

तथाहि भोजराजानस्तदीयकुलगुरवश्च शक्तिसमुपासकाः संबभूवुः। केशरिवंशजानां गङ्गान्वयसमुत्पन्नानाञ्च शासनसमये तु शैवाराधनं

प्रदेशेऽस्मिन् प्रभावं विततान। प्रतापरुद्रराजत्वकाले तु कालक्रमानुसारं वैष्णवाराधनमपि प्रादुरभूत्। ( अयं हि प्रतापरुद्रो वीररुद्रनाम्नापि काव्ये-ऽभिहित आस्ते )। इतिहासपर्यालोचनयाऽवगम्यते यदयं प्रतापरुद्रः श्रीचैतन्यचरणान्तेवासी भवंस्तदीयदीक्षां जग्राहेति।

अद्यत्वे तु यद्यप्युत्कलशासनवास्तव्या ब्राह्मणा न किमपि समादरण-कणं प्रदर्शयन्ति श्रीचैतन्यप्रचारिते धर्मे मते वा, तथापि तदानीन्तनराज-गुरवस्तन्मतावलम्बिनोऽभूवन्निति ग्रन्थोऽयं सुस्पष्टमाख्याति।

यद्यपि केशरिवंशजाताः केचन राजान उत्कलभूमिमिमां शशासेति तथ्यालोडने वितथप्रयासानां केषाञ्चन पुरावृत्त-प्रतिपद्धुरीणानां मानसे सन्देहः समुदेति, तथापि निःसंशयं ग्रन्थस्यास्य प्रान्तलेखस्तु तदन्वय-सम्भूतौ सोमेश्वरोद्योतकेशरिनामधेयौ नरपालौ प्रख्यापयति। अयं हि सोमेश्वर उदयकराभिधानाय ब्राह्मणवराय ग्राममेकं स्वराजत्वसमयस्य द्वादशाब्दे ददाविति तस्य दानपत्रादवगम्यते। उद्योत-केशरि-महीपतेः शिलालेखजालन्तु साम्प्रतमपि श्रीभुवनेश्वराभ्यर्णखण्डगिरिभूधरस्य नवमुनि-ललितेन्दुगह्वरयोर्दृष्टिपथमारोहति।

गजपति-कपिलेन्द्रदेवो हि प्रदेशेऽस्मिन सूर्यवंशीय-प्राथमिको भूपो बभूव। स तु आद्वात्रिंशद्वत्सरमुत्कलभूमिमिमां प्रशास्य कृष्णातटिनीतटे प्राणांस्तत्याज। तदात्मजः पुरुषोत्तमदेवस्तु विजयनगरस्य तदानीन्तन-नरपालं समरे विजित्य समानां त्रिंशतमभिव्याप्य प्रदेशमिमं प्रशासत् कटक-पत्तनप्रान्तप्रवाहिण्याश्चित्रोत्पलातरङ्गिण्यास्तीरमासाद्य स्वाराज्यं गतः। तदानीं तस्य तनयः प्रतापरुद्रस्तु सप्तदशहायनः सिंहासनमारुरोह। सिंहासनसमारोहणमहोत्सवसंविधानानन्तरमेव गौडभूभागस्य तदानीन्तन-नरपतिविजिगीषया प्रययौ। पराजित्य च गौडमहीपालमपारीत् स्वपितरं सुविमले जाह्नवीजले।

"सद्योऽभिषेकसलिलैः कृतमौलिरेव संख्ये विजित्य रणजित्वरगौडराजम्।
नद्यां निवापसलिलेन स विष्णु-पद्यां प्रातर्पयत् पृथुयशाः पितरं त्रिपक्षे॥"

अयञ्च महीपालः स्वनामाङ्कितहैमसुद्राणां प्रचारमाज्ञापयामास। यासु भगवतः श्रीगोपालस्यापि प्रतिकृतिरङ्किताऽभूत्।

कवेरस्य नान्या कापि कृतिरासाद्यते ऋते देववाणीविलसितान्नाटकात्। रूपकामद'मुत्साहवत्या'ख्यामाधत्ते।

इदमपि रूपकमेतावन्तमपि कालं मुद्रणमुपजातं कुत्रचिन्नोपलभ्यते। रूपकस्यास्याध्ययनेनावसीयते यदयं कविधौरेयो जीवदेवः स्वशिष्येण प्रतापरुद्रदेववर्मणा चामीकरातपत्रचामरैर्विविधैश्च पटहैः पुरस्कृतः पणनेऽपि तेषामनुमतिं प्राप। तत्रत्यश्लोकस्तु :—

अष्टौ हाटकचामराणि कनकच्छत्रं डमड्डिण्डिमं
यो लब्धः प्रथितप्रतापविभावाच् श्रीरुद्रदेवेश्वरात्।
श्रीजीवः कविडिण्डिमो नृपगुरुर्नानाकलाचञ्चुर-
स्तस्योत्साहवतीति रूपकमिदं सभ्यैः सदा सेव्यताम्॥

नाटकेऽस्मिन पद्यमेतत् कवेरस्य कृतिनैपुण्यपराकाष्ठां प्रख्यापयति।

जीवदेवकवेर्वाणी जीवनाय रसायनम्।
नानन्दयति कं लोके नागरीनयनान्तवत्॥

सूर्यवंशसम्भूतस्य कपिलेन्द्रदेववर्मणः सिंहासनाधिरोहणसमयतः कोऽपि विशिष्टाब्द उत्कलेऽस्मिन प्रचलति। साम्प्रतमुत्कल-प्रचलित-पञ्जिकासु स एवाब्द उपलभ्यते। पञ्जिकाप्रमाणतः कपिलेन्द्र-प्रचलित-कालस्तु चतुरधिकपञ्चशताब्दी। एतस्मादेवावगम्यते यदयं कपिलेन्द्र-देववर्मा खीष्टजन्मतः षट्त्रिंशदधिकचतुर्दशशताब्द्यां सिंहासनं समलञ्चकार। काव्यस्यास्याध्ययनेनैव निश्चप्रचं भवति विदुषां यदयं कपिलेन्द्र-नरपति-र्द्वात्रिंशद्वत्सरान राज्य शशास। तस्य तनयः पुरुषोत्तमदेवस्तु त्रिंशतं हायनान्यभिव्याप्य भूभागमिमं शशास! प्रमाणादस्मादेव निश्चीयते यदस्य प्रतापरुद्रदेववर्मणः शासनारम्भसमयस्तु खीष्टजन्मतोऽष्टोत्तरनवत्यधिक-चतुर्दशशताब्द्यामभूत्। अयन्तु प्रतापरुद्रः सप्तदशवर्षीयः सिंहासनमारु-

रोहेति काव्यमिदं कथयति। अतोऽस्य जनिस्तु द्व्यशीत्युत्तरचतुर्दश-शताब्द्यामभूदिति सम्भाव्यते।

कविरयं काव्यमिदं सप्तदशाङ्के (प्रतापरुद्रदेववर्मणः शासनकालस्य चतुर्दशहायने) व्यरीरचत। अतः काव्यरत्नस्यास्य प्रणयनन्तु ख्रीष्ट-जन्मत एकादशोत्तर-पञ्चदशशताब्द्यामभूदिति निश्चीयते। कविरयं पञ्चत्रिंशवर्षीयः काव्यमिदं निर्ममे। अस्मादेवावसीयते यदस्य जननन्तु ख्रीष्टजन्मतः सप्तसप्तत्युत्तरचतुर्दशशताब्द्यामभूदिति।

उत्कलभूमिमधिवसतां वत्सान्ववायजानां भूमिदेवानां कुले कविरत्नमिद-मुदपद्यत। एते च वत्सवंशधरा उत्कल-नरपतीनां राजगुरवो बभूवुः। अद्यापि च तदन्वयजाता राजगुरवः परिलक्ष्यन्ते। काव्यनिबन्धस्यास्य प्रान्तलेखपर्यालोचनातोऽवगम्यते यत्तदानीन्तनराजगुरवो वत्सवंशकीर्ति-राशिख्यापका बहुविधं प्रज्ञाकौशलं प्रदर्श्य भुवि सुयशसः संजाताः। साम्प्रतमपि तदन्वयसम्भूताः श्रीपुरुषोत्तममण्डलान्तिके वीर-नरसिंहपुर-नामके ग्रामे निवसन्ति।

नूनमेव गीर्वाणवाग्विलासचतुराणां चेतःप्रीतिकरं भविष्यति काव्य-रत्नस्यास्याशु मुद्रणम्, सहृदयानाञ्च किमपि प्राणरसायनमप्यस्य प्रकाशनं स्यादिति विश्वसिमि। संस्कृतसाहित्य-स्वर्वृक्षसंसेविनां सम्मोदाय ग्रन्थ-स्यास्य मौलोपक्रमोपसंहारौ निवद्येते मयेति शम्।

भक्तिभागवतस्योपक्रमः*

"विजृम्भतां सा गुणलोभनीया सूर्योदयक्ष्मापतिपद्ममाला।
या पुण्डरीकाक्षमहावतारस्फुटान्तरालंकृतपुण्डरीका॥
स तत्र जज्ञे कपिलेन्द्र-नामा गजाधिपो दाशरथेर्द्विरुक्तिः।
भूभृत्कबन्धैर्विनिधाय बन्धं कीर्तिं प्रियां प्राप रणाम्बुधौ यः॥

* उपसंहारस्त्वस्यागामिन्यां संख्यायां मुद्रापयिष्यते।

ततो महीमण्डलसार्वभौमः पुरूरवःश्रीः पुरुषोत्तमोऽभूत् ।
रमासमाश्लेषसमानवाणीसमागमानन्दविनोददक्षः ॥
ततोऽभवद् व्यङ्कटकाकतीयः प्रतापरुद्रः स महीमहेन्द्रः ।
यस्य प्रतीपा युधि जृम्भदम्भं दोस्तम्भदम्भोलिहता भजन्ते ॥
स एकदा भागवतावतंसो वेदान्तविद्यापुरुषावतारः ।
स्वच्छप्रभास्थानविशुद्धविद्वन्मुक्तावलीनायक इत्यवादीत् ॥
पुराणगम्भीरपयःपयोधेर्भावामृतं भागवतं प्रतीमः ।
स्कन्धं विशुद्धं दशमं ततोऽपि समुद्धृतं सारमुदाहरामः ॥
अस्मिन् गभीरार्थमहाप्रवाहे न बालकानामुचितः प्रवेशः ।
यतस्ततः कोमलकाव्यभङ्गीविशुद्धबन्धं कुरुत प्रबन्धम् ॥
ततो गुरुस्तस्य मतो बुधानां श्रीजीवदेवः कविपण्डितेन्द्रः ।
समुल्लसद्भागवतामरद्रुच्छायाश्रितः काव्यमिदं तनोति ॥"

---

# भवभूतिप्रसिद्धिः

[निबन्धकः—अव्वारि-वासुदेव-शास्त्री]

महाशयाः ! सुधियः !

ललितललितैः पदगुम्फनैः, सुमधुरैः पद्यगद्यैः स्वादून् रसवत्प्रबन्धान् विरचय्य, आचन्द्रार्कस्थायिना यशःकायेनाद्यापि जीवन्तं महाकविं भवभूतिमधिकृत्य प्रवर्तमानां काञ्चन प्रसिद्धिं विमृशामि । अत्र गुण एव गृह्यतामिति विनयेन प्रार्थये ।

अमुं महाकविं, "काव्येषु नाटकं रम्यं नाटकेषु शकुन्तला" इति प्रसिद्धिवतः शाकुन्तलनाटकस्यापि रचयिता कविकुलशिरोमणिः कालिदास एव इत्थं प्रशशंस—

"नाटकेषु च सर्वत्र वयं वा वयमेव वा।
उत्तरे रामचरिते भवभूतिर्विशिष्यते।"

इति। उत्तरचरिते भवभूतेर्विशिष्टत्वमेतैः कारणैरूहितं भवेत्।

१। स तत्र अनन्यसाधारणीं शैलीमाश्रितवान् कथाविपरिणामविषये। श्रीमद्रामायणगाथायां महान्तं विपरिणामं च कृतवान्। वाल्मीकिः स्वे आदिकाव्ये "कुशलवयो रामेण सङ्गतयोः सीतां रामः स्वपातिव्रत्यनिदर्शनं किमपि कर्म कुर्विति जगाद। ततः सीता स्वमातरं सर्वंसहां विवरं देहीति प्रार्थयमाना तया भूविवरे दत्ते, सर्वस्मिन जने 'नमो नमस्सीतायै भूगर्भोद्भूतायै' इति वन्दमाने 'रघुकुलेशं विना मे मनोऽन्यं न जानीते' इति भणन्ती रत्नसिंहासननिषण्णा मात्रा सह भूविवरं विवेशे"ति जगाद। अत्र तु अन्तर्नाटकेन उभयोस्संयोगवाञ्छां प्रदर्श्य सीतारामयोरन्ते संयोगं वर्णयामास। एतेन विपरिणामेन अन्यैश्च विपरिणामैर्युक्ता एतदुक्तकथैव इदानीमपि जनेषु नवनवतिसङ्ख्याकेषु स्थिरा वसति। एवं, वियुक्तयोर्नायिकानायकयोः पुनस्संयोगवर्णनेन अत्र शृङ्गाररसः परिपुष्टः। अन्यथा श्रीमद्रामायणोत्तरकाण्डयथास्थितगाथावर्णने शृङ्गाररसोऽसम्पूर्ण आभासतां भजेत्। रामे च सामाजिकानाम् "अत्यन्तपातिव्रत्यादियुक्तायामपि एष इत्थमाचरती"ति आदरः कदाचिल्लुप्येत। इत्थं रामायणकथाविपरिणामेन रामे सामाजिकानां भक्तिभावादिपरिपोषणं भवति। शृङ्गाररससिद्धिश्च भवेत्। एतेन विपरिणामेन अन्यैश्च विपरिणामैः कथासंविधानस्य अतीव सुन्दरत्वमापादितम्।

२। किञ्च, अस्मिन् प्रबन्धे सर्वत्र करुणरसं प्रवाहयामास।

"जगज्जीर्णारण्यं भवति च विकल्पव्युपरमे
कुकूलानां राशौ तदनु हृदयं पच्यत इव।"

इति धीरस्यापि श्रीरामचन्द्रस्य दुःखसंवेगं वर्णयामास। "मिथिलायां प्रदग्धायां न मे किञ्चित्प्रणश्यति" इत्युक्तवतः सर्वसङ्गपरित्यागिनो जनकस्यापि

"अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥"

इत्यादिना शोकं वर्णयामास । स शोकवेगेन आत्महत्यायै प्रयतितुमारब्धवानिति, असूर्यनरकप्रवेशभिया तथा न कृतवानित्यपि "अन्धतामिस्रा हि असुर्या नाम ते लोकाः प्रेत्य तेभ्यः प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते ।" इत्यादिना वर्णयामास । एवमेव अरुंधत्यादितत्तत्पात्राणामपि "सन्तानवाहीन्यपी"त्यादिना शोकं वर्णयामास । एवं निरसङ्गादीनामपि दुःखातिशयवर्णनेन "एतेषामपि मनःक्लेशकारि सीताप्रवासनम् किमुत धीरतरस्यापि संसारिणः श्रीरामचन्द्रस्य" इति रामे सम्पूर्णतया करुणरसो वर्णितो भवति । स करुण आनन्दात्मतया परिणमन् "अमन्दानन्दात्मा परिणमति पूर्णो रसभरः" इति रीत्या सहृदयान् सामाजिकान् आनन्दकन्दलितहृदयारविन्दान् करोति ।

३। प्रत्यनन्तरीभवावः, अन्तर्मर्माणि सीव्यति, भवत्प्रसादोपादान एष महिमा, उद्गीथविदः, सभाजनोपस्थायिनः, इत्यादीनां शास्त्रमर्यादामनुलङ्घयताम् अद्भुतानाञ्च पदानां प्रयोगः कृतोऽनेन ।

४। रसप्रधानेऽप्यस्मिन्नाटके पात्रैरेव

"मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं,
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः"

इत्यादिभिः क्षत्रियब्रह्मचार्यादिवर्णनद्वारा धर्मशास्त्रादीनामपि सरसतया सुमधुर उचितः प्रवेशः कृतोऽनेन । तस्मा"द्भवभूतिर्विशिष्यते" इति कविशिरोमणिसूक्तिः समञ्जसेव प्रतिभाति ।

"न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
तदस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।

मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥"

इति रीत्या तूष्णीमभूत्वा कालिदास एनम् इत्थं प्रशशंसेत्यनेनापि भवभूतिरुत्तरचरिते अनन्यसाधारणप्रतिभां प्रादर्शयदित्यपि ज्ञायते।

---

# शर्वरी-वर्णनम्

[ निवन्धकः—श्रीदुर्गादास-गोस्वामी ]

विकीर्य धीरं तिमिरावगुण्ठनं मुखे पृथिव्याः परिणामपाण्डुरः।
सरोजिनीं हन्त विचुम्ब्य मानिनीं सद्यः प्रतस्थे विधुरो दिवाकरः ॥१॥

लुप्तच्छायः खलु दिनमणिर्धेनवः प्राप्तगोष्ठाः
सुप्तप्रायो घनतरुगणः शोभते श्रेणिबद्धः।
सन्ध्यावाद्यं ध्वनति पवनो मन्थरः पुष्पगन्धै-
र्नौभिः कीर्णा विलसति सरिद् वीचिभङ्गाभिरामा ॥२॥

चुम्बन् कुन्दकलिं रजः प्रचलयन् संचूर्णयञ्छीकरान्
धुन्वन् दीपशिखाः शनैः प्रतिगृहं पल्लीवधूज्ज्वालिताः।
विन्दन् मन्दिरतः सुखं श्रवणयोर्माङ्गल्यवाद्यध्वनिं
रुद्धोच्छ्वास इव प्रसह्य धरणेः सन्ध्यानिलः सर्पति ॥३॥

मन्दं मन्दं वहति पवनश्चन्द्रिकार्द्रा धरित्री
रात्रिर्मञ्जुः सुरभितदिशः कोकिलालापमत्ताः।
स्वल्पालोकः कुसुमितगिरिः शोभतेऽसौ सुदूराद्
धीरोदात्तं नदति मधुरं निम्नगा स्वच्छनीरा ॥४॥

लुण्ठन् रूक्षालकान्तर्नवपथिकवधूं सौध-वातायनस्थां
क्लिश्नन् गङ्गातरङ्गप्रतिहततरणीदीपबिम्बानि चुम्बन् ।
विष्वक् शीतः सलीलं मलयजसुरभिः स्निग्धवाणीरकुञ्जा-
ल्लिम्पन् पीयूषधारास्नुतिभिरिव तनुं वात्ययं नैशवातः ॥५॥
शैलोत्सङ्गविसर्पिनिर्झरसरित्कल्लोलकम्रामल-
श्वेतच्छायमगाधसुप्तशिखिभिः संसक्तगोपानसि ।
ज्योत्स्नोद्भातनिरभ्रनीलनभसि प्रोत्तुङ्गचूडालसद्-
वल्लीगुल्मजटालमौनगिरिशागारं पुरः प्रेक्ष्यते ॥६॥
क्वचिदसह-रथाङ्गद्वन्द्वशोकातुरश्री-
श्चकित इव कदाचिन्मर्मरस्तब्धजीवः ।
लिखित इव विभाति क्षीणशीतांशुभासा
पवनदरविधूतः कीचकारण्यभागः ॥७॥
क्वचिज्ज्योत्स्नोद्भासि क्वचिदपि तमिस्रेण पिहितं
क्वचिद्वातोद्धूतस्फुटकुमुदिनीमञ्जुसलिलम् ।
क्वचित्तन्द्राहीनैर्मुखरितहरिद् विष्किररुतै-
रविस्पष्टं चित्रप्रतिममधुना भाति भुवनम् ॥८॥
क्वचिद्रुद्धश्वासो यतिरिव चिरं नीरवतया
क्वचिल्लोकारावैः क्षुभितकरणः सागर इव ।
क्वचित् स्तेनप्रायश्चकितचकितो मर्मररवैः
क्वचिच्चिन्ताहीनो मनुजनिलयश्चार्भक इव ॥९॥
क्वचिद्गीतालापो रहसि मधुरं प्रेमिकवचः
क्वचिद्रोमायूनां ध्वनिरथ नदीनां कलकलः ।
शुनामुच्चैर्घुष्टं खगकुलरुतं यामिकरवो
विचित्राणामेषामिह हि मधुरं सङ्गतमभूत् ॥१०॥
क्वचित् खद्योतानां विलसितमये गुल्मगहने
घनच्छायासान्द्रे सरसि मलिनैश्चन्द्रकिरणैः ।

दरस्पृष्टे भृङ्गाः स्फुटकुमुदिनीरेणुकपिशाः
कलं गुञ्जन्त्येते नवमधुकणास्वादविकलाः ॥११॥
लक्ष्म्या सङ्गमयन्नयं कुमुदिनीं तां पद्मिनीं मोचयन्
रक्तान् सङ्घटयन् खगान् विघटयन् सन्तापयन् प्रोषितान् ।
भूमिं शीतलयन् समं चपलयंश्चौरान् यतीन् स्थापय-
ञ्छ्वाँकान् नीरवयञ्छुनश्च भषयन् प्राप्तो हि नैशः क्षणः ॥१२॥
तन्द्राहीनविधुप्रभापुलकितोन्माद्यत्कुरङ्गीदृशां
लीलोत्क्षिप्तभुजप्रबद्धयुवकप्रेमाक्षरैराकुला ।
प्रश्च्योतन्मधुबिन्दुचूतमुकुलास्वादप्रहृष्यत्पिक-
स्निग्धोन्मत्तकुहूरवैर्विलसति प्रौढा मधोर्यामिनी ॥१३॥
मुग्धा भाति विभावरी शशिकला स्वप्नाभिभूतं शनै-
र्विश्वं राजतधारया स्नपयति प्रोत्खातमेघं नभः ।
मन्दं वाति समीरणः कुमुदिनीप्रत्यग्रगन्धं हर-
न्नित्थं वृत्तशतैर्मनः किमपि मे वैवश्यमापद्यते ॥१४॥
मौनेयं खलु तापसीव रजनी तन्द्रालुरिन्दोः कला
विश्वं मुग्धमिहास्ति कर्ममुखरं मायाप्रभावादिव ।
दूरादेति वनानिलः परिणतो मन्दारगन्धैर्बला-
न्निक्षिप्येव मुहुर्मुहुः सुखमये चेतांसि चिन्ताह्रदे ॥१४॥

---

# आयुर्वेदे धान्वन्तरीयं तन्त्रम्

[ निबन्धकः—कविराजः श्रीज्योतिषचन्द्र-सरस्वतीः ]

( पूर्वतोऽनुवृत्तम् )

न केवलमेवंविधं ह्रस्वकायं शारीरमायुर्वेद एवोपलभ्यते, धर्मशास्त्रे पुराणे सङ्गीतादिशास्त्रेष्वपि एवमेव वर्तते। सर्वत्रैव समानरूपतया शारीरमादौ विपुलमेवासीत् साम्प्रतं तस्य ध्वंसावशेष उपलभ्यत इति

मतवादो न युक्तियुक्त इवाभाति। प्राच्यसंहितादिषु हित्वा चरकसुश्रुतौ बहवो ग्रन्था लुप्ताः, तेन त्वायुर्वेदस्य प्रधानतया कापि न वस्तुक्षतिः सञ्जाता। ते हि ग्रन्था न खलु चरकसुश्रुतवदुपादेया आसन्निति तेषां संरक्षणाय जनतानां समीहादौर्बल्यात् पुनर्लिपिकरणाभावाच्च ते लोपं गताः। यद्यत्र केचिद् वडिशाच्च्युतो मत्स्यः सुबृहन्नेवेति विवेचयेयुस्तर्हि ते साम्प्रतमंशतः प्राप्तां मुद्रितां भेलसंहितां काश्यपसंहितां वा चरक-सुश्रुताभ्यां तुलनया समालोच्यावबोद्धुं शक्नुवन्ति, तासां लुप्तप्रायाणां संहितानां किन्नाम योग्यत्वमासीदस्ति वेति। अतः परःसहस्रवर्षात् प्रागपि अष्टाङ्गहृदयकार आह—

ऋषिप्रणीते प्रीतिश्चेन् मुक्त्वा चरकसुश्रुतौ।
भेडाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सुभाषितम्॥ इति।

तदात्वेऽपि ताश्च संहिता न जनताभिराद्रियन्तेस्म, एवं जनानामादराभावादेव ता लुप्ताः आदरातिशय्यादेव संग्रहग्रन्था अपि वाग्भट-निदान-सिद्धयोगादयो भूतेष्वपि बहुषु विप्लवेषु बहुभिर्बहुभिर्लिपिकरणाद् अद्यत्वेऽपि वर्तमाना दृश्यन्ते। अतस्तादृशानादृतग्रन्थलोपादायुर्वेदस्य लोपापत्तेः कल्पना न युक्ततां बिभर्ति। विलुप्तेष्वपि बहुषु आयुर्वेदग्रन्थेषु मानवानां सदैवावश्यकानामुपादेयानां ग्रन्थानां रक्षा बभूवेति नास्त्यत्र सन्देहावकाशः। कालवशाद्वा कदाचिन्मानवानां शक्तिस्वाध्यायविद्यादेर्ह्रासात् ते ते उपादेया अपि ग्रन्था मलिना अपि पुनः कालान्तरे विद्वद्भिः प्रतिसंस्कृता औज्ज्वल्यमेवावहन्तिस्मेति कल्पना स्वाभाविकी। यातु, निरर्थकालोचनयाऽलम्। अद्यत्वेऽपि यथोपलभ्यमानं शारीरश्चेच्छत्रव्यवच्छेदादिपुरःसरमध्याप्येत तर्हि तत्सहाया एव विद्यार्थिनोऽनायासेनायुर्वेदस्य शल्यं शालाक्यं वाऽवबोद्धुमध्यापयितुं वा शक्नुयुः।

न साम्प्रतमपि तादृशं विद्यायतनं सृष्टमिति परं नो दौर्भाग्यम्। सत्यमेतद् यद् भारतेऽस्मिन् नानाप्रदेशेष्वातुरालयैः सह ये तावद् विद्यागाराः संस्थापिताः, सर्व एवैते पाश्चात्यशिक्षितानां कर्तृत्वेनानुकूल्येन वा तथैव शिक्षितैः परिचालितानां राष्ट्राणां विश्वविद्यालयानां वा सहायेन परि-

चालितत्वात् तेष्वायुर्वेदस्य सनातनी धारा पूर्णतयोपेक्षिता। तत्र तत्र प्राच्ये शारीरे शल्ये शालाक्ये वा शुकवदध्यापितेऽपि शवव्यवच्छेदादिपुरःसरः प्राच्यप्रथया शारीरपरिचयो न भवति। नवा शल्ये शालाक्ये वा प्राच्यमतेन कर्मदर्शनं कर्माभ्यासो वा सम्पद्यते। किं ब्रूमः, तत्र तत्र शल्यशालाक्योक्तानां व्याधीनां रोगनिर्णय उपक्रमो वा न प्राच्यमतेन भवति, डाक्तारैरेव प्रतीच्यविधानेन तेषां व्याधिर्निरुच्यते उपक्रम्यते च। तत्र प्राच्यवैद्यानां प्रवेशाधिकारः प्रायो न वर्त्तत एव। समासत एषां संस्कारकामिनामेतदेव प्रधानतया काम्यं यद् आयुर्वेदाच्छल्यशालाक्यादीन्यङ्गानि संछिद्य तत्र पाश्चात्त्यानां कृत्रिमाङ्गयोजनमेव संस्कार इति। परतन्त्रादविरुद्धं योग्यं किञ्चिद् ग्रहीतुं नास्ति कापि विप्रतिपत्तिः, परं तच्चेदनुकूलं स्यात्, तदा तन्निगीर्य स्वभावधारया सम्मिश्रय्य चेद् गृह्येत, तर्हि तत् संस्कारपदवाच्यं भवितुमर्हति। दृढबलेनोक्तम्—

विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्।
संस्कर्ता कुरुते तन्त्रं संस्कृतञ्च पुनर्नवम्॥ इति।

न खल्वङ्गे दुष्टे तच्छित्त्वा तत्र कृत्रिमाङ्गयोजनं संस्कारपदवाच्यं भवितुमर्हति। एवं पाश्चात्त्यशारीरे आयुर्वेदस्यात्मदानं तस्योपघातायैव भविष्यति। पाश्चात्त्यं शारीरतन्त्रमविकृतं देवगिराऽनूद्य तस्य चायुर्वेदरूपेण प्रचारस्तस्याहितायैव विरुद्धसिद्धान्तसमावेशाद् भविष्यति न हिताय। आङ्गलभाषाज्ञानविरहितानान्तु वैद्यानां पाश्चात्त्यशारीरस्य सुखेन ज्ञानायायमनुवादग्रन्थो भविष्यतीत्यत्र नास्ति संशयावकाशः।

शल्यतन्त्रोक्तानां व्याधीनामुपक्रमस्तु त्रेधा भिद्यते तद्यथा—पूर्वकर्म, प्रधानकर्म, पश्चात्कर्म चेति। तत्र षष्टिमुपक्रमान् धान्वन्तरीया भाषन्ते। तत्रापतर्पणादयो विरेचनान्ता एकादश उपक्रमाः पूर्वकर्मेति कथ्यते। ते पुनः प्रायो व्रणशोथविलयनाय वेदनालाघवाय च प्रयुज्यन्ते। भेदनाद्याः सीवनान्ता अष्टावुपक्रमाः प्रधानकर्मेति। ते पुनर्यन्त्रशस्त्रादिप्रणिधानेन सम्पद्यन्ते। शेषाः पुनरेकचत्त्वारिंशदुपक्रमा पश्चात्कर्मेति कथ्यते। ते खलु व्रणभाव-

मापन्नस्य शोधनरोपणादौ प्रयुज्यन्ते। पाश्चात्त्यतन्त्रे तु पूर्वपश्चात्कर्मणी लघुतरे एव दृश्येते। अतस्तेषां प्रधानकर्मकुशलत्वेऽपि न सर्वत्र सुफलं दर्शयितुं शक्नुवन्ति डाक्ताराः। आयुर्वेदे तु तयोः प्रणाली तथैव व्यासत उपदिष्टा उपादेया चेति, तत्सहाया वयं पाश्चात्त्यानामत्युन्नतशल्यतन्त्रेणाप्यसाध्यानां व्याधीनां निरामये समर्था भवामः। ये चान्तर्विद्रधयः (हृन्नाभिवस्तिगताः) पक्का निष्प्रतीक्रिया भवन्ति, तेषामप्युपशमोऽनेनैव सुव्यवस्थितेन पूर्वकर्मणा निःसंशयं सम्पादितोऽस्माभिः। एतेनैव च शस्त्रपातनसाध्येष्वपि व्याधिषु विना शस्त्रोपचारं नैरुज्यं सम्भवति। पश्चात्कर्मण उपादेयतया च तत्सहाया वयं पुनः पुनः शस्त्रप्रयोगेणापि सुचिरकालेन ये च नाडीव्रणा न सर्वदा सिद्धिमावहन्ति, तानप्यहोरात्रेणैव पूरयितुं समर्था भवामः। अतस्तयोरालोचनाऽत्र निरर्थिकैव।

आयुर्वेदो हि प्रधानकर्मणो विवृतिं स्वल्पाक्षरेणैवोपदिशति। कुत्र कुत्र वा किमपि प्रणालीवैशिष्ट्यं नोपदिष्टम्। पाश्चात्त्यतन्त्रे तु प्रधानकर्मणो विवृतिर्बाहुल्येन दृश्यते। न सेयमायुर्वेदस्य न्यूनता। शस्त्रपातनं हि प्रधानतः कर्मदर्शनं कर्माभ्यासञ्चापेक्षते। सकृत कर्मदर्शनाद् विद्यार्थिनां यादृक् ज्ञानं भवति न तथा शतपत्रात्मकेन ग्रन्थसम्भारेण। पाश्चात्त्यानां स्याष्टाइटिससंज्ञके (Mastetis) व्याधौ यं पुनरायुर्वेदज्ञाः स्तनविद्रधिमभिदधति, तत्तन्त्रे द्वित्राणि पत्राणि प्रधानकर्मवर्णनायामेव वर्तन्ते। आयुर्वेदस्तु तदर्द्धश्लोकेनैवाह। ये तु कर्मेदं नापश्यन् तेषामतिसंक्षिप्ता आयुर्वेदवाणी यथा सहायो भवति तथैवातिविस्तृतं पाश्चात्त्यनिर्वचनम्। परं सकृदेव कर्मदर्शने आयुर्वेदवर्णनायाः स्वल्पतया विद्यार्थिनां कण्ठस्थकरणे सुगमतैवायाति। अतः कर्मदर्शन-कर्माभ्यासयोः सौकर्ये जाते प्राच्यमतेनापि शल्यं शालाक्यं वाऽध्यापयितुं सर्वथा सुशकम् एव। एवं परिस्थितौ त्वरितमेव आयुर्वेदविद्यालयेषु प्राच्यतन्त्रमनुसृत्य कर्मदर्शनाय कर्माभ्यासाय च परिचालकवर्गैरवश्यं यतितव्यम्। अद्यत्वे तु तत्र तत्र पाश्चात्त्यतन्त्रमेव शल्यादिकं डाक्तारैरध्याप्यते; एवं तेषां विधिमनुसृत्य कर्माभ्यासयन्ति,

अतस्तदायुर्वेदशिक्षार्थिनः किमप्युपकाराय न भवति। न ते प्राच्यतन्त्रानुसारतः शल्यादिगतव्याधेरङ्गादेर्वा संज्ञामपि ज्ञातुं प्रभवन्ति। एवञ्च प्राच्यतन्त्रस्यार्थावबोधरहितानां छात्राणां तदध्यापकानामपि तन्त्रेऽस्मिन महती अश्रद्धा प्रजायते। अत एव क्रमशः एत एव विद्यालयाः दिनादिनं स्वकर्मत आयुर्वेदशल्यादिषु जनतानामश्रद्धामुत्पादयन्ति, दूरमास्तां तेष्वचर्चितानां शल्यादीनां चर्चा।

तत्र तत्र स्नातकेषु विद्यार्थिषु पाश्चात्त्यशल्यादिकमध्यापितेष्वपि मुष्टिमेया अपि शल्यतान्त्रिका अभवन्न वेति संशयः। अतस्तथाविधैरशल्यतान्त्रिकैरकायचिकित्सकैर्वा जगति किं प्रयोजनं संसाधितं भविष्यति इति विद्यालयाध्यक्षैः साम्प्रतं चिन्तयितुं युज्यते। पुनरपि तानध्यक्षान प्रार्थये न खलु ते प्राच्यशल्याद्यनुशीलने विरोधिनो भवन्तु; सहायका एव भवन्त्विति। नास्त्यत्र विमतिर्यद् विद्यालयपरिचालका डाक्तारानेवाध्यक्षान कुर्वन्त्विति। परं तानायुर्वेदज्ञान रचयन्तु, अन्यथा एम, वि, वि, एस इत्युपाधिमात्रमोहेन आयुर्वेदाज्ञेन डाक्तारेण विद्यालयं परिचालयन्तस्ते आयुर्वेदस्याहितायैव भवेयुः। वस्तुतस्तु ये खलु पाश्चात्त्यतन्त्रनिष्णातास्तेषामायुर्वेदे प्रवेशः सुगम एव स्याच्चेत्तेऽखण्डया श्रद्धया महता च श्रमेण तमायत्तीकर्तुं यतेरन्। तेषाञ्चेदायुर्वेदमात्रं प्रायः प्रमादपूर्णमित्यश्रद्धा स्याद्, आलोचनायोग्यकालव्ययेऽपि कुण्ठा भवेत्तर्हि तथा एम् वि, उपाधिधारिणा वैद्यमण्डल्यामाविर्भावेणायुर्वेदस्यानिष्टमेव स्यान्नेष्टम्। प्रकृतिगतयोग्यतामृते न कोऽपि शल्यतान्त्रिको भवितुमर्हति। तस्मात् डाक्तारेषु सर्व एव शल्यतन्त्रपरीक्षोत्तीर्णा अपि नानेके शल्यतान्त्रिका भवितुमर्हन्ति। एवं परिस्थितौ साम्प्रतं येषां डाक्ताराणां शल्यतन्त्रे योग्यता वर्तते तेषु ये केचिदायुर्वेदे आस्थावन्तस्ते चेत् प्राच्यशल्यादितन्त्रं श्रमेणाधीयुः; यदि वा संस्कृतविद्यार्थिषु ये केचिच्छल्यशालाक्यतन्त्रालोचनयोग्यास्तांश्च दष्टाङ्गमायुर्वेदमध्याप्य तदनुकूलेन शवव्यवच्छेदादिना शारीरपरिचये कर्मदर्शने कर्माभ्यासे च निष्णातान कर्तुं शक्नुमः; तर्हि त एव यथार्थतः शल्यतान्त्रिकास्तदध्यापकाश्च भवितु-

मर्हन्ति। आ विंशवर्षात् प्रचरितेष्वेतेषु विद्यागारेषु जनतानां प्रभूतार्थव्ययेन परिचालितेष्वपि नाद्यापि एकोऽपि तादृग् गुणवान् शल्यतान्त्रिक आविर्भूत इति परं नो दुःखाकरम्। साम्प्रतं भारते एक एव महामहोपाध्याय-पदभाक् श्रीमद्-गणनाथ-सेन-महोदयः पाश्चात्त्यतन्त्रनिष्णातोऽपि प्राच्यतन्त्र-माद्योपान्तमालोचितवान्। अस्माकन्तु दौर्भाग्यतः पाश्चात्त्यशल्यतन्त्र-परीक्षोत्तीर्णोऽप्ययं महाभागो न शल्यतान्त्रिकोऽभूत्। अन्यथायुर्वेदस्य पूर्वपश्चाज्ज्ञानेन सहैव पाश्चात्त्यानां जितहस्तता चेत्तस्यास्थास्यत, तर्हि साम्प्रतमायुर्वेदस्य महते हितायाभविष्यत्। जगति च तस्य जयपताका उड्डीयमानाऽभविष्यत्।

आयुर्वेद-फेकाल्टि इत्याख्या समितिरपि वङ्गे पाठपत्रीं निर्दिश्य परीक्षाभियोग्यं वैद्यं स्रष्टुं कांक्षति, तत्रापि प्राच्यशल्यशालाक्ययोः शिक्षायाः प्रणाली विशेषतो नैराश्यप्रदा एवाभवत्। यतः समितेरस्याः प्रवर्तकाः पारिषदाश्च न तादृक् प्राच्यशल्यशालाक्याभिज्ञा इति तयोर्विचारेऽनभिज्ञत्वेन तेषां निर्देशो नानुकूलस्तत्र भविष्यतीति मन्ये। प्राच्यचतुष्पाठीप्रथया शिक्षात एव शल्यादीनामवनतिरिति विचार्य ते तदुच्छित्तिं कर्तुं बद्धपरिकरा एव कृतकृत्या आसन्। नियताध्ययनानां ग्रन्थानां पाठपत्री आयुर्वेदानु-कूला न भवति। शल्ये तु प्रायः पाश्चात्त्यप्रथया निरूपितानां व्याधीनां वैद्यकसंज्ञाभास एव पाठपत्र्यामुल्लिखितः। तेन पूर्णतया पाश्चात्त्यप्रथयैवा-ध्ययनं भविष्यतीति निरूप्यते। शालाक्ये तु पाठपत्री शोच्यतरैव। सुश्रुते ये षट्सप्ततिः वाग्भटे च चतुर्नवतिर्नेत्ररोगा उल्लिखिताः, तेषु कतिचिद् ये पाश्चात्त्यनिर्दिष्टा वैद्यकसंज्ञासादृश्यमावहन्ति, तेषामेव पाठ्यत्वेन निर्देशः पूर्णतयायुर्वेदस्य पाश्चात्त्यपारतन्त्र्यं सूचयति। अद्यत्वे विद्यागारेषु यथैव सेलुलाइटिस (Cellulitis) सेप्टिसिमिया (Septicae-mia) अप्थालमिया (opthalmia) प्रभृतीनां व्याधीनां पाश्चात्त्यभावेन निर्देशो भवति इतः परस्तादपि तस्यैवानुबन्धः प्रधानतः स्थास्यतीति पाठपत्र्यां सूच्यते। यातु, अलं परचर्यालोचनेन। भाविनि काल एव

फलदर्शनेनास्य युक्तायुक्तत्वे विचारयितुं शक्ष्यन्ति पण्डिताः। यद्यपि पाठपद्यां चरक-सुश्रुत-वाग्भटादीनां प्रचरतामामायुर्वेदग्रन्थानां प्रायः पूर्णतया पाठ्यत्वेनोल्लेखो दृश्यते तथापि तत्र प्राच्यं धान्वन्तरीयमध्यापितं स्यादित्यत्रास्ति महान् संशयावकाशः।

विश्वविद्यालयैश्चेदायुर्वेदशिक्षा नियन्त्रिता भवेत्तदा तस्योन्नतेरवसरः स्यादिति मन्ये। तत्तु नियन्त्रणञ्चेत् पाश्चात्त्यशिक्षितमात्रैर्भवेत तर्हि शिवमृत्तिकया शाखामृगनिर्माणं भवेदिति च शङ्का सदैव मनसि न उदेति। ते हि विश्वपण्डिता आयुर्वेदहितेप्सवः तं नियन्तुं डाक्ताराणामेव मतं विशेषतोऽपेक्षेरन्। अतः प्रतियोगितोऽनुकूलं किञ्चित् प्राप्तुं कुतः सम्भावना न जाने। एवमेव गते वर्षेऽस्मिन् कलिकाताविश्वविद्यालये संस्कृतविभागे एम् ए इत्युपाधिलिप्सूनां विद्यार्थिनामवश्यपाठ्यत्वेनायुर्वेदस्य निर्देशः प्रस्तावित आसीत्। संस्कृतानुरक्तानामनेकैः विशेषतो डाक्तारइत्युपाधिक-संस्कृतमहाविद्यालयाध्यक्ष-सुरेन्द्रनाथ-प्रमुखैरनुमोदितोऽप्ययं प्रस्तावः पाश्चात्त्य-चिकित्सकानां मतमनुसरद्भिः सभ्यैर्विरोधितया परिहृतोऽभवत्। न तत्र केषाञ्चिदायुर्वेदज्ञानां मतमपेक्षितमासीत्। दुर्लभजीविकेऽस्मिन् काले अनेके एम्,ए इत्युपाधिका वैद्यत्वं स्वीकुर्वन्तोऽपि न सर्वथायुर्वेदग्रन्था-नालोचयितुं प्रभवन्ति। विश्वविद्यालय एव चैते वर्षद्वयं चेत्तं तानधीयेरंस्तर्हि योग्यवैद्यत्वं कथञ्चिल्लभेरन्। इत एव विभागेऽस्मिन् विद्यार्थिसंख्यापि समधिकाऽभविष्यत। तत्र चेत् पाश्चात्त्यविज्ञानमिति 'फिजिओलजि' इत्यादीनां पाठे न कापि विमतिः स्यात् तर्हि आयुर्वेदपाठे अस्मद्देशीयत्वेन प्रबलां बाधां सृजन्तोऽस्मद्देशीया एव पण्डिताः कथं न लज्जन्ते, न जानीमहे।

वाराणसीहिन्दुविश्वविद्यालये तु आयुर्वेदविभागो वर्तते। तत्राप्यायुर्वेद-धान्वन्तरीयं न तथाद्रियते यथा पाश्चात्त्यम्। आतुरालयेऽप्यस्मिन् पाश्चात्त्य-शल्यतान्त्रिका एव प्रायः सर्वानेव व्याधितांश्चिकित्सन्ति, पञ्चषास्तु व्याधिताः परीक्षार्थं प्राच्योक्तपश्चात्कर्मभिरुपक्रम्यमाणा अपि न प्राच्य-शल्यतान्त्रिकैरुपचर्यन्ते। सत्यपि प्राच्यशल्यज्ञे न तत्र तस्यावसरो दीयते।

विश्वविद्यालयकर्तृणां पाश्चात्याभिमुखी मनोवृत्तिरस्यैवायुर्वेदविद्यालयस्याध्यक्षत्वे डाक्तारानेवान्वेषयति। तैस्तु वरमायुर्वेदज्ञानविहीना असंस्कृतज्ञा अपि डाक्तारा योग्यत्वेन निर्वाच्यन्ते न तु विशिष्टायुर्वेदज्ञाः। एवमायुर्वेदविद्यालये चेद् विश्वविद्यालयाधीनेऽपि पूर्णतया अनायुर्वेदज्ञैर्विद्यार्थिनोऽध्यापिताः स्युस्तर्हि तस्योन्नतेः का नामाशा वर्तते ? न खलु त एव कर्तृपक्षा अत्र निर्वचनीया भवन्ति, वयमपि आयुर्वेदशल्यादिष्वज्ञास्तदालोचयितुमप्ययोग्यास्तान् बोधयामः आयुर्वेदे शल्यादिकं पाश्चात्यशल्यादितुलनयाऽयोग्यमेवेति।

आयुर्वेदे शल्यस्य शालाक्यस्य च पूर्णता प्राधान्यञ्च नात्र प्रतिपाद्यते। 'शल्यतन्त्रशिक्षाप्रणाली' 'आयुर्वेदे शालाक्यतन्त्रम्' नाम मन्निबन्धद्वयं द्रष्टव्यम्। निबन्धेऽत्र सर्वेषां पाश्चात्यशिक्षितानां विगीतिर्गीताऽस्माभिरिति नावगन्तव्यम्। तथैव शिक्षितस्य यस्य मनोवृत्तिः साकल्येन पाश्चात्याभिमुख्यभवत, तस्यैव विगानमत्रोद्दिश्यते न तु सर्वेषाम्।

माननीयाः सभापतिमहोदयाः, प्रेयांसः सुहृदः, समवेता महिलाश्च, नूनमनेन सुदीर्घेण कटुतरेणाभिभाषणेनात्यर्थमुद्वेजिता भवन्तः क्षन्तुमर्हन्ति। भवतां श्लैष्मिकजडतायां कटुरेव पथ्यम्, दिनादिनं मधुरोपसेवया जाड्यं नो वर्धत एव। प्राच्यगौरवस्य माधुर्यं तथाऽस्मान् मोहयति तथा जडतां नोऽभिवर्धयति, येनाद्यत्वे कट्वी वाण्येव हिताय भवेत्। शल्यतान्त्रिकास्तु व्याधिमोक्षाय निर्ममा भवन्ति। सतस्वेतावतसु शिक्षायतनेषु चेदद्यापि नैकमपि प्राच्यं धान्वन्तरीयं स्रष्टुं प्रभवेम, तर्ह्यस्माकं जडता कीदृगधिका इत्यनुमातुं सर्व एव प्रभवन्ति। आशास्महे श्रीश्री⁄जगदम्बाकृपयाऽनेन कटुप्रयोगेण चास्माकं जडता विद्युत्प्रणाशं प्रणङ्क्ष्यतीत्यलम्।

---

# সংস্কৃত-সাহিত্য-পরিষৎ

## গৃহ-তহবিলের জন্য

## আবেদন

সবিনয় সমাবেদন,

সংস্কৃত-সাহিত্য-পরিষৎ একটি বিশিষ্ট জাতীয় সাহিত্যিক প্রতিষ্ঠান। আজ দুই যুগ ধরিয়া এই প্রতিষ্ঠানটি নানা বাধা বিঘ্ন উপেক্ষা করিয়া একনিষ্ঠভাবে সুরভারতীর অর্চ্চনায় আত্মনিয়োগ করিয়া রহিয়াছে। সম্প্রতি কলিকাতা কর্পোরেশনের কর্ত্তৃপক্ষ রাজা দীনেন্দ্র ষ্ট্রীটস্থ অষ্টাঙ্গ আয়ুর্ব্বেদ বিদ্যালয়ের দক্ষিণদিকে প্রায় পাঁচ কাঠা জমি পরিষৎকে নামমাত্র খাজনায় প্রদান করিয়াছেন। দানের একটি সর্ত্ত এই যে, আগামী দুই বৎসরের মধ্যে উক্ত স্থানে পরিষদের গৃহ নির্ম্মাণ করিতে হইবে। পরিষদের গৃহনির্ম্মাণার্থ ন্যূনাধিক পঞ্চাশ সহস্র মুদ্রার প্রয়োজন। বিগত ১০ই সেপ্টেম্বর পরিষদের ত্রয়োবিংশ বার্ষিকাধিবেশনের সভাপতিরূপে সুপ্রসিদ্ধ ব্যবহারাজীব স্যর শ্রীযুক্ত নৃপেন্দ্রনাথ সরকার মহোদয় স্বয়ং সহস্র মুদ্রা প্রদানের প্রতিশ্রুতি দিয়া বঙ্গের তথা ভারতের প্রত্যেক হিন্দু অধিবাসীর নিকট আবেগপূর্ণ ভাষায় এই মর্ম্মে আবেদন জানাইয়াছেন—"আমরা এতগুলি হিন্দু বর্ত্তমান থাকিতে যদি পরিষদ্ভবন অচিরে নির্ম্মিত না হয়, তাহা হইলে উহা নিতান্ত লজ্জা ও দুঃখের কথা।"

আপনার বদান্যতা ও সহৃদয়তার কথা লোকপ্রসিদ্ধ। তাই পরিষদের পক্ষ হইতে আপনাকে সনির্ব্বন্ধ অনুরোধ জানাইতেছি—সংস্কৃত-সাহিত্য-পরিষদের ভবন-নির্ম্মাণার্থ সানুগ্রহ যথাশক্তি অর্থসাহায্য করিয়া বাগ্দেবীর উপাসনায় সহায়তা করুন। নিবেদক ইতি—

(মহামহোপাধ্যায়) শ্রীপ্রমথনাথ তর্কভূষণ, (মহামহোপাধ্যায়) শ্রীদুর্গাচরণ সাংখ্য-বেদান্ততীর্থ, (মহামহোপাধ্যায়) শ্রীবিধুশেখর শাস্ত্রী, (মহামহোপাধ্যায়) শ্রীফণিভূষণ তর্কবাগীশ, (মহামহোপাধ্যায়) শ্রীঅনন্তকৃষ্ণ শাস্ত্রী, শ্রীসুভাষচন্দ্র বসু, শ্রীশরচ্চন্দ্র বসু, (স্যর) শ্রীমন্মথনাথ মুখোপাধ্যায়, (স্যর) শ্রীবদ্রিদাস গোয়েনকা, (ডক্টর) শ্রীশ্যামাপ্রসাদ মুখোপাধ্যায়, (মহারাজ) শ্রীযোগীন্দ্রনাথ রায়, (মহারাজ) শ্রীভূপেন্দ্রচন্দ্র সিংহ, (রাজা) শ্রীকমলারঞ্জন রায়, (কুমার) শ্রীবিমলচন্দ্র সিংহ, (কুমার) শ্রীজগদীশচন্দ্র সিংহ, (কুমার) শ্রীবিষ্ণুপ্রসাদ রায়, শ্রীবৈজনাথ বাজোরিয়া, শ্রীদামোদর দাস খান্না, শ্রীহরিহর শেঠ, (ডক্টর) শ্রীদ্বারকানাথ মিত্র, শ্রীরমাপ্রসাদ মুখোপাধ্যায়, (Sir) Sarvapalli Radhakrishnan, শ্রীকিরণচন্দ্র দে, (বেদান্তরত্ন) শ্রীহীরেন্দ্রনাথ দত্ত, W. C. Wordsworth (The Statesman), (ডক্টর) শ্রীহরেন্দ্রকুমার মুখোপাধ্যায়, (ডক্টর) শ্রীআদিত্যনাথ মুখোপাধ্যায়, শ্রীগিরিজাকিশোর ঘোষ, শ্রীহেমেন্দ্রপ্রসাদ ঘোষ (বসুমতী), শ্রীতুষারকান্তি ঘোষ (অমৃতবাজার), শ্রীভূপেন্দ্রকৃষ্ণ ঘোষ, শ্রীযতীন্দ্রনাথ বসু, (ডক্টর) শ্রীসুনীতিকুমার চট্টোপাধ্যায়

সম্পাদক—শ্রীঅমরেশ্বর ঠাকুর ও শ্রীগণপতি সরকার।

সংস্কৃত-সাহিত্য-পরিষৎ, ১৭, আর. জি. কর রোড, কলিকাতা।

---

দ্রষ্টব্য—যদি কেহ মনি অর্ডারে টাকা পাঠাইতে ইচ্ছা করেন, তাহা হইলে গৃহ-তহবিলের সম্পাদক 'শ্রীযুক্ত অশোকনাথ শাস্ত্রী, এম. এ., পি. আর. এস.—৪১, বাগবাজার ষ্ট্রীট, কলিকাতা,'—এই ঠিকানায় পাঠাইলেই উহা ধন্যবাদের সহিত গৃহীত হইবে এবং তজ্জন্য পৃথক্ রসিদ পাঠাইয়া দেওয়া হইবে।

# संस्कृत-साहित्य-परिषत्

## आवेदन

सविनय निवेदन—

कलकत्ते का संस्कृत-साहित्य-परिषत् एक विशिष्ट जातीय साहित्य प्रतिष्ठान है। आज २४ वर्ष से यह प्रतिष्ठान हर प्रकार के विघ्न बाधाओं को झेलते हुए एकाग्रता के साथ देवभाषा संस्कृत की सेवा करता आरहा है। हाल ही में कलकत्ता कारपोरेशन ने राजा दीनेन्द्र स्ट्रीट पर ५ कट्ठा जमीन ९९ वर्ष की लीज में नाम मात्र लगान पर दे दिया है। लेकिन लीज की यह शर्त है कि २ वर्ष के अन्दर इस जमीन पर मकान बनवा लेना ही पड़ेगा। इस मकान के बनवाने में लगभग ५० हजार रुपये की आवश्यकता है। संस्कृत-साहित्य-परिषत् के गत वार्षिक अधिवेशन में सभापति श्रीमान् **स्यर नृपेन्द्रनाथ सरकार** महोदय ने परिषत्-भवन-निर्माण के लिये १०००) रुपये चन्दा देने का वचन दिया है, और साथ ही हिन्दुमात्र से यह निवेदन किया है कि **"अगर हम हिन्दुओं के रहते हुए परिषत् का भवन न बन सका तो हम हिन्दुओं के लिये अत्यन्त लज्जाकी बात होगी"।**

अतः भारतके समस्त संस्कृत साहित्य प्रेमियों से सादर निवेदन है कि, **परिषत् के गृह-निर्माण के लिये यथाशक्ति सहायता प्रदान कर भगवती वीणापाणि वाग्देवी की आशीर्वाद प्राप्तकर यश के भागी बनें।** इति

### निवेदक

(महामहोपाध्याय) श्रीप्रमथनाथ तर्कभूषण
,, श्रीदुर्गाचरण सांख्य-वेदान्ततीर्थ
,, श्रीअनन्तकृष्ण शास्त्री
श्रीसुभाषचन्द्र वसु
श्रीशरच्चन्द्र वसु
(स्यर) श्रीमन्मथनाथ मुखोपाध्याय
श्रीयतीन्द्रनाथ वसु
श्रीश्यामाप्रसाद मुखोपाध्याय

(स्यर) श्रीबद्रिदास गोयेनका
श्रीबैजनाथ बाजोरिया
श्रीदामोदर दास खान्ना
श्रीहीरेन्द्रनाथ दत्त
(राजा) श्रीकमलारञ्जन राय
श्रीहरिहर शेठ
(Sir) S. Radhakrishnan.
W. C. Wordsworth.

**संस्कृत-साहित्य-परिषत्**
१७, आर. जि. कर रोड, श्यामबाजार,
कलकत्ता।

श्रीअमरेश्वर ठाकुर
श्रीगणपति सरकार
(मन्त्री, संस्कृत-साहित्य परिषत्)

---

सहायता भेजने का पत्ता—श्रीयुक्त अशोकनाथ शास्त्री, एम. ए., पि. आर. एस. ... श्यामबाजार स्ट्रीट, कलकत्ता।

पुस्तकालय

Reg. No. C 1073

Vol. XXII, No. 8] [ December, 1939

१८६१ शकीय अग्रहायणे २२श-वर्षस्य ८म-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,

Shyambazar, Calcutta.

## मासिक-सभा

संस्कृत-साहित्य-परिषद आगामिनी मासिक-सभा १३४६ वङ्गाब्दीय-सौरपौषस्य ( २३श ) त्रयोविंश-दिवसे सोमवासरे सायं सप्तवादनतो भविष्यतीति तत्र संस्कृतभाषाध्यायिना-मध्यापकानाञ्च समुपस्थितिः प्रार्थनीया ।

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—২৩শে পৌষ, ১৩৪৬, সোমবার, সন্ধ্যা ৭টার সময়ে হইবে। সংস্কৃত-ভাষাধ্যায়ী ছাত্র এবং অধ্যাপকগণের উপস্থিতি প্রার্থনীয় ।

---

# Opinions on the 'Kalitantram'

( Sanskrit Sahitya Parishad Series No. 2 )

**Amrita Bazar Patrika** (31. 10. 22)—We hail the appearance of a new book-let called Kali-Tantram published by the Sanskrit Sahitya Parishat, Shyambazar, Calcutta. It is annotated and translated by Pandit Satish Chandra Siddhantabhushan. We dare say that the work will prove to be a great help to those who care to make an attempt towards the realisation of the monistic philosophy contained in the *Tantras*. There is no doubt that it will at least serve the public in giving some inkling about the mode of worship enjoined by the Tantras and so help them from being duped by professional impostors. We hope that the presentment of such works will throw much light into the hitherto neglected Tantra literature. The get up of the book is good. It is priced at *8 as. for members* of the Sanskrit Sahitya Parishad and *10 as.* for the public.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| December, 1939 | १८६१-शकीये अग्रहायणे<br>२२श-वर्षस्य ८म-संख्या | Vol. XXII<br>No. 8. |
|---|---|---|


प्रकृतिविलासकाव्ये

## काननकामनीयकम्

[ निबन्धकः—सा. भू. कृष्णमूर्तिशास्त्री ]

कल्याणमाकलयतात्कुलशैलकन्या
धम्मिल्लफुल्लतरमल्लिमिलन्मिलिन्दा ।
प्रत्यग्रवारिधरसोदरविग्रहश्री-
रश्रान्तनर्तनपरा विपिनान्तदुर्गा ॥१॥

अस्ति ह्यनन्तपुरमप्रतिमैः स्वसंपत्-
स्तोमैर्विलुम्पितनिलिम्पपुरावलेपम् ।
नीलाद्रिपङ्क्तिरिव भोगिनि यस्य मूर्तिः
स श्रीपतिर्यदधितिष्ठति पद्मनाभः ॥२॥

दृग्भ्यां निपीय भगवन्तमनन्ततल्पं
निध्याय तं स्तवमयैः कुसुमैः समर्च्य ।
विप्राग्रणीः स मतिमान्नगरे विरज्यत्
दृष्ट्वाऽभिनन्दितुमियेषतमां वनानि ॥३॥

आरण्यका न हि कदाप्ययथार्थमाहुः
प्राणात्ययेऽपि न जहत्युपकारचिन्ताम् ।
पौरास्तु जिह्ममतयः प्रचरन्त्यमार्गे
पुण्यात्मनां हि भवनं वनमित्यमंस्त ॥४॥

उत्थाय पङ्कजकुलस्य विकासतः प्राङ्
निर्वर्त्य कृत्यमखिलं द्रुतमात्मनीनम् ।
धीरः पुरात्स निरगादलकाभिरामात्
सौभाग्यमीक्षितुमना विपिनान्तलक्ष्म्याः ॥५॥

उच्चावचाचलसमाकुलदिङ्मुखानि
छायाद्रुमैरविरलैर्निचुलीकृतानि ।
स श्यामशाद्वलसरोवरमेदुराणि
कीर्णान्यवाप हरिणैर्विपिनस्थलानि ॥६॥

नीडोदरेषु विहगा व्यरुवन्मनोज्ञं
म्लानप्रभामबिभरुस्सुरतप्रदीपाः ।
संप्रावदन्धुतमुखाः कृकवाकुसङ्घा
रोचींष्यतुष्णकिरणं दिवि नाप्यपुष्णन् ॥७॥

उन्मीलनोन्मुखसरोजविराजितायाम्
उन्निद्रहंसमिथुनैरुपशोभितायाम् ।
जप्त्वाऽघमर्षणमृषिप्रवरा स्फरिण्यां
सस्तुर्दिवस्पतिदिशं गतवत्यनूरौ ॥८॥

लीढ्वाऽङ्गकानि निजजिह्विकयाऽतिमृद्व्या
स्तन्यं स्नुतं हरिणयोषिति पाययन्त्याम् ।
अर्धप्रबुद्धहरिणार्भकवक्त्रतस्तत्
क्षिप्त्यामपप्तदतिफेनिलमीषदुष्णम् ॥९॥

अत्यन्तसंस्तुतमिलिन्दपुरन्ध्रिवाचं
श्रुत्वापि हन्त नलिनीमनपेतदुःखाम् ।

आश्वासयन्निव निवेद्य सहस्ररश्मे-
रभ्यागमं स्वयमदीपितरामनूरुः ॥१०॥
पुत्रा इवावनिभृतां रतिमन्दिरेभ्यः
पुष्पन्धयाः कतिपये कुमुदोदरेभ्यः ।
प्रस्थातुमप्युदसहन्त न शीतकत्वा-
ल्लक्ष्म्यां सरोरुहविहाररसोत्सुकायाम् ॥११॥
पीयूषकल्पमकरन्दमिलद्रजांसि
नीहारशीकरकरम्बितकेसराणि ।
प्रत्यूषशीतपवनेरितपादपेभ्यः
पुष्पाणि वृन्तगलितान्यपतंस्तटिन्याम् ॥१२॥
हित्वा सुषुप्तिमतिमात्ररतिश्रमोत्थां
पक्षान्स्वचञ्चुभिरदन्तुरमालिखन्त्यः ।
नीडोदरेषु शयितान्कमितॄनपत्यैः
प्राबोधयन्नुषसि हुङ्कृतिभिः कपोत्यः ॥१३॥
बद्ध्वाऽञ्जलिं कमलकोषमिषेण मूकै-
र्वाचंयमत्वमलिभिः स्वयमावहन्त्यः ।
अंभःकणाश्रुवदना दयितं तपस्वि-
न्यालोकितुं समुदकण्ठत पद्मिनी द्राक् ॥१४॥
त्वत्कान्तिलेशमुपजीव्य निशि भ्रमद्भि-
श्चन्द्रादिभिर्दिगुपभुक्तचरा मघोनः ।
पूतात्मनः किमुचिता विहृतिस्तयेति
प्रोद्यन्तमर्यमणमम्बुजिनी जहास ॥१५॥
संरक्ष्य नक्तमधिकैरवगर्भमिन्दुः
संवेशितां श्रियमनिद्रसहस्रपत्रे ।
प्रत्यर्पयन्नसवितृमण्डलमध्यवर्ति-
पुंसे क्रमेण कृतकृत्यतया तिरोऽधात् ॥१६॥

गीतिं मुदा मधुकरीषु वितन्वतीषु
हंसीषु पत्रपुटताडनतोऽप्सु तालान् ।
तीरद्रुमेषु विकिरत्सु सुमान्यभीक्ष्णं
लक्ष्मीर्ननर्त सरसीरुहरङ्गधाम्नि ॥१७॥

श्यामायितेऽपरिमितैस्तरुभिर्वनान्ते
निःशेषमेष विनिहन्तुमिनप्रकाशः ।
नैवाऽशकत्सततसन्तमसाधिकारं
मूर्खस्य चेतसि विमोहमिवोपदेशः ॥१८॥

अभ्रङ्कषाद्रिजमहौषधिसारमिश्राः
स्रोतस्विनीरमृतसोदरवारिपूराः ।
आवर्तचक्रपरिवर्तितपाटलौघा
दृष्ट्वा जहर्ष नितरां धरणीसुरेन्द्रः ॥१९॥

जम्बूफलानि गलितानि पचेलिमत्वाद्
आतन्वताऽच्छसलिलान्यरुणच्छवीनि ।
शैलेन्द्रकन्दरपथात्सरयं वहन्त्या
धुन्या निमज्जदिभराजविराजितायाः ॥२०॥

प्रक्रान्तचाटुवचनाः प्रणमद्‌द्विरेफैः
पुष्पोद्गमैश्च रुचिरैः कृतमन्दहासाः ।
रम्यैः प्रवालनिकरैरनुरागपूर्णाः
पर्यष्वजन्त लतिकाः सहकारवृक्षान् ॥२१॥

मित्रस्य च क्रमिकमभ्युदयं समीक्ष्य
सेर्ष्याणि काननतमांसि वनं विहाय ।
संभूय शलविवरोदरभाग्ज्यभूवं-
स्तप्तुं तपः किमु तदस्तमयाय तूर्णम् ॥२२॥

स्वादून्यरण्यसुलभानि फलानि जग्ध्वा
पीत्वा पयः प्रसृमरं सरसं सरस्याः ।

मध्येऽह्नि भूमिदिविषत्पिकसारिकाढ्यम्
अध्यास्य कुञ्जभवनं पवनं सिषेवे ॥२३॥
उच्चण्डचण्डकरमण्डलमण्डजोऽपि
दृष्ट्वा न हिण्डितुमियेष बहिर्द्रुषण्डान् ।
कण्डूलगण्डतलताण्डवलोलभृङ्ग-
वेतण्डराड्भ्रमति कश्चिदुदस्य शुण्डाम् ॥२४॥
आखेटकाय निशि निष्कुटिताटवीकं
जग्ध्वाऽतिगृध्नु पिशितं बहु कण्ठदघ्नम् ।
शार्दूलमण्डलमढौकत गाढनिद्रां
प्रच्छायपादपमहीभृदुपत्यकायाम् ॥२५॥
शूलाऽकृत प्रसृमरारुणशोणितानि
प्रत्यग्रशल्यपललानि पलालवह्नौ ।
न्यग्रोधमूलभुवि कौटिलिकः किरात-
व्रातो ज्वले निजगभस्तिभिरभ्ररत्ने ॥२६॥
माद्यन्द्विपः कमलिनीं निजकर्णजाहे
कर्णेजपैर्भ्रमरकैरिव बोध्यमानः ।
निर्मथ्य गाहितुमसोढतरार्कतापो
धावत्यनोकहवरान्पथि पातयित्वा ॥२७॥
स्वापात्परत्र निभृतत्वमतिद्विषन्तः
शाखामृगा अपि निगृह्य मतिं श्रमेण ।
जोषं बभूवुरह ! संयमिसंस्तवेन
शोकापनोदपदवीमिव लब्धुकामाः ॥२८॥
शाखावलम्बिवपुषश्च बलीमुखानां
डोलायिताः कतिपयेऽजगरा द्रुमेषु ।
वीरुद्द्रुमाद् द्विरदवृन्दकरैर्विकृष्य
दूरेतरां सपदि चिक्षिपिरे जवेन ॥२९॥

सद्यो निगीर्णमदवारणदन्तुराणि
पीनोदराण्यजगराः शयिता दधानाः ।
स्वेदद्रवान्निजशरीरभवानपोप्यन
अभ्यर्णगामि कृकलासकुलं तृषार्तम् ॥३०॥

( क्रमशः )

---

# पितृणां श्राद्धफलभोक्तृता

[ निबन्धकः—श्रीकुलमणिमिश्रशर्मा धर्मशास्त्राचार्यः ]

लम्बोदरं विघ्नहरं प्रणम्य वाणीं पुनः काशनिकाशभासम् ।
विज्ञापयत्येष जनः सुधीषु दोषा विहेया इति सानुरोधम् ॥

विदन्तितरां तत्र विदितवेदितव्या विद्यावदातहृदया नरसुलभसकलविमलगुणैकनिधानाः सज्जनाः यद् भूलोकवर्त्तिषु नरनिचयेषु भारतीयाः सनातनीया एवा वहमानकालतः सर्वात्मना धर्मपरास्तद्विश्वासार्पितपंचनिश्वासा आसन्। इदानीमपि इतरेतरदेशवंशसंभवेभ्यो निजनिष्ठास्तिकतया वर्वृतति सर्वोपरीति। धर्मात्मतया च ते सततमनुतिष्ठन्ति स्वर्गापवर्गफललाभाय कार्त्तिकादिमासेषु स्नानदानहविष्यादिकम्, संपादयन्ति कारिरीप्रभृतीन् वृष्टिसमभिलाषुका वर्षासु तदवग्रहे, पूजयन्ति वरिवस्यार्हांश्च यथाभावपुरःसरं, ददति द्रविणादिकं कुलशीलदयाभिजनसंपन्नब्राह्मणेभ्यः संक्रमणादिपुण्यकालेषु, विदधति पञ्चयज्ञान् प्रत्यहं पक्तिसिद्धये, येषां पुनर्विलसति धर्मबुद्धिर्मनसि सर्वतोभावेन, नटति कृतज्ञता हृदयनिलये, अनुसरन्ति नूनं दूना अपि पितृपितामहाश्रितसरणिं, भजन्ति देवान् धर्मवृद्धये, तद्धिया दारुदृषन्मयानपि, अर्चयन्ति तर्पयन्ति प्रसादयन्ति च पितॄन् देवधिया ततोऽधिकतया च जलदानेन पिण्डदानेन विप्राशनेन, प्रकारान्तरेणापि। तदीयेषु नियतमवश्यकर्त्तव्येषु नित्यनैमित्तिककाम्यकर्मसु श्रद्धया पिण्डदानादिद्वारेण निर्लोभं यत् पितृसात् क्रियते, तदेव श्राद्धमित्याचक्षते। तत्र च

पुत्रादिभिः प्रदत्तमन्नादिकं पितरो न हि स्वरूपतो गृह्णन्ति, यथा वाराणसीपुरीवास्तव्यो देवदत्तः कालिकापत्तननिकेतनेन सोमदत्तेन प्रदत्तां वृत्तिं गृह्णाति सर्वजनसमक्षम्। अतो "न हि पितरः श्राद्धफलभाजः, निरर्थमेव प्रदीयते तेभ्य" इत्यपि वक्तुं न युज्यते, श्रुतिस्मृतिपुराणेतिहासादौ पितॄणां तदवाप्तेः प्रतिपादितत्वात्, तदन्यथोररीकरणे च श्रुत्यादीनामप्रामाण्यात्, अप्रामाण्ये च तेषाम् अस्तिकताया मूलोच्छेदापत्तेः।

संप्रति यथा कस्माच्चित् स्थानाद् रूप्यकादिकं स्थानान्तरं प्रेष्यते, तथा श्राद्धफलं पितृसमीपं प्रेष्यते। तत्प्रकारो यथा—कटकनगरीवास्तव्यः कश्चिज् जनः अद्यत्वे प्रचलता संवादपत्रप्रचारककार्यालय-( पोष्टआफिस् ) द्वारेण रेंगुननगरीवास्तव्यस्य कस्यचिदात्मीयस्य सविधं पञ्चविंशतिं मुद्राः प्रेरयति, तास्तु मुद्रा नहि स्वरूपतो रेंगुन्नगरीं यान्ति, परन्तु कटकनगरीमधिवसता देवदत्तेन रेंगुननगरीनिषण्णाय शुभदत्ताय इयत्यो मुद्रा दत्ता इति लिपिबद्धपत्रमात्रं प्रमाणीभूय तद्वाहकयानद्वारा निर्दिष्टस्थानसंवादपत्रप्रचारककार्यालयमेत्य प्रोक्तशुभदत्तस्य मुद्राप्रापणे कारणं भवति। प्रत्यक्षतस्तु नात्र रूप्यकदाता कटकनागरिको देवदत्तः, नवा तत्करसमर्पितरूप्यकनिकरः, किन्तु निःसंशयं शुभदत्तो गृह्णाति रूप्यकाणि मामकीनबुद्ध्या।

तद्वदत्र श्रद्धाभक्तिसंवलितेनोत्तराधिकारिणाऽनुष्ठीयमानात् श्राद्धादिकर्मणो मीमांसाग्रन्थसिद्धान्तीकृतः कश्चिद् अपूर्वाख्यः संस्कारविशेषो रूप्यकप्रापकप्रमाणपत्रवत् ( मनि-अर्डर्फर्म्-सदृशः ) प्रादुर्भवति। तेन चापूर्वाख्यदापकपत्रद्वारेण उद्दिश्यमानाः पितरो गृह्णन्ति समग्रश्राद्धफलम्।

यथा च मनिअर्डर्फर्म् इत्यांगलभाषाप्रसिद्धं प्रमाणपत्रमवलोक्य रूप्यकाणि यथायथं विनियोक्तुं तत्कर्मणि राजपुरुषा नियुक्ता वर्तन्ते तथाऽत्र पितृभ्यः फलदानकर्मणि भगवता नियुक्ता आदित्यवसुरुद्राख्यया व्यपदिष्टा देवताः। अस्माभिरनुष्ठितात् कर्मणो योऽपूर्वाख्यसंस्कारविशेषो

जायते, स तु तेषामेव पितृकव्यप्रापणकर्मणि नियुक्तानां वस्वादीनां सविधमेव याति। प्रमाणमत्र श्राद्धकरणावसरे "अस्मत्पित्रे वसुरूपाय, पितामहाय आदित्यरूपाय, प्रपितामहाय रुद्ररूपाय" इति चिन्त्यते, तानेव तु निर्दिश्य प्रदीयते चापि कव्यम्।

ते च देवा मरपुरवास्तव्यैः पुत्राद्युत्तराधिकारिभिरनुष्ठितात् श्राद्धकर्मणः समुत्पन्नमपूर्वाख्यं फलदापकप्रमाणपत्रम् ( मनिअर्डर्फर्म् ) अवलोक्य दानकालोच्चारितवासस्थानादिनिरूपणानुसारं स्वस्वपितॄन् प्रापयन्ति श्राद्धफलम्। यथा—

पुरीमण्डलान्तःपाति-खोर्द्धा-संवादपत्रप्रचारकार्यालयान्तर्वर्ति-मुकुन्द—प्रसादग्रामवास्तव्येन एता मुद्राः प्रापणीया इतिवद् भरद्वाजसगोत्रः अस्मत्-पिता नारायणदेवशर्मा तृप्यतामिति निर्देशानुरूपं वसुरुद्रादित्याः प्रददति कर्मफलम्। यथा वाऽकस्माद् उत्सृष्टो वत्सतरो गोसहस्रमध्यगतामपि निजां जननीमधिगच्छति, तथाऽत्र वैशिष्ट्यपरिचायकगोत्राद्यभिधानसंपदा स्वकीयपुत्रादिप्रदत्तमन्नादिकं निजा एव पितरो गृह्णन्ति, नान्ये।

### ग्रहणप्रकारः

यद्यप्यत्र केचन पितरो देवत्वमाश्रिताः केचिद्वा तृणरूपेण परिणताः, के वा कर्मदोषेण वलीवर्दसंज्ञावहाः सन्तो रूपान्तरिताः स्युस्तर्हि तत्र तदधिष्ठातृदेवा वसुप्रभृतयस्तत्फलदापकमपूर्वमवेक्ष्य तन्निर्दिष्ट-पितॄणां देहानुरूपखाद्यप्राप्त्यर्थं तत्तत्खाद्यप्रदायकदेवसविधमनुमननद्वारेण तदेवापूर्वाभिधेय-प्रमाणपत्रं प्रेरयन्ति। तत्तत्खाद्यदानसमर्थाश्च देवा नियतं ददति कृत-कर्मणः परिमाणानुरूपं फलम्।

दृष्टान्तत्वेनात्र यदि कश्चिद्वलीवर्दव्यसनी गोपालकं गोखाद्यार्थमर्थमर्पयति, तदात्र पालस्तद्भोजनानुरूपं धान्यकुलत्थमाषपलालादिकं क्रीणाति। यदि वा व्याघ्रव्यसनी ददाति धनादिकं तर्हि तच्छासकः संगृह्णात्यर्थव्ययद्वारेण रुरुच्छागल-कौलेयकादीनां पलानि।

एतेनात्रेदं ज्ञायते यत्, प्रदीयमानमुद्राणां यथा ग्राहकानुरूपं रूपान्तर-

परिणमनं भवति तथात्र प्रभवतितरामपूर्वाख्यः संस्कारविशेषो नानायोनिजनुषां पितृणां प्राषणविषये विभिन्नप्रकारोपजीवकखाद्यभोगादिरूपेण। यथा देवत्वमाप्तस्य पितुर्होमादिसंभूतहव्यरूपेण, नरत्वमास्थितस्य नानैश्वर्यद्वारेण, व्याघ्रीभूतस्य मृगादिरूपेण, मृगरूपेणावतीर्णस्य तृणरूपेण, तृणरूपेण परिणतस्य जलरूपेण, वृक्षादिरूपाश्रितस्य भूरसरूपेण, विप्रवृत्तेर्यजनाध्यापनद्वारेण, क्षत्रियस्य विजयरूपेण, वैश्यस्य शस्यसंपद्रूपेण च पुत्राद्यनुष्ठितश्राद्धकर्मापूर्वं परिणमते। पितरश्च यथाजाति यथाकर्म यथाबुद्धि कृतकर्मणोऽपूर्वाख्यप्रमाणपत्रीकृतकर्मफलानुसारेण निजभोग्यं प्राप्नुवन्ति रूपांतरपरिणता अपि।

( क्रमशः )

# सनातनधर्मस्य प्राचीनता च महत्ता च

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीदीननाथशर्मा शास्त्री सारस्वतः ]

अस्तु—यत् किमपि भवतु, तदनुयायिभिरयं तत्र तत्र प्रशस्य विख्यापितः। अदसीयविख्यापनस्य प्रकारा भिन्नभिन्नैर्भिन्नभिन्नविधया अवलम्बिताः। इयं लीला तैर्दयानन्दचरितपुस्तकेषु अत्यर्थं कृता। पुराणानन्दकैरप्येभिः 'यद्विवाहस्तद्गीतगानम्' इति न्यायमाश्रित्य तेषु ईदृशा अर्थवादा ईदृश्यश्चासम्भविन्यो घटना ईदृक्षाश्च स्तुतिवादाः सम्भृताः, यान् दृष्ट्वा मुग्धजिज्ञासुवर्गोऽत्र आगत्य एषां पाशं-बद्धः। इमे भवन्ति स्वनेतुः प्रसेधनप्रकाराः, ये एभिरीशवोयेभ्यः शिक्षिताः। तानेव अनुसृत्य इमे स्वपुस्तकानामल्पमूल्यं चक्रुस्तेषां प्रचारातिशय्याय।

अस्तु, यत्किमपि भवतु। अयमार्यसमाजोऽपि सनातनधर्मस्य शाखान्तरेभ्यो निकटतरा अर्वाचीनतमशाखा। अत एवास्य हारित्यं

दृष्ट्वा अर्वाञ्चो जना अत्र अनुरज्यन्ति। यदि अयं समाजः प्रक्षिप्ततारूप-ब्रह्मास्त्रस्य आविष्कारं ब्राह्मणेभ्यो गालिप्रदानञ्च नाकरिष्यत्; तर्ह्ययं नूनं सनातनधर्मे विलीनोऽभविष्यत्। परमेतदादिक-तदीयदोषतोऽयं तस्मात् क्रमशः पृथगेव जातः। अधुना तु स्वप्रवर्तक-स्वा-दयानन्दस्य सिद्धान्तेभ्योऽपि क्रमशः पश्चात्पदो भवन् वर्तते, सनातनधर्मतस्तु क्रमशो दूरदूरे गच्छन् दृश्यते।

तथाप्ययं स्थूलत 'एव'-वादी, सनातनधर्मोऽस्ति 'अपि'-वादी। स यं यं सिद्धान्तम् 'अपि'-शब्देन उभयरूपेण मेने, अयमार्यसमाज 'एव'-वादी सन् उभयोः सिद्धान्तयोरन्यतरसिद्धान्तमेव स्वकीयमकार्षीत्। तथाहि—

सनातनधर्मः परमात्मानं निराकारमपि मनुते साकारमपि च; आर्यसमाजस्तु निराकारमेव मनुते इति भेदः। सनातनधर्मः सन्ध्याहवनमप्युपास्ते मूर्तिपूजामपि च, आर्यसमाजस्तु सन्ध्याहवनमात्रम्। सनातनधर्मः कर्मकाण्डोपासनाकाण्डपर्यन्तं मूर्तिपूजां मनुते, ज्ञानकाण्डे च तामावश्यकीं न मनुते, परमार्यसमाजस्तु सर्वदैव तामनावश्यकीमाचष्टे। सनातनधर्मो जन्मना वर्णव्यवस्थां मनुते, गुणकर्मणा तु सम्मानम्, आर्यसमाजस्तु गुणकर्मानुसारमेव मन्यते तद्व्यवस्थाम्। सनातनधर्मो मन्त्रभागस्य ब्राह्मणभागस्यापि च वेदत्वं मनुते, आर्यसमाजस्तु मन्त्रभागस्यैव। सनातनधर्मो वेदान् तदनुकूलस्मृतिपुराणेतिहासानपि च मनुते, आर्यसमाजो वेदमात्रम्, तत्र च अर्थान् स्वेच्छानुसारं करोति।

सनातनधर्मो मृतस्य पितुः श्राद्धमिच्छति, जीवतः सेवाम्; आर्यसमाजस्तु जीवितस्यैव श्राद्धं वष्टि। सनातनधर्मः स्वकृतकर्मणः फलं स्वस्मै अपि मनुते परस्मै अपि, परमार्यसमाजस्तु स्वस्मै एव। सनातनधर्मः परमात्मनोऽपि देवानामपि च पूजां वष्टि, आर्यसमाजस्तु परमात्मन एव। सनातनधर्मः पारमार्थिकत्वे अद्वैतवादं मन्यते, भक्तिवादे उपासनायां वा द्वैतवादम्; आर्यसमाजस्तु द्वैतवादमात्रम्। सनातनधर्मो जीवात्मानं पूर्वजन्मानुकूलं कर्मणि परतन्त्रं मनुते, अन्यत्र च

स्वतन्त्रम् ; आर्यसमाजस्तु आत्मानं कर्मणि सर्वथा स्वतन्त्रमेव मन्यते। सनातनधर्मश्चातुर्वर्ण्यस्य स्पृश्यताम्, अवर्णानां चाण्डालादिकानां च अस्पृश्यतां मनुते ; परमार्यसमाजस्तु सर्वेषां स्पृश्यताम्। सनातनधर्मो द्विजेभ्यो यज्ञोपवीतं दत्ते तदितरेभ्यो न ; आर्यसमाजस्तु सर्वेभ्यस्तद्ददते। सनातनधर्म आदौ मङ्गलार्थम् 'ॐ' शब्दमपि उपादत्ते 'श्री' शब्दमपि च ; आर्यसमाजस्तु 'ओं' शब्दमात्रम्। सनातनधर्मो ज्यौतिषे गणितं फलितञ्च इत्युभयं मनुते, आर्यसमाजस्तु गणितमात्रम्। सनातनधर्मोऽधिकांशे पृथिव्या अचलतां मन्यते, एकांशे च पृथिव्या गतिम् ; परम् आर्यसमाजस्तु पृथिव्या गतिमात्रं मन्यते न स्थिरताम्।

एवमन्यसिद्धान्तेष्वपि अनुभूयताम्। परमधुना आर्यसमाजः केषुचित् स्वसिद्धान्तेषु स्वस्वामिनोऽपि दूरं गच्छन् वर्तते। स्वा० दयानन्दो विधवा-विवाहं नेच्छति द्विजेषु, परन्तु 'नियोगं' वष्टि। आर्यसमाजस्तु नियोगं न वष्टि, किन्तु विधवाविवाहम्। स्वा० दयानन्दोऽस्पृश्यानामस्पृश्यतां मनुते, शूद्रेभ्यो यज्ञोपवीतदानं न मन्यते ; परमार्यसमाजस्तद्विपरीतदिशि गच्छन् वर्तते। स्वा० दयानन्देन कन्यायज्ञोपवीतं न निर्दिष्टं क्वापि स्वपुस्तके, आर्यसमाजस्तु तत्रैव आग्रही। अधुना आर्यसमाजः स्वा० दयानन्दकृत-'संस्कारविधौ' अपि संशोधनं कतिचिद्विधिदूरीभावञ्च अभिलषति। सत्यार्थप्रकाशे च तृतीयवारं मुद्रापितात् तस्माद् अद्य यावद् बहूनि संशोधनानि अकार्षीद् द्वितीयसत्यार्थप्रकाशापेक्षया ; अग्रे कर्ता च। यतोऽयं समाजः प्रायो न खलु वेदशास्त्रादि-प्रणयी, किन्तु सुविधाप्रणयी। अस्य जन्म सनातनधर्मादेव जातम् इति निरूपितपूर्वमेव। यतोऽस्य प्रवर्तकः स्वा० दयानन्दः। स च मूर्तिपूजकस्यैकस्य सनातनधर्मण एव पुत्र आसीत्। स्वा० दयानन्दात् पूर्वमिमे ऐकदेशिका विचारा नासन्, न च तेन मातृगर्भाद् एते शिक्षिताः, प्रत्युत सनातनधर्मस्य शास्त्राणि आपाततः पठित्वा स तत्र स्वेच्छानुसारेण कांश्चिद् ऐकदेशिक-सिद्धान्तान् संगृह्य, तेषां च वैदिक इति संज्ञां कृत्वा स्वकीयमिमं सम्प्रदायं प्राचीकॢपत्।

आर्यसमाजोत्तरमेको वर्गस्तस्मादेव उत्पन्नः 'सुधारक'-नामा। आर्य-समाजे ये सनातनधर्मसदृशाः सिद्धान्ताः शिखायज्ञोपवीतादिधारणस्य ; अयं तत्र असभ्यतां मत्वा तत्परिधानाचरणं न करोति। अयं स्वा० दयानन्दस्य नाम स्थापयित्वा तद्विरुद्धानपि सिद्धान्तान् प्रचारयति। अयं स्वकीयसर्वकर्माणि वेदासम्बद्धान्यपि वैदिकानि वक्ति। अधुना आर्यसमाजस्य प्रायशो विलयः समजनि। तत्राधुना सुधारकाभासानां बाहुल्यम्।

एवमन्यान्ये बहवः सम्प्रदाया मतवादा वा सनातनधर्मणामालस्येन उपेक्षया च सम्पन्नाः। केचिच्च सम्प्रदायाः सनातनधर्मसिद्धान्तानां बाहुल्यात् सर्वांस्तान् अनुकर्तुमशक्ताः सन्तस्तदीयान्यतमसिद्धान्तं प्राधान्येन स्वीकृत्य स्वसम्प्रदायान् उपबृंहयामासुः। सर्वसम्प्रदायानां सर्वसिद्धान्त-तत्त्वानुसन्धाने अवश्यमेव तेषु सनातनधर्मच्छाया द्रक्ष्यते। सनातन-धर्मो वेदादिकान् स्वस्वविषयेऽधिकप्रमाणभूतान् मेने। तत्र आर्यसमाजेन वेद एव प्राधान्येन अवलम्बित आडम्बरार्थम्, अन्यस्मिन् सनातनधर्मसिद्धान्त-द्वन्द्वे च एकैकः सिद्धान्तोऽवलम्बित इति प्रागुक्तम्। एवं जैनैः सनातन-धर्मस्य मूर्तिपूजा प्राधान्येन स्वीकृता, प्रकारभेदस्तु वैलक्षण्याय कर्तव्य एवाऽसीत्। एवं बौद्धैर्जैनैश्च सनातनधर्मस्य अन्यतमोऽहिंसासिद्धान्तोऽपि प्राधान्येन अवलम्बितः। समातनधर्मे रजस्तमोगुणिनां कृते हिंसायुक्तयज्ञा अपि नियमिताः सन्ति, मौहम्मदास्तत प्रकारान्तरेण स्वीचक्रुः। सनातनधर्मे पञ्चशिखाधारणमपि श्रूयते, ततश्चूडाकरणावसरे कैश्चित् सर्वाः शिखा मुण्ड्यन्ते, कैश्चिच्च मुख्यशिखा स्थाप्यते, मौहम्मदैरपि तदवलम्ब्य पञ्चशिखादिस्थापनं क्रियते, ततः सर्वाः शिखाश्चूडाकरणादि-समये छिद्यन्ते। एवमीशवीयैः सनातनधर्मस्य अवतारवादः स्वीकृतः। 'सिक्खैः' सनातनधर्माद् ग्रन्थपूजा शिक्षिता। एवमन्यत्र स्वयमनु-सन्धेयम्।

केचित् सनातनधर्मे काठिन्यं संयमातिशयञ्च दृष्ट्वा स्वसौविध्यानु-

सारिणः सम्प्रदायान् प्रचालयामासुः । सुविधाप्राप्तास्वादानामग्रेऽपि तादृशाः सम्प्रदायाः सम्पत्स्यन्ते । सौविध्यबहुलेऽपि आर्यसमाजे बहवो विभागा जाता 'घासमांसपार्टी' प्रभृतयः । परं सनातनधर्मः सर्वतः प्राचीनः । अयं सर्वधर्माणां पिता अस्ति । अस्य सिद्धान्ताः स्थिराः सन्ति, देश-कालमपेक्ष्य शीघ्रं परिवर्तनं नाऽऽप्नुवन्ति । अत एव क्रान्तिप्रियाः केचिद् उदासते एतस्मात् । अस्य साहित्यं सुदृढम् । अदसीयाः सिद्धान्ता एतादृशे स्वैराचारयुगेऽपि यत्र तत्र प्रसृता एव सन्ति । यदि सनातनधर्माणः स्वसाहित्यदर्शनव्यग्राः स्युः, वाक्शक्तिं लेखशक्तिञ्च धर्मविषये समेधयेयुः ; तर्हि तेषां प्रतिस्पर्द्धी प्रतियोगी वा न कोऽपि सम्प्रदाय-स्तिष्ठेत् ।

अनेनैव सनातनधर्मेण प्राचीनसमये जैनबौद्धनास्तिकादिधर्मैः सह शास्त्रार्थान् विधाय ते धर्मा निरस्ताः । तेषाञ्च प्रभावो भारताद् अपसारितः । अयमद्यापि स्थैर्यं बिभर्त्ति, अग्रेऽपि च स्थास्यति । अस्मिन्नद्यापि एतावन्तो विद्वांसः सन्ति, ये भिन्नधर्मणो विदुषो वर्षाण्यध्यापयितुम् अलम्भूष्णवः स्युः । अस्य जनसङ्ख्या एतावती वर्तते यत् तस्यां समस्ता भिन्नसाम्प्रदायिकाः कलितनिज 'ट्रेडमार्का' अपि विलीनाः स्युः ; तर्हि सुपरिगवेषणेनापि ते नो लभ्येरन् । अस्मिन् धनराशिरपि एतावान्, येन भिन्नधर्माणः सवस्त्रभूषणाः सगृहाद्युपकरणाश्च क्रीयेरन् । अयं गम्भीरोऽस्ति धर्मः, वृद्धत्वात् ; चञ्चलो नास्ति ।

केचिद् धर्माभासा ये अद्यत्वे अर्वा घंटा इव युवानो दृश्यन्ते ; तेषु चाञ्चल्यं, कार्यस्फूर्त्तिः कलकलश्च दृश्यते यद्यपि ; तथापि तेषु परिणाम-चिन्तनशक्तिर्न वर्तते । तत्परिणतिस्वरूपे ते यत् किमपि आन्दोलनं प्रारभमाणा अपि परिणामे विषसदृशं तज्ज्ञात्वा ततस्तत्परिवर्तनं कुर्वन्ति, नवीनञ्चाऽऽन्दोलनं प्रारभन्ते । तैः शीघ्रतायां मरुत्तरगतिः स्वीकृता, पश्चाद्-दर्शनं तेषां कृत्यं न । जनतापि च कदाचित् तच्छीघ्रकारित्वमोह-कत्वादिदर्शनमत्ता तद्-रजसा रजस्वलीभूतमात्मानं न जानीते । पश्चाज्ज्ञाने

जाते स्वरजस्खलतां दृष्ट्वा ह्रीणा विषण्णा च सा तादृशमरुत्तराध्यक्षेभ्यो गालिं ददाति। पुनस्तमेव प्राचीनं पन्थानमनुसरति, अत्र सनातनधर्मस्यैव गाम्भीर्यं कारणम्।

अर्वाचीनमतान्तराणामेतदप्येकं दौर्बल्यम्, यत तानि केवलं परधर्म-निन्दनमात्रे पर्यवसन्नानि। तत्तन्मतावलम्बिनस्तत्तन्मतेभ्यः प्रच्याव्य स्वमतं स्वीकारयितुं विविधाभिर्विधाभिश्चेष्टन्ते; परं न तथा सनातनधर्मः। सनातनधर्मो नवयुवकगणधर्म इव न क्रोधनो न च चञ्चलः; प्रत्युत शान्ति-शीलः, स्थिरकार्यवान, सर्वेषामस्थिमज्जसम्पृक्तः। अयमन्यसम्प्रदायवर्गा इव न खलु छलमलपरिबृंहितः, किन्तु सत्यतादृढः।

मतान्तरेषु सर्वविधपुरुषाणां कृते एकविधैव साधनसरणिर्निर्दिष्टा, यथा-मूषको हरिद्रायाः खण्डेन स्वमापणिकं मेने। कामं केचन बुद्धिमन्तो भवेयुर्मूर्खा वा, भोगलोलुपा वा भवेयुर्जितेन्द्रिया वा, संन्यासिनो वा स्युर्गृहस्था वा, धनशालिनो वा वर्त्तेरन दरिद्रा वा, सर्वैस्तत्र एकस्मिन्नेव साधनसोपानमार्गे प्रवर्त्तितव्यम्। परन्तु सनातनधर्मे नैषा दृश्यते असम्पूर्णता। अपौरुषेयधर्मेऽत्र अधिकारिभेदेन बहवः साधनभेदा निर्दिष्टाः। विविधश्रेणीया मानवाः स्वयोग्यतानुरूपं साधनमनुष्ठाय निजमात्मानमुपकर्त्तुं प्रभवन्ति। अयं सनातनधर्मो भिन्नभिन्नाधिकारिणः समाने एव मार्गे बाध्यान न करोति।

एतदीयधर्ममहत्तावर्णनाय नास्माकं पार्श्वे समयोऽस्ति, न च सौविध्यम्। तेन वयमत्रैव विरिरंसामः। एतेन सिद्धं जातं यद् अस्मदीयधर्मस्य 'सनातनधर्म' इति नाम प्राचीनमेव। एतदीया एव 'ॐ, गुरुकुल, मन्दिर, बलिदान, पण्डित' प्रभृतयः शब्दा आर्यसमाजादिकेन प्रयुज्यन्ते। ईदृक्षस्य सनातनधर्मस्य अस्माभिरवश्यं भक्तैर्भाव्यम्, तद्विद्रोहिणां मुखमुद्रणाय यतनीयम्। अयमेव धर्मोऽनादिरनन्तः, ईश्वरीयः, सर्वदा एकरसः, प्राणिमात्रस्य कल्याणकारी, अपरिमितसाहित्यवान, जगद्व्यापकश्च। देवा अपि नैतमतिवर्त्तन्ते। एतस्य सेवयैव स सनातनः पुराणपुरुषो भगवान

सन्तुष्यति । आधुनिका धर्म्यायासास्तु प्रायश्छलबलयुक्ताः, मलमलिनाश्च । तत्र गमनं धर्मविरुद्धमेव । बहव एव पण्डिता आर्यसमाजादिकं त्यक्त्वा, विनैव सनातनधर्मणां प्रेरणां स्वयमेव सनातनधर्मशरणं प्राप्ताः । सनातनधर्मस्य तावन्तो विद्वांस आर्यसमाजादौ न गताः ; ( ये गता अपि, ते मतान्तरकर्तृकचातुरीपाशे निबध्यैव ) इति सिद्धः कोऽप्यस्य अतिशयः । अस्यैव सनातनधर्मस्य सिद्धान्तान् वेदशास्त्रपरिपुष्टान् विधाय 'संस्कृतसाहित्यपरिषत्'पाठकानां सेवायां समये उपहारीकर्तास्म इत्यलमक्षरक्षरणेन । शम् ।

---

# भक्तिभागवतस्योपसंहारः*

अस्ति प्रशस्तिललितो लवणाब्धितीरे
नीलाचलाञ्चलतटीमुकुटायमानः ।
एकस्त्रिमूर्तिकुहनाकृतचित्रमूर्ति-
र्लक्ष्मीपतिः सकलदैवतवन्दनीयः ॥१॥
तत्पादपद्मतुलसीदलसंप्रसूत-
सौरभ्यहृतहरिदन्तरवैष्णवालिः ।
देशः स उत्कल इति प्रथितः पृथिव्यां
निर्व्याजमुक्तिसखमुक्तिसमर्थहेतुः ॥२॥
तस्मिन नृपाः समभवन किल भोजवंश्या-
स्तद्देशशक्तिविरजापदपद्मभक्ताः ।
तैः पूजिता विमलवत्सकुलप्रभूताः
केचिन्नृपालगुरवः प्रथिता द्विजेन्द्राः ॥३॥

---

* विशेषबुभुत्सायां पूर्वसञ्चिका द्रष्टव्या । सं० सा० प० स० ।

मृत्युञ्जयः समभवत् प्रथितः स तेषा-
माचार्यवर्यचरणः सकलागमज्ञः ।
यः पञ्चतामुपगतं नरपालसूनुं
मृत्युं विजित्य सहसा पुनरानिनाय ॥४॥
वात्स्या हरार्धतनुभागपदाब्जसेवा-
स्थातास्तदीयकुलवृद्धिकरा बभूवुः ।
भोजान्वयक्षितिभृतां गुरवः पवित्रा
मन्त्रैकसाधनपरा भुवि याजजूकाः ॥५॥
भोजेषु तेष्वविनयादिव राजपीठाद्
भ्रष्टेषु केशरिकुलं तदलञ्चकार ।
तैरर्चिता द्विजवरा गुरवस्तथैव
जाता जगत्प्रथितवत्ससगोत्रिणस्ते ॥६॥
उद्योतकेशरिकुलस्य गुरुर्बभूव
तेषु प्रसिद्धमहिमा भवदेवनामा ।
सोमेश्वरो नृपकुलस्य समर्चनीयो
वंशः स तेन कृतिनैव कृतप्रतिष्ठः ॥७॥
येनोद्धृते सकलविस्तृतयन्त्रसारे
तन्त्रार्णवे महति मज्जति सर्वलोकः ।
यत्स्थापितामरकुलैरिह कृत्तिवासः-
क्षेत्रं बभूव बत यद् विपुलावकाशम् ॥८॥
भूपेषु केशरिकुलप्रभवेषु तेषु
विप्रापकारदहनैः प्रलयं गतेषु ।
देवद्विजातिपदपङ्कजचञ्चरीका
भूपा बभूवुरथ केचन गङ्गवंश्याः ॥९॥

× × × ×

# अनुबन्धिका*

[ निबन्धकः—श्रीकालीपदतर्काचार्यः ]

विदाङ्कुर्वन्तु श्रीमन्तो विबुधधौरेयाः ! यदिदं प्रशान्तरत्नाकरं नाम नवीनं रूपकं बाल्मीकेः कविकुलगुरोः पूर्वरूपस्य रत्नाकरस्य दस्युवृत्तिमास्थितस्य सुकठोरकलुषवृत्तिप्रशान्तिमधिकृत्य सन्निबद्धमास्ते। सोऽयं रत्नाकरो नाम रामायणमहावस्तुप्रजापतेः श्रीबाल्मीकिमहर्षेः पूर्वरूपमिति सुप्रथितमेव कथिकापारम्पर्येणा गोपालादानरपालम्। तदिदं रत्नाकर इति बाल्मीकेः पूर्वं नामधेयं कृत्तिवासकृतवङ्गभाषामयपद्यात्मकरामायणग्रन्थ एव सुस्पष्टमुल्लिखितमुपलभ्यते। अध्यात्मरामायणग्रन्थे महर्षिबाल्मीकिना स्वमुखेनैव श्रीरामसमीपे यदात्मवृत्तमुपवर्णितमयोध्याकाण्डे षष्ठसर्गे तत्र रत्नाकर इति नाम्नो गन्धोऽपि नासाद्यते। तत्रत्यो वृत्तभागस्तु कृत्तिवासादिपरिगृहीतेन सर्वत्र साम्प्रतिकेषु प्रथितेन वृत्तभागेन प्रायेण तुल्य एव †। मम सुयोग्यच्छात्रेण वेथुनकलेजाख्यराजकीयमहाविद्यालयस्य संस्कृताध्यापकेन श्रीमता चिन्ताहरणचक्रवर्तिकाव्यतीर्थ-एम्-ए-महोदयेन निबद्धं 'वाङ्गला रामायणे रत्नाकरेर उपाख्यान ओ ताहार मूल' इत्याख्यवङ्गभाषामयनिबन्धं

---

* पत्रिकायामस्यां प्रकाशं नीतस्य निबन्धककृतस्य "प्रशान्तरत्नाकर" नाटकस्यायं मुखबन्धः।

† राम त्वन्नाममहिमा वर्ण्यते केन वा कथम्।
यत्प्रभावादहं राम ब्रह्मर्षित्वमवाप्तवान्॥
अहं पुरा किरातेषु किरातैः सह वर्द्धितः।
जन्ममात्रद्विजत्वं मे शूद्राचाररतः सदा॥
शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः।
ततश्चोरैश्च संगम्य चोरोऽहमभवं पुरा॥

तथा स्कन्दपुराणादिकमालोच्य विज्ञायते, यथा न केवलमध्यात्मरामायण एव, परमन्यत्रापि तद्वृत्तमस्ति निबद्धम् ! तस्मादेव वङ्गभाषामयनिबन्धाद् विशेषतो विज्ञायते यथा वङ्गेभ्यो वहिरपि साधारणेषु प्रसिद्धं क्वचित् क्वचिदीदृशमेव वाल्मीकेः पूर्ववृत्तं लब्धप्रचारमास्ते। कर्णालमण्डले लब्धप्रचारमीदृशमेकं वृत्तं १८६५ खृष्टाब्दे Indian Antiquary इत्याख्य-

---

धनुर्बाणधरो नित्यं जीवानामन्तकोपमः ।
एकदा मुनयः सप्त दृष्टा महति कानने ॥
साक्षान्मया प्रकाशन्तो ज्वलनार्कसमप्रभाः ।
तानन्वधावं लोभेन तेषां सर्वपरिच्छदान् ॥
ग्रहीतुकामस्तत्राहं तिष्ठ तिष्ठेति चाब्रवम् ।
दृष्ट्वा मां मुनयोऽपृच्छन् किमायासि द्विजाधम ॥
अहं तानब्रवं किञ्चिदादातुं मुनिसत्तमाः ।
पुत्रदारादयः सन्ति बहवो मे बुभुक्षिताः ॥
तेषां संरक्षणार्थाय चरामि गिरिकानने ।
ततो मामूचुरव्यग्राः पृच्छ गत्वा कुटुम्बकम् ॥
यो यो मया प्रतिदिनं क्रियते पापसञ्चयः ।
यूयं तद्भागिनः किं वा नेति वेति पृथक् पृथक् ॥
वयं स्थास्यामहे यावदागमिष्यसि निश्चयः ।
तथेत्युक्त्वा गृहं गत्वा मुनिभिर्यदुदीरितम् ॥
अपृच्छं पुत्रदारादींस्तैरुक्तोऽहं रघूत्तम ।
पापं तवैव तत् सर्वं वयन्तु फलभागिनः ॥
तच्छ्रुत्वा जातनिर्वेदो विचार्य पुनरागमम् ।
मुनयो यत्र तिष्ठन्ति करुणापूर्णमानसाः ॥
मुनीनां दर्शनादेव शुद्धान्तःकरणोऽभवम् ।
धनुरादीन् परित्यज्य दण्डवत् पतितोऽस्म्यहम् ॥

पत्रे प्रकाशितमभूत्। तत्रापि रत्नाकर इति नाम नास्ति। तत्र पुनरेष विशेषः, यद् वाल्मीकेः पूर्वरूपेण किरातेन रामनाम समुच्चारयितुमशक्यमिति मुनयस्तं 'म्र' इति शब्दजपमुपदिष्टवन्तः। अथ बहुवर्षानन्तरं यदा मुनयस्तेन मार्गेण व्रजन्तो वल्मीककूटमुपेत्य विश्रामार्थमाश्रितवन्तस्तदा तदभ्यन्तरात् समुद्गतं निरन्तरं शब्दमाकर्ण्य वल्मीककूटं भित्त्वा तस्मात्

---

रक्षध्वं मां मुनिश्रेष्ठा गच्छन्तं निरयार्णवम्।
इत्यग्रे पतितं दृष्ट्वा मामूचुर्मुनिसत्तमाः॥
उत्तिष्ठोत्तिष्ठ भद्रन्ते सफलः सत्समागमः।
उपदेक्ष्यामहे तुभ्यं किञ्चित्तेनैव मोक्ष्यसे॥
परस्परं समालोच्य दुर्वृत्तोऽयं द्विजाधमः।
उपेक्ष्य एव सद्वृत्तैस्तथापि शरणं गतः॥
रक्षणीयः प्रयत्नेन मोक्षमार्गोपदेशतः।
इत्युक्त्वा राम ते नाम व्यत्यस्ताक्षरपूर्वकम्॥
एकाग्रमनसात्रैव मरेति जप सर्वदा।
आगच्छामः पुनर्यावदुक्तं तत्त्वं सदा जप॥
इत्युक्त्वा प्रययुः सर्वे मुनयो दिव्यदर्शनाः।
अहं यथोपदिष्टं तैस्तथाकरवमञ्जसा॥
जपन्नेकाग्रमनसा बाह्यं विस्मृतवानहम्।
एवं बहुतिथे काले गते निश्चलरूपिणः॥
सर्वसङ्गविहीनस्य वल्मीकोऽभून्ममोपरि।
ततो युगसहस्रान्त ऋषयः पुनरागमन्॥
मामूचुर्निष्क्रमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः।
वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः॥
मामप्याहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर।
वल्मीकात् सम्भवो यस्माद् द्वितीयं जन्म तेऽभवत्॥

पूर्वपरिचितं किरातं प्रकाशयामासुः। तेनैव चास्य वाल्मीकिरिति नाम प्रसिद्धिमापत्। इति।

वाल्मीकेः पूर्वं नाम समुत्पत्तिं पितरौ चाधिकृत्य भूयांसो मतभेदाः समुपलभ्यन्ते। तिलकाख्यरामायणटीकाकृतः वल्मीकमृतकूटप्रभवत्वात् वल्मीकाख्यमुनिपुत्रत्वाद्वा वाल्मीकिरिति संज्ञेति विकल्पं कृतवन्तः। तत्र वाल्मीकेः पूर्वनामविचारो नास्त्येव। (१)

रामायणशिरोमणिटीकाकारा बहुकालिकतपस्यया वल्मीककूटप्रच्छन्नस्य वरुणेन कृतया वृष्ट्या वल्मीकभेदनस्य कृतत्वात् प्रकाशितत्वेन वाल्मीकिरिति प्राचेतस इति च संज्ञाद्वयं गौणपुत्रत्वप्रयुक्तं भृगोः मुख्यपुत्रत्वाच्च भार्गवादिसंज्ञामपि समुपपादयन्ति। (२) ऋक्ष इत्यस्य मुख्यं नाम इति तत्रैवोपपादितमास्ते।

---

इत्युक्त्वा ते ययुर्दिव्यगतिं रघुकुलोत्तम।
अहं ते राम नाम्नश्च प्रभावादीदृशोऽभवम्॥ इति।
(अध्यात्मरामायणे अयोध्याकाण्डे षष्ठसर्गः)

१ उक्तं हि तिलकाख्यरामायणटीकाकृता रामेण रामायणीयप्रथमश्लोकटीकायाम्—'वाल्मीकिः वल्मीकस्यापत्यम्। वल्मीकप्रभवो यस्मात् तस्माद् वाल्मीकिरित्यसौ। इति ब्रह्मवैवर्तोक्तेः। वल्मीकप्रभवत्वेन गोणीपुत्रादिवत् गौणमस्य वल्मीकापत्यत्वं गृहीत्वेञ् साधुरपत्यार्थः। यद्वा वल्मीक इति ऋषिविशेषस्य संज्ञेत्याहुः।' इति।

२ उक्तं रामायणशिरोमणिटीकायाम्,—'वाल्मीकिर्वल्मीकगौणपुत्रः।... गौणत्वञ्च बहुकालिकतपःस्थितिहेतुकवल्मीकाकृतित्वप्राप्त्यनन्तरं वरुणकृतवृष्ट्या निष्पन्नत्वात्, अत एव वक्ष्यमाणप्राचेतसव्यवहारोऽपि न विरुद्धः। प्रचेतोनिरूपितगौणपुत्रत्वस्यापि अस्मिन् सुवचत्वात् गौणपुत्रत्वयोर्विरोधाभावात्। अत एव भृगुपुत्रत्वमप्यस्मिन् न विरुद्धम्। भृगुनिरूपितमुख्यपुत्रत्वस्य अस्मिन् विद्यमानत्वात्। गौणपुत्रत्वमुख्यपुत्रत्वयोर्विरोधाभावात्। अत एव—'अथा-

भूषणाख्यरामायणटीकाकारो गोविन्दराजोऽपि प्रायेण शिरोमणि-टीकाकारमतमेवानुवर्तमानो दृश्यते। तत्र तावदयं विशेषः यत्, भृगुवंश्यः कश्चित् प्रचेता नाम, तदपत्यतया वाल्मीकेः प्राचेतस इति संज्ञा। 'चक्रे प्रचेतसः पुत्रस्तं ब्रह्माप्यन्वमन्यत' इत्यादौ प्रचेतःपुत्रत्वस्य स्पष्टमुक्तेः। (३)

---

ब्रवीन्महातेजा ब्रह्मा लोकपितामहः। वल्मीकप्रभवो यस्मात् तस्माद् वाल्मीकिरित्यसौ'॥ इति ब्रह्मवैवर्तवचनम्। 'अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषमिति लवकुशोक्तिः। 'ऋक्षोऽभूद् भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते'। इति विष्णुपुराणवचनञ्च संगच्छते।......अतएव ज्ञापकादस्य ऋक्ष इति रूढनाम। तस्याप्रानुक्तिस्तु आत्मनाम गुरोर्नामेत्यादिस्मृत्या आत्मनामग्रहणस्य निषिद्धत्वात् निषेधस्य च रूढनामविषयत्वात्।' इति।

३ उक्तं हि गोविन्दराजटीकायाम्,—'वल्मीकस्यापत्यं वाल्मीकिः। अत इञ् इति इञ्प्रत्ययः। नन्वसौ कथं वल्मीकापत्यं, यतो भृगुपुत्र एवायं प्रतीयते। तथा च विष्णुपुराणे 'ऋक्षोऽभूद् भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते'। इति। अत्रापि उत्तरकाण्डे वक्ष्यति 'भार्गवेणेति संस्कृतौ' 'भार्गवेण तपस्विना' इति च। अन्यत्र प्रचेतोऽपत्यत्वमभिधीयते। 'चक्रे प्रचेतसः पुत्रस्तं ब्रह्माप्यन्वमन्यत'। इति। 'वेदः प्राचेतसादासी'दिति च प्रसिद्धम्। अतः कथमस्य वल्मीकापत्यत्वम्? उच्यते,—निश्चलतरतपोविशेषेणास्य वल्मीकावृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्य प्रचेतोऽपत्यत्वं वल्मीकापत्यत्वञ्च सङ्गच्छते। ननु कथं तत्प्रभवत्वमात्रेण तदपत्यत्वम्? मैवम् गोणीपुत्रः कलशीसुत इति तत्प्रभवेऽपि बहुलमुपलब्धेः। उक्तं च ब्रह्मवैवर्त्ते—'अथाब्रवीन्महातेजा ब्रह्मा लोकपितामहः। वल्मीकप्रभवो यस्मात् तस्माद् वाल्मीकिरित्यसौ'। इति। मास्तु अपत्यार्थत्वं तथापि वाल्मीकिशब्दः साधुरेव गहादिषु पठितत्वात्। यद्वा भृगुवंश्यः कश्चित् प्रचेता नाम तस्यायं पुत्र ऋक्षो नाम, 'चक्रे प्रचेतसः पुत्र' इति पुत्रत्वाभि-

स्कन्दपुराणे विष्णुखण्डे वैशाखमाहात्म्ये एकविंशाध्याये दृश्यते कृणुर्नाम मुनिः कठोरं तपस्तप्यमानो वल्मीकाच्छन्नदेहतया वल्मीक इति ख्यातो बभूव, तेनैव स्त्रीस्मरणात् स्खलितेन्द्रियेण कस्याश्चित् शैलुष्यामुत्पाद्यमानः किरातधर्मा पुत्रः कालेन रामायणकर्ता वाल्मीकिरिति ख्यातोऽभूत्। (४)

स्कन्दपुराणे आवन्त्यखण्डे अवन्तीक्षेत्रमाहात्म्ये चतुर्विंशाध्याये भृगुवंशजो विप्रः सुमतिर्नाम, तस्य कौशिकी नाम भार्या, तस्यामुत्पन्नस्तस्य पुत्रः अग्निशर्मा नाम ; तस्य वेदादिविमुखस्य दस्युवृत्त्यादिव्यापारास्तदुपशान्तिश्च अध्यात्मरामायणादिवृत्तभागैः प्रायेण तुल्यतां दधते। निरुक्तानि त्रीणि नामानि नान्यत्र समुपलभ्यन्ते। तत्रत्यवृत्तभागः सविस्तरः सुस्पष्टश्च (५)। शतकोटिरामचरितान्तर्गतश्रीमदानन्दरामायणे वाल्मीकीये

---

धानात्। भार्गवभृगुनन्दनशब्दौ रामे राघवरघुनन्दनशब्दवदुन्नेयौ। वाल्मीकिशब्दः पुत्रत्वोपचाराद् अत एव क्वचित् वाल्मीकेन महर्षिणा इति सम्बन्धमात्रे अण् प्रयुज्यते।' इति। ( रामायणे बालकाण्डे १म-सर्गे १म-श्लोकटीका )।

४ कृणुर्नाम मुनिः कश्चित्तस्मिन्नेव सरोवरे।
तपो वै दुस्तरं तेपे बाह्यव्यापारवर्जितः॥
वल्मीकमभवद्देहे तस्य कालेन भूयसा।
वल्मीक इति तं प्राहुरतो वै मुनिपुङ्गवम्॥
पश्चात्तपोविरामान्ते कृणौ स्मृतिपथं गते।
स्त्रियोऽनुस्मरतो राजन् स्खलितं चेन्द्रियं मुनेः॥
जग्राह शैलुषी काचित्तस्यां जज्ञे वनेचरः।
लोके प्रख्यापयामास कर्मबन्धनिकृन्तनीम्॥
( स्कन्दपुराणे विष्णुखण्डे वैशाखमाहात्म्ये २१ अध्यायः )

५ सनत्कुमार उवाच—
आसीद् व्यास पुरा विप्रः सुमतिर्भृगुवंशजः।
रूपयौवनसम्पन्ना तस्य भार्या च कौशिकी॥

राज्यकाण्डे चतुर्दशसर्गे बाल्मीकेरनेकेषां जन्मनां वृत्तान्ताः संमुपलभ्यन्ते। तत्र कुत्रापि रत्नाकर इति नाम नास्ते। आनन्दरामायणस्य निरुक्त-सर्गीयसुविस्तरसन्दर्भपाठेनैव पाठकानां ते सर्वे विषयाः स्कन्दपुराणादितः केचन विशेषाश्च बोधविषयतां यास्यन्तीति ग्रन्थगौरवभिया नेह तत्सन्दर्भाः समुद्ध्रियन्ते। आनन्दरामायणसंसूचिता बाल्मीकेः पूर्ववृत्तान्ताः सुतरां

---

तस्य पुत्रः समुत्पन्नो ह्यग्निशर्मेति नामतः।
स पित्रा प्रोच्यमानोऽपि वेदाभ्यासं न मन्यते॥
ततो बहुतिथे काले ह्यनावृष्टिरजायत।
तस्यां विपद्गतः सोऽथ दक्षिणामाश्रितो दिशम्॥
ततोऽसौ सुमतिर्विप्रः सभार्यः ससुतस्तथा।
विदेशं काननं प्राप्तः कृत्वा आश्रमसाश्रितः॥
आभीरैर्दस्युभिः सार्द्धं सङ्गोऽभूदग्निशर्मणः।
आगच्छति पथानेन यस्तं हन्ति स पापकृत्॥
स्मृतिर्नष्टा गता वेदा गतं गोत्रं गता श्रुतिः।
कस्मिंश्चिदथ काले तु तीर्थयात्राप्रसङ्गतः॥
सप्तर्षयः पथा तेन सुव्रताः समुपस्थिताः।
अग्निशर्माथ तान् दृष्ट्वा हन्तुकामोऽब्रवीदिदम्॥
वस्त्राणीमानि मुच्यध्वं छत्रिकोपानहौ तथा।
हन्तव्या हि मया यूयं गन्तारौ यमसादने॥
तस्य तद् वचनं श्रुत्वा अत्रिर्वचनमब्रवीत्।
अस्मत्पीडनजं पापं कथं ते हृदि वर्तते॥
वयं तपस्विनो भूत्वा तीर्थयात्राकृतोद्यमाः।

अग्निशर्मोवाच—

ममास्ति माताथ पिता सुतो भार्या गरीयसी।
पोषयामि सदा तांस्तु एतन्मे हृदि संस्थितम्।

विस्तृताः सुगमाः सोपपत्तिकाश्चेति तत्पाठाय वाचकमहोदयान् साग्रहं प्रविवर्तयिषामः। वयमस्मिन् रूपके बाल्मीकेः पूर्वनामविषये तत्पितृनाम-

---

अत्रिरुवाच—

पित्रादीनाशु पृच्छस्व स्वकर्मोपार्जितं प्रति।
यद् युष्मदर्थं क्रियते पापं तत् कस्य कथ्यताम्।
यदि ते कथयन्ति स्म मा मृषा प्राणिनोऽवधीः।

अग्निशर्मोवाच—

न कदाचिन्मया ते तु संपृष्टा ईदृशं वचः।
युष्माकं वचसा मेऽद्य प्रतिबोधः प्रवर्तते।
गत्वा पृच्छामि तान् सर्वान् कस्य भावश्च कीदृशः।
यूयमत्रैव तिष्ठध्वं यावदागमनं मम।
इत्युक्त्वा तान् जगामाशु पितरं स्वमुवाच ह।
धर्मस्य प्रतिघातेन प्राणिनां पीडनेन च।
सुमहद्दृश्यते पापं कस्य तत् कथ्यतां मम।
पिता प्राह तथा माता नापुण्यमावयोरिह।
त्वं जानासि यत् कुरुषे कृतं भाव्यं पुनस्त्वया।
तयोस्तद् वचनं श्रुत्वा भार्यां वचनमब्रवीत्।
तयाप्युक्तं न मे पापं पापमेतत्तवैव तु।
तद् वाक्यमब्रवीत् पुत्रं बालोऽहमिति सोऽब्रवीत्।
तज्ज्ञात्वा हृदयं तेषां चेष्टितञ्चैव तत्त्वतः।
नष्टोऽहमिति मन्वानः शरणं मे तपस्विनः।
क्षिप्त्वाथ लगुडं कृष्णं येन वै जन्तवो हताः।
प्रकीर्य केशांस्त्वरित ऋषीणामग्रतः स्थितः।
प्रणम्य दण्डपातेन ततो वचनमब्रवीत्।
न मे माता न च पिता न भार्या न च मे सुतः।

विषये च स्कन्दपुराणादिमतं परिहृत्य वङ्गविषये अन्यत्र च समतिप्रसिद्ध-तया आबालवृद्धं सुदृढसंस्कारगोचरतया च वङ्गभाषामयपद्यरामायण-प्रजापतिकृत्तिवासादिपरिकल्पितं वाल्मीके रत्नाकरेति पूर्वनाम तत्पितुश्च

---

सर्वैस्तैः परिमुक्तोऽहं भवतां शरणं गतः ।
सुष्टूपदेशदानान्मां नरकात्त्रातुमर्हथ ।
एवं तं वादिनं दृष्ट्वा ऋषयोऽत्रिमथाब्रुवन् ।
भवतो वचनादस्य प्रतिबोधः समागतः ।
भवतायमनुग्राह्यः शिष्यो भवतु ते मुने ।
तथेत्युक्त्वाथ तान् प्राह चात्रिर्ध्यानं समाचर ।
अनेन ध्यानयोगेन महामन्त्रजपेन च ।
अनेकदुस्तरात्युग्रपापकृज्जनघातकः ।
संस्थितो वृत्तमूले त्वं परां सिद्धिं गमिष्यसि ।
इत्युक्त्वा ते ययुः सर्वे सकामं सोऽपि तत्र वै ।
तद् ध्यानस्थोऽभवद् योगी वत्सराणि त्रयोदश ।
तस्योपर्यभवत्तस्य वल्मीकोऽविचलस्य च ।
निवृत्तास्तु पथा तेन मुनयस्तत्र शुश्रुवुः ।
उदीरितं ध्वनिं तेन वल्मीके विस्मयान्विताः ।
ततः खनित्वा वल्मीकं काष्ठीभूतोरुशङ्कुभिः ।
तं दृष्ट्वोत्थापयामासुर्मुनयो नयसंयुतम् ।
नमश्चक्रेऽथ तान् सर्वान् स विप्रो मुनिपुङ्गवान् ।
तान् प्राह प्रणतो भूत्वा तपसा दीप्ततेजसः ।
प्रसादाद् भवतामद्य ज्ञानं लब्धं मया शुभम् ।
दीनोऽहमुद्धृतः सर्वैर्मग्नोऽहं पापकर्दमे ।
श्रुत्वा तस्येति तद् वाक्यमूचुः परमधार्मिकाः ।
वल्मीकेऽस्मिन् स्थितः पुत्र यतस्त्वमेकचित्ततः ।

च्यवनेति नामैव समवलम्बितवन्तः। बङ्गभाषामयरामायणकविः कृत्तिवासः पुनः कुतो मूलग्रन्थादेतन्नामद्वयम् आसादितवानिति नैव निर्णेतुमर्हामः। अस्तु तस्य मूलं मास्तु वा, वयन्तु केवलं तदीयनाम्नोः सर्वत्र सामाजिकेषु सुचिरात् प्रभृत्येव प्रचरद्रूपत्वात् तदन्यथाकारेण सामाजिकानां भावविच्छेद-माशङ्कमानाः तदनुसृतामेव सरणिं सम्भावयन्तः स्वकृतौ तदुपादानं कुर्मः। तदत्र पुराणविदामुपपत्तिमतीं क्षमां समनुभवितुमिच्छामः। (६)

---

वाल्मीकिरिति ते नाम भुवि ख्यातं भविष्यति।
इत्युक्त्वा मुनयो जग्मुः स्वां दिशं तपसान्विताः!
गतेषु मुनिमुख्येषु वाल्मीकिस्तपतां वरः।
कुशस्थल्यामथागम्य समाराध्य महेश्वरम्।
तस्मात् कवित्वमासाद्य चक्रे काव्यं मनोरमम्।
रामायणञ्च यत् प्राहुः कथां सुप्रथमस्थिताम्। इति
(स्कन्दपुराणे आवन्त्यखण्डे अवन्तीक्षेत्रमाहात्म्ये २४ अध्यायः)

६ उक्तं हि कृत्तिवासेन वङ्गभाषामयपद्यरामायणे रामायणोत्पत्तिप्रकरणे—

'च्यवन मुनिर पुत्र नाम रत्नाकर
दस्युवृत्ति करे सेइ बनेर भितर।
... ... ...
ब्रह्मा वले तव नाम रत्नाकर छिल
आजि हइते तव नाम वाल्मीकि हइल।
येइ राम नाम हैते हइला पवित्र
सेइ ग्रन्थ रच गिया रामेर चरित्र।

अस्यानुवादः—

च्यवनस्य मुनेः पुत्रो रत्नाकर इति श्रुतः।
गहनाभ्यन्तरे सोऽसौ दस्युवृत्तिपरोऽभवत्।
... ... ... ...

अध्यात्मरामायणादि-प्राचीनसाहित्यग्रन्थप्रसिद्धं वाल्मीकेः पूर्वं वृत्तं सूत्रमात्ररूपेण परिगृहीतवता मया प्रकृतरूपकनिर्माणे प्रारम्भादन्तपर्यन्तं वस्तुविनियोगे शीलपरिकल्पने च

'यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्' ॥
'अविरुद्धं तु यद् वृत्तं रसादिव्यक्तयेऽधिकम् ।
तदप्यन्यथयेद्धीमान न वदेद् वा कदाचन' ॥

इत्याद्यालङ्कारिकवचनबलादेव यदवलम्बितं निरङ्कुशं स्वातन्त्र्यं, तेन नाटकीयवस्तुनि प्रकर्षो वा भूयानपकर्षो वेत्यत्र श्रीमतां रसभावानुभवदक्षाणां विबुधधौरेयाणामेव निरपेक्षं विचारं प्रमाणकोटौ स्थापयामः ।

अत्र हि रूपके सामाजिकानां बोधसौकर्याय रसप्रतीतिविलम्बप्रयुक्तलोकातीतसुखविच्छेदपरीहाराय च गद्यभागेषु पद्यभागेषु सङ्गीतकदम्बकेषु च यथासम्भवं दुरूहपदादिसन्नियोगपरिहारेण सन्निवेशिताः सुपठाः सुगमार्थशब्दसम्भाराः । न खलु तथा समुपयुज्यन्ते विचित्रालङ्कारवक्रोक्त्यादिसमुपबृंहिता वाक्पद्धतयो रूपकेष्वभिनयप्रधानेषु यथा कथाकाव्य-महाकाव्यखण्डकाव्यादिकेषु । अत एव नितरामनिच्छतामपि रूपककाव्यनिर्मातॄणां प्रवर्तितव्यमीदृशे वैचित्र्यविशेषपरिशून्ये वाङ्मयमार्गे । आशास्महे यदेतत् सर्वमनाकुलं विचार्य रूपकवाङ्मयसमालोचनायां निपुणधियः प्रवर्तिष्यन्ते ।

किञ्च साम्प्रतिके काले संस्कृतविद्यागरिष्ठेषु प्राकृतभाषाया विशेषतः प्रचारविरहेण प्राकृतभाषामयाः स्वल्पाः सुगमार्थाश्चापि सन्दर्भाः सातिशयमायासं विना सर्वे स्वमर्थं नैव बोधपदवीं लम्भयन्ति, समुत्पादयन्ति चातिमात्रं

---

ब्रह्मोवाच समाख्या ते रत्नाकर इति स्थिता ।
अद्य प्रभृति ते नाम बाल्मीकिरिति संस्थितम् ।
यतो रामाभिधानात्त्वं सम्प्राप्तोऽसि पवित्रताम् ।
ग्रन्थं रचय तस्मात्त्वं श्रीरामचरिताश्रयम् ।

विरागमन्तःकरणस्य। तत एव साम्प्रतं बहुत्र रूपकप्रयोक्तारः सामाजिकानां त्वरितरसोन्मेषमपेक्षमाणाः तत्तत्पात्रप्रयोक्तव्यप्राकृतभाषामयसन्दर्भाणां विपरिवर्तनेन प्रयुञ्जते गीर्वाणवाणीमयानेव वचनसङ्घातान्। अत एवास्माभिरपि प्रकृते रूपके प्राचीनालङ्कारिकोपदिष्टं नयमतिक्रम्य सर्वेषां पात्राणामविशेषेण संस्कृतपदमयान्येव वाक्यानि विनियोजितानि। तदेव सामाजिकानामनायासवस्तुविज्ञानाय त्वरित-रसोन्मेषाय च समुपयुक्तमिति प्राचीननयातिक्रममप्यदोषं मन्यमानाः सन्तुष्यामः।

सुविदितमेवैतत् सहृदयगोष्ठीगरिष्ठानां यत् कालक्रमानुसारेण विविधशिल्पकलादीनां क्रमिकाभ्युदयव्यपेक्षया च मानसिकवासनाभेदाः समुपजायन्ते सामाजिकानामिति। यत्र किल काले प्रयोगमभिसन्धाय यद् रूपकं समपेक्ष्यते, तत्र तत्कालानुगुणगुणानुबन्धिविषयसङ्घातो नोपसंहितश्चेत् नोपयुज्यते तदिदं सन्तोषाय निःशेषाय तत्कालप्रभवाणां सामाजिकनिकुरम्बाणाम्। तदनुरोधादेव साम्प्रतिकसामाजिकभावानुगुणवस्तुसन्निवेशाय कृतोऽत्र मया यथामति प्रयत्नो भूयान्। साफल्ये वैफल्ये वा तत्प्रयत्नस्य रूपदक्षाणां गुणदोषप्रविभागविदां विदुषां रसिकतज्ज्ञानाञ्च निरपेक्षमन्तःकरणमेव प्रमाणं, नान्यत्।

इदमत्र प्राप्तकालमभिधेयं यत् साम्प्रतं तत्तत्प्रदेशेषु सत्यपि तत्तन्माण्डलिक-व्यवहारानुकूलप्राकृतापभ्रंशभाषाप्रसारे सकलभाषाप्रसूतेः संस्कृतभाषायाः सार्वजनीनायाः सकलदेशसाधारण्या अपि नैव तावान् प्रसारः समादरो लोकायतेषु प्रयोजनेषु समुपयोगो वा विज्ञानगोचरताम्प्रतिपद्यते। तत एव हि साम्प्रतं नाविर्भवन्ति यथाकाममुत्कर्षवन्तः काव्यग्रन्था, नापि परितो मण्डयन्ति संस्कृतसाहित्यभाण्डागारं नवीननिबन्धकारसमुपहृतानि नवीनानि प्रशस्तिभाजनानि दार्शनिकादिनिबन्धरत्नानि। दुराग्रहवशेन हन्त केनचिद् विरचितेऽपि कस्मिंश्चित् संस्कृतनिबन्धे दुर्लभाः खलु कथञ्चित् तत्पाठपरिश्रमस्वीकर्तारोऽपि। निबन्धकारैः स्वीयवस्तुनो गौरवज्ञानप्रेरणया वा स्वकृतेः प्रकर्षपरीक्षणकाम्यया वा परप्रतिपादनेनात्म-

निबन्धस्य साफल्यसम्पिपादयिषया वा कथञ्चित् केचित् तदाकर्णने प्रवर्तिता अपि किञ्चित्कालोत्तरमसमाप्त एव निबन्धश्रवणे विमनायमानाः समुत्पादयन्ति तेषां निबन्धकृतां महान्तमान्तरं खेदम्। तत्तत्कारणकदम्बकेनैवाद्य लोके तिरोधानेन नवीनसंस्कृतग्रन्थनिर्माणसमारम्भसमुत्साहस्य क्रमशः क्षीणक्षीणतामाससाद भगवती कल्याणवती गैर्वाणी वाणी। इत्थं समापतितेऽपि भगवत्या गीर्वाणवाण्या वराकाणां तदीयसेवकानाञ्च सुमहत्येव विपत्सन्निपाते यदेषा संस्कृतसाहित्यपरिषत् संस्कृतसाहित्यसमुन्नयनैकव्रता मदीयामिमामतिक्षुद्रामपि कृतिं स्वीयद्रविणराशिव्ययेन निरतिशयसमुत्साहेन च प्राकाश्यं नीतवती तेनास्याः सुगभीरामान्तरिकीं कृतवेदितां निवेदयामः।

किञ्च एतदनुबन्धिका-सम्बन्धिवस्तुनिकुरम्बनिबन्धने मदीयसुयोग्यच्छात्रचरस्य वेथुनकलेजाख्यराजकीयमहाविद्यालयाध्यापकस्य श्रीमतः चिन्ताहरणचक्रवर्तिकाव्यतीर्थस्य रत्नाकरवृत्तान्तप्रतिपादकवङ्गभाषामयनिबन्धात् समासादितो मया सुमहानुपकारः, तथा एतद्ग्रन्थमुद्रापणादिविधौ मदीयप्रियच्छात्रस्य संस्कृतभाषामयनैकनिबन्धनिर्माणेन नैकग्रन्थसम्पादनाद्युत्कर्षेण च लब्धवर्णस्य प्रतिभानवतः संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकस्य श्रीमत् उपेन्द्रमोहनकाव्यसांख्यतीर्थस्यायुष्मतः संशोधनादिकृत्यपरम्परया समासादितं सुमहत् साहायकमिति ताविमौ नितरामाशिषा वर्द्धयामः।

अन्ते च सप्रश्रयं साशङ्कं सोपचारञ्च विशेषविदुषो वाचकमहत्तमान् अर्थयामहे, यद् भ्रमधर्मतया मानुषाणां स्वल्पज्ञतया च प्रकृतग्रन्थनिर्माणसाहसिकस्य प्रतिपदमेवात्र सम्भाव्यमानान् दोषानमी स्वभावसुलभकारुण्यप्रचयेन परिहरन्तः क्वाचित्कमपि सन्तं गुणलेशं बहुलीकुर्वाणा मदीयप्रकृतग्रन्थनिर्माणपरिश्रमं नयन्तु सफलताम् इति शम्।

---

# धार्मिकेतिकर्तव्यता

[ निबन्धकः—कुप्पा श्रीआञ्जनेयशास्त्री ]

अस्मिन् भारते धर्मदेशेऽऽधुनार्षधर्मस्य महानुपप्लवः प्रादुर्भूतः। विषमेऽस्मिन् समये धार्मिकाणां कीदृशीतिकर्तव्यता ? यां नावमाश्रित्य उपप्लवार्णवमतितरामतितरेदार्षधर्म इत्ययं प्रश्नः सर्वानप्यास्तिकाग्रगण्यान् निमज्जयति विचाराम्बुधौ। तत्र वयं यथाशक्त्युपायनिवेदनेनास्माकीनसंवित्सार्थक्यमनुभवामः। अस्मदीयेऽल्पे प्रयत्ने गुणग्रहणपारीणा भवन्त्विति साञ्जलिबन्धमभ्यर्थयामहे सहृदयाग्रगण्यान् विद्वद्वरेण्यान्। धर्मविषये प्रस्तुतराजकीयशासननिर्मूलनाय प्रस्तुतराजकीयशासनसभासु धर्मपक्षपातिसज्जनप्रवेशनेन, तादृग्जनसङ्ख्याधिक्य( Majority )सम्पादनेन च स्वातन्त्र्यं सम्पादनीयम्। तेन च तन्निर्मूलनं सुलभम्। स च सभाप्रवेशो देशेऽस्मिन् सर्वस्मिन्नपि बहुधा धर्मप्रचारमन्तरा न सम्भवति। ततो धर्मप्रचारादेव अस्मदीयानां जनसम्मतयः (Votes) सुबहुश आपतिष्यन्ति। स च प्रचार आस्तिकाग्रगण्यैरलोलुपैः ( सवेतनैरवेतनैर्वा ) लौकिकैः पाश्चात्यविद्यासमर्थैर्वैदिकैश्च प्राच्यविद्यानिपुणैः कारयितव्यः। तेषाञ्च प्रचारकाणां वर्णाश्रमतत्त्वावबोधनाय, विशेषतः सर्वधर्माणामैहिकप्रयोजनावेदनाय च सर्वविधवैदुषीसमलङ्कृतपण्डितपरिमण्डितायाः सभायाः साहायकम् आवश्यकम्। तया च सभया देशीयविद्वन्मणिभ्यः कश्चन कश्चन धर्ममधिकृत्य वैद्यकानुसारेण नीत्यादिनिखिलशास्त्रानुसारेण च यानि लौकिकप्रयोजनानि सन्ति तानि सर्वाण्यपि व्यासरूपेण संग्रहीतव्यानि। अत्र धर्मपक्षपातिदेशभाषापत्रिकादिसाहायकमप्यावश्यकम्। अखिलस्यैतत्कार्यभारस्य निर्वहणाय धनसाहायकमेव मुख्यतमम्। अतस्तादृशीं सभां निर्माय, निर्मितां वा सभामुक्तलक्षणलक्षितां कृत्वा यावच्छक्ति धनं सम्पाद्य उक्तप्रकारेण प्रचारः कारयितव्यः। एवं सत्यवश्यं फलोपलब्धिर्भविष्यति। एतदेवाद्यतनदेशकालानुरोधि शास्त्राविरोधि च। तदेतदसंशयमृषिसम्मतं भवत्येव। अशिष्टाप्रतिषिद्धमपि वा भवेत्। इति केचित्।

अन्ये त्वेवं भणन्ति—नायमनुकूलः पन्थाः। यदि विपुलावकाशोऽभ-

विष्यत तदाऽऽचरणयोग्यः फलकारी चायमभविष्यत । न तथाऽद्य । महात्मगान्धिमहाशयस्य विजृम्भणात्पूर्वं तत्समकालं वाऽयमुद्यमः परिग्रहीतव्यः स्यात तदाऽवश्यं फलकारी भवेदेव । इदानीन्तु तन्मतं दिगन्तव्याप्तमभवत । तदीयाः प्रबला भूत्वा राज्यमप्याक्रम्य क्षणे क्षणे एकमेकं शासनं, पदे पदे एकमेकमभयशासनं (Ordinance) च कुर्वन्ति । तैश्च पुनःशासनायुधानि नूतनानि निर्माय, पुरातनानि च शातयित्वा धार्मिकशिरःसु प्रक्षिप्यन्ते । अतः कदाचित्स मार्गोऽपीदानीममार्ग एव, यतो भवने दह्यमाने कूपखननयत्नतुल्यः । इदानीन्तनधार्मिकावस्था "अग्रे व्याधः करधृतधनुः पार्श्वयोर्जालमाले पृष्ठे वह्निर्दहति विपिनं सर्वतः सारमेयाः । एणी गर्भादलसगमना डिम्भकैर्लग्नपादा"—इत्यादिकुरङ्गपञ्चकोक्तैतदेण्यवस्थासदृशी । अत एव मन्ये समन्तादूभयभीता एणी यथा निःसहाया "लक्ष्मीनाथ त्वमसि शरणं किं करोमि क यामी"त्येवं लक्ष्मीनाथमेव तथाभूतायां विपत्तौ शरणमापन्ना, अस्माकमपि तथात्र स एव शरणम्, नान्यः । नूनं तच्छरणागतिरेवास्मदिष्टसाधनम् । इतिकर्तव्यता तु विदितचरैवास्तिकानां सर्वेषामपि । एवमेव सर्वे वयं प्रतिज्ञापूर्वकं बोधिता गीतोपदेष्ट्रा भगवता—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" इत्यनेन । इदमत्र हृदयं भगवतः—यदा वर्णाश्रमधर्मस्य हानिर्भवति अधर्मस्य चाभ्युत्थितिस्तदाऽऽत्मानं सृजाम्येव । नात्र स्वल्पोऽपि संशयः कार्य इति । इदमीश्वरहृदयं ये जानन्ति, ते तदाराधनं विना अन्यत्साधनं धर्मरक्षणायास्तीति न मनसाऽप्यूरीकुर्वन्ति । तथा यतमानेषु मध्ये कस्मिंश्चित्काले केषांचिद्बन्धनं सम्भवेत् । पुनः कुत्रचित्काले कैश्चिद्भाग्यशालिभिः फलमनुभावयिष्यति भगवान स्वप्रतिज्ञाभङ्गभीरुः । पूर्वेषामपि भगवदाराधनस्येदमेव फलं यद्धर्मरक्षणाख्यम् । विषयेऽस्मिन्नेषा रामायणगाथाऽपि विशेषेणादर्तव्या तात्पर्यतः । श्रीमद्रामायणेऽरण्यकाण्डे षष्ठसर्गः—

"वैखानसा बालखिल्याः सम्प्रक्षाला मरीचिपाः ।...
सजपाश्च तपोनित्यास्तथा पञ्चतपोऽन्विताः ।

सर्वे ब्राह्मया श्रिया जुष्टा हठयोगाः समाहिताः।
शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः।...
एहि पश्य शरीराणि मुनीनां भावितात्मनाम्।
हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने।...
एवं वयं न मृष्यामो विप्रकारं तपस्विनाम्।
क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः।
ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः।
परिपालय नो राम! वध्यमानान्निशाचरैः।...
एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम्।
इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः।
नैवमर्हथ मां वक्तुमाज्ञप्तोऽहं तपस्विनाम्।
केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम्।
विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम्।" इति

एते महर्षय आहारनियमोपपन्ना उग्रव्रतास्तीव्रतपसो ब्राह्मश्रिया जुष्टा धर्मध्वंसिराक्षसैर्बहुधाऽपकृता विनिहतसत्क्रियाः सन्तो राक्षसेभ्यो धर्मं प्राणांश्च रक्षितुमपारयन्तस्तदर्थमवतीर्णं श्रीरामं शरणं जग्मुः। श्रीरामस्तु धर्मरक्षणमात्मकृत्यमिति प्रकटयन् स्वकृत्यं निर्वाहयामास इत्यनेन कथनेन धर्मे रक्षितव्ये जायमानायाः साधनाकाङ्क्षाया इतिकर्तव्यताकाङ्क्षायाश्च शान्तिरुक्त-विधिनैव कार्येति स्पष्टं प्रतिपाद्यते इति।

वयन्तु ब्रूमः—

एतन्मतद्वयसम्मेलनमावश्यकमिति। मतद्वयसम्मेलनं नाम भगव-दाराधनपुरस्सरं फलं भगवदायत्तं निश्चित्य, एतत्कालोचितस्य पूर्वोक्तसभा-निर्माणधर्मप्रचारादिकस्य निर्वहणमेव। न चात्र वृद्धसम्मतिर्नास्तीति भ्रमितव्यम्। भगवत्सम्मतेरेव सत्त्वात्। तथा हि :—"कर्मण्येवाधि-कारस्ते मा फलेषु कदाचन" इत्यादिभिरुद्बोध्य पार्थं युद्धाय प्रोत्साहयतो गीतोपदेष्टुर्भगवत इदमेव हृदयमिति शिवम्।

# संस्कृत-साहित्य-परिषत्

## आवेदन

सविनय निवेदन—

कलकत्ते का संस्कृत-साहित्य-परिषत् एक विशिष्ट जातीय साहित्य प्रतिष्ठान है। आज २४ वर्ष से यह प्रतिष्ठान हर प्रकार के विघ्न बाधाओं को झेलते हुए एकाग्रता के साथ देवभाषा संस्कृत की सेवा करता आरहा है। हाल ही में कलकत्ता कारपोरेशन ने राजा दीनेन्द्र स्ट्रीट पर ५ कट्ठा जमीन ९९ वर्ष की लीज में नाम मात्र लगान पर दे दिया है। लेकिन लीज की यह शर्त है कि २ वर्ष के अन्दर इस जमीन पर मकान बनवा लेना ही पड़ेगा। इस मकान के बनवाने में लगभग ५० हजार रुपये की आवश्यकता है। संस्कृत-साहित्य-परिषत् के गत वार्षिक अधिवेशन में सभापति श्रीमान् **स्यर नृपेन्द्र-नाथ सरकार** महोदय ने परिषत्-भवन-निर्माण के लिये १०००) रुपये चन्दा देने का वचन दिया है, और साथ ही हिन्दुमात्र से यह निवेदन किया है कि **"अगर हम हिन्दुओं के रहते हुए परिषत् का भवन न बन सका तो हम हिन्दुओं के लिये अत्यन्त लज्जाकी बात होगी"**।

अतः भारतके समस्त संस्कृत साहित्य प्रेमियों से सादर निवेदन है कि, **परिषत् के गृह-निर्माण के लिये यथाशक्ति सहायता प्रदान कर भगवती वीणापाणि वाग्देवी की आशीर्वाद प्राप्तकर यश के भागी बनें।** इति

**निवेदक**

(महामहोपाध्याय) श्रीप्रमथनाथ तर्कभूषण
,, श्रीदुर्गाचरण सांख्य-वेदान्ततीर्थ
,, श्रीअनन्तकृष्ण शास्त्री
श्रीसुभाषचन्द्र वसु
श्रीशरच्चन्द्र वसु
(स्यर) श्रीमन्मथनाथ मुखोपाध्याय
श्रीयतीन्द्रनाथ वसु
श्रीश्यामाप्रसाद मुखोपाध्याय

(स्यर) श्रीवद्रिदास गोयेनका
श्रीवैजनाथ वाजोरिया
श्रीदामोदर दास खान्ना
श्रीहीरेन्द्रनाथ दत्त
(राजा) श्रीकमलारञ्जन राय
श्रीहरिहर शेठ
(Sir) S. Radhakrishnan.
W. C. Wordsworth.

**संस्कृत-साहित्य-परिषत्**
१७, आर. जि. कर रोड, श्यामवाजार,
कलकत्ता।

श्रीअमरेश्वर ठाकुर
श्रीगणपति सरकार
( मन्त्री, संस्कृत-साहित्य परिषत् )

---

सहायता भेजने का पत्ता—श्रीयुक्त अशोकनाथ शास्त्री,
पि. आर. एस.—४१, वागबाजार ष्ट्रीट, कलकत्ता।

# Opinions on the activities of the Parishat

We visited the Sahitya-Parishad this morning and saw the manuscripts collected in the office and books published by the Parishad. There is no doubt that the Parishat is doing excellent work in the dissemination of Sanskrit language and culture. The effort they are making to popularise the speaking of Sanskrit is very admirable. We saw yesterday two Sanskrit dramas staged by them and were very much struck by the excellent acting and music that we saw there. We rarely come across such good performance even on the Western stage. But what surprised us most is the remarkable mastery over the Sanskrit language and its flawless pronunciation. We wish the Parishad greater and greater prosperity and success.

18/12/39.

A. S. ALTEKAR,

Head of the Culture Dept. & President, Archaic Section, Indian History Congress)

V. V. MIRASHI

(Head of the Department of Sanskrit, Nagpur University)

Y. M. KALE

(B. A., LL. B.—Pleader, Buldana, Berar)

Y. K. DESHPANDE

M.A., LL.B., M.R.A.S., Representative of Saradashram, Yeotmal, Berar)

LOCHAN PRASAD PANDEYA

Kavyavinode (Bakpur, *via* Ramgarh, B. N. Rly.).

